इत्यामुखम् ।

(प्रविश्य प्रावारहस्त ।)

**मैत्रेय** —('अण्ण बम्हण' इति पूर्वोक्त पठित्वा।) अथ वा मयाऽपि मैत्रेयेण परस्यामन्त्रणकानि प्रेक्षितव्यानि । हा अवस्थे तुलयसि । यो नामाह तत्रभवतश्चारुदत्तस्य ऋद्धयाऽहोरात्र प्रयत्नसिद्धैरुद्गारसुरभिगन्धिभिर्मोदकैरेवाशितोऽभ्यन्तरचतु - शालकद्वार उपविष्टो मल्लकशतपरिवृतश्चित्रकर इवाङ्गुलीभि स्पृष्ट्वा स्पृष्ट्वाऽपनयामि नगरचत्वरवृषभ इव रोमन्थायमानस्तिष्ठामि स इदानीमह तस्य दरिद्रतया यत्र तत्र चरित्वा गृहपारावत इवावासनिमित्तमत्रागच्छामि । एष चार्यचारुदत्तस्य प्रियवयस्येन चूर्णवृद्धेन जातीकुसुमवासित प्रावारकोऽनुप्रेषित सिद्धीकृतदेवकार्यस्यार्यचारुदत्तस्योपनेतव्य इति । तद्यावदार्यचारुदत्त पश्यामि । (परिक्रम्यावलोक्य च ।) एष आर्य चारुदत्त सिद्धीकृतदेवकार्यो गृहदेवताना बलि हरन्नित एवागच्छति । (अध वा मए वि मित्तेएण परस्स आमन्तणआइ पच्छिदव्वाइ[1] । हा अवत्थे तुलीअसि । जो णाम[2] अह तत्तभवदो चारुदत्तस्य रिद्धीए अहोरत्त पअतणसिद्धेहि उग्गारसुरहिगन्धेहि मोदकेहि ज्जेव असिदो अब्भन्तरचदुस्सालअदुआए[3] उवविट्ठो मल्लकसदपरिवुदो[4] चित्तअरो विअ अङगुलीहि[5] छिविअ छिविअ अवणेमि णअरचत्तरवुसहो विअ रोमन्थाअमाणो चिठ्ठामि सो दाणि अह तस्स दलिद्ददाए जहि[6] तहि चरिअ गेहपारावदो विअ आवासणिमित्त इध आअच्छामि । एसो अ अज्जचारुदत्तस्स पिअवअस्सेण चुण्णवुड्ढेण जादीकुसुमवासिदो [7]पावारओ अनुप्पेसिदो सिद्धीकिददेवकज्जस्स अज्जचारुदत्तस्स उवणेदव्वो त्ति । ता जाव अज्जचारुदत्त पेक्खामि । एसो अज्जचारुदत्तो सिद्धीकिददेवकज्जो गिहदेवदाण बलि हरेन्तो[9] इदो ज्जेव आअच्छदि ।)

(तत प्रविशति यथानिर्दिष्टश्चारुदत्तो रदनिका च ।)

**चारुदत्त** —(ऊर्ध्वमवलोक्य सनिर्वेद नि श्वस्य ।)

**यासा बलि सपदि मद्गृहदेहलीना**
**हसैश्च सारसगणैश्च विलुप्तपूर्व ।**
**तास्वेव सप्रति विरूढतृणाङ्कुरासु**
**बीजाञ्जलि पतति कीटमुखावलीढ ॥ ९ ॥**

(इति मन्द मन्द परिक्रम्योपविशति ।)

---

१ भक्खिदव्वाई (भक्षितव्यानि) २ दाणि ३ चतु साल ४ गल्लक, उणो उणो चेडजणदिण्ण सव्वोवक्करजुत्तं णिज्जिदसुवण्णवण्णाणेअपत्तघडिद तम्बोलं चव्विज्जन्तो (पुन पुनश्चेटजनदत्त सर्वोपस्करयुक्त निर्जितसुवर्णवर्णानिकपत्रघटितं ताम्बूल चर्वयन् ) ५ अग्गङ्गुलीहि ६ तहि तहि ७ जूण्ण०. ८ पावरओ. ९ करेन्तो ( कुर्वन्. )

END OF THE PROLOGUE

( *Entering with a cloak in his hand* )

MAITREYA—( *Having repeated—'Sir, you should invite' &c., uttered before* ) Or I, too, Maitreya, have to look for invitations from others! Ah! Fortune, you do indeed make light of a person! I, who, indeed, when my friend Charudatta was prosperous, used to feed, day and night, upon the sweetmeats, emitting savoury smells at the effusion of breath, and prepared with great care, and who, sitting at the entrance of his interior quadrangle, surrounded by hundreds of dishes, used repeatedly to touch them with my fingers and put them aside ( when satiated ), just like a painter surrounded by hundreds of colour pots ( touching each with his fingers and removing it after use ), and who used to remain, ruminating like a bull in a ( public ) square of the city,— I, the very same man, now take my food anywhere at random, owing to his being reduced to poverty, and come here like a domestic pigeon merely to rest ( at night ) Churnavriddha, who is a dear friend of our noble Charudatta, has sent by me this cloak scented with jasmine-flowers, asking that it should be presented to the noble Charudatta after he has finished his ( daily ) worship of the gods Well, then, I will first see Charudatta ( *Walking about and observing* ) Here comes Charudatta in this very direction, carrying the *Bali* ( offering ) to the household deities after having finished his worship of the gods

( *Then enter* Charudatta *as described, and* Radanika ).

CHARUDATTA—( *Looking upwards and sighing dejectedly* )

On the grounds near the thresholds of my house, the ( ample ) offering ( of food ) made whereon was formerly eagerly eaten by swans and flocks of doves,—on those same grounds now overgrown with shoots of grass, ( an offering consisting of ) a handful of corn falls to be devoured by insects' mouths (9)

( *With these words he walks about slowly and slowly, and sits down* ).

---

वा । एतच्चाविश्वसनीयतया निर्धनाना ज्ञेयम् । जुगुप्सा मित्राणामिति । प्रत्युप-कारासमर्थत्वात् । स्वजनाना बन्धूनाम् । जनानामन्येषामुदासीनानाम् । विद्वेषस्य करण कृति [ साधन वा ] । कर्तरि करणे वा ल्युट् । भवति चेति चकारो हेतौ । वनगमने कलत्रपरिभवो हेतु । [ मालारूपकम् । शिखरिणी वृत्तम् । 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति लक्षणम् ] ॥ १५ ॥ न [ प्रसीदन्ति ] फल दर्शयन्ति । सित्योऽय

**विदूषक**—एष आर्यचारुदत्त । तद्यावत्साप्रतमुपसर्पामि । ( उपसृत्य । ) स्वति भवते । वर्धता भवान् । (एसो अज्जचारुदत्तो । ता जाव सपद उवसप्पामि[१]। सोत्थि भवदे । वड्ढदु भव ।)

**चारुदत्त**—अये सर्वकालमित्र[२] मैत्रेय प्राप्त । सखे स्वागतम् । आस्यताम् ।

**विदूषक**—यद्भवानाज्ञापयति । (उपविश्य ।) भो वयस्य एष ते प्रियवयस्येन चूर्णवृद्धेन जातीकुसुमवासित प्रावारकोऽनुप्रेषित सिद्धीकृतदेवकार्यस्यार्यचारुदत्तस्य त्वयोपनेतव्य इति । ( ज भव आणवेदि । भो वअस्स एसो दे पिअवअस्सेण चुण्णवुड्ढेण जादीकुसुमवासिदो पावारओ अणुप्पेसिदो सिद्धीकिददेवकज्जस्स अज्जचारुदत्तस्स[३] तुए उवणेदव्वो त्ति ।) (समर्पयति ।)

**चारुदत्त**—( गृहीत्वा सचिन्त स्थित । )

**विदूषक**—भो किमिद चिन्त्यते । (भो किं इद चिन्तीअदि । )

**चारुदत्त**—वयस्य ।

**सुख हि दु.खान्यनुभूय शोभते घनान्धकारेष्विव दीपदर्शनम् ।**
**सुखात्तु यो याति नरो दरिद्रता धृत[४] शरीरेण मृत स जीवति ॥ १० ॥**

**विदूषक**—भो वयस्य मरणाद्दारिद्र्याद्वा कतरत्ते रोचते । ( भो वअस्स मरणादो दालिद्दादो वा कदर दे रोअदि ।)

**चारुदत्त**—वयस्य ।

**दारिद्र्यान्मरणाद्वा मरण मम रोचते न दारिद्र्यम् ।**
**अल्पक्लेश मरण दारिद्र्यमनन्तक दु.खम् ॥ ११ ॥**

**विदूषक**—भो वयस्य अल सतप्तेन । प्रणयिजनसक्रामितविभवस्य सुरजन-पीतशेषस्य प्रतिपच्चन्द्रस्येव परिक्षयोऽपि तेऽधिकतर रमणीय । (भो वअस्स अलं सतप्पिदेण[५] । पणइजणसकामिदविहवस्स सुरजणपीदसेसस्स पडिवच्चन्दस्स विअ परिक्खओ वि दे अहिअदर रमणीओ ।)

**चारुदत्त**—वयस्य । न ममार्थान्प्रति दैन्यम् । पश्य ।

**एतत्तु मा दहति यद्गृहमस्मदीय**
**क्षीणार्थमित्यतिथय परिवर्जयन्ति ।**
**सशुष्कसान्द्रमदलेखमिव भ्रमन्त**
**कालात्यये मधुकरा करिण कपोलम् ॥ १२॥**

---

विधि । अकरणे प्रत्यवायात् । तपसेति । [ तपसा व्रताद्याचरणेन । बलिकर्मभिश्च पूजिता देवता शमिना शमवता फलाप्राप्तौ अकुप्यतामित्यर्थ । नित्य तुष्यन्ति ।

---

१ पविसामि. २ सार्वकाल. ३ अज्जस्स ४ मृत शरीरेण धृत ५ सदाविदेण.

VIDUSHAKA—Here is Charudatta. Well, then, I shal now approach him. ( *Going up to him* ) My greetings to you May you ( ever ) prosper !

CHAR —Ah ! Here comes Maitreya, our friend at all times ( good or bad ). Friend, you are welcome , please be seated.

VID —As you command ( *Sitting* ) Friend, your dear friend Churnavriddaa has sent by me this cloak, scented with the blossoms of jasmine asking me to present it to you when you had finished your worship of the deities. ( *He hands it over* )

CHAR —( *Takes it and remains absorbed in thought* )

VID —Friend, what is this that you are thinking about ?

CHAR —Friend,

Verily happiness appears splendid ( tastes pleasanter ) after a person has experienced troubles, like the sight of a lamp when there has been pitchy darkness But, when a man is reduced to penury after he has enjoyed luxury, he lives a dead man, existing only by keeping up his body (10)

VID —O friend, out of death or poverty, which do you prefer ?

CHAR —Friend,

Out of ( these two, *viz.* ) poverty and death, I like death, but not poverty ( For ) death causes short-lived pain, while poverty is ( *i e* entails ) unending misery. (11)

VID —Friend, you need not worry yourself. Even the reduced condition of you, who have bestowed your wealth on the needy, looks more charming, like that of the moon of the first day ( of the lunar month ), that remains after it has been drunk up by the gods

CHAR —Friend, my misery is not due to (my loss of) money Observe —

This alone burns ( pains ) me that guests avoid ( coming to ) my house because it has lost its riches, just as the bees, flying off ( to another place ), desert, when the season ( of ichor-flow ) has passed away, the elephant's cheek, the thick line of rut whereon has totally dried up. (12)

---

विचारितैः वितर्कैः किम् । न कोऽपि लाभ इत्यर्थः । ] तुष्यन्ति परलोकमुत्कृष्ट प्रयच्छन्ति । यत श्राद्धकृदतिथिप्रियो गृहस्थोऽपि मुच्यत इति भावः ॥ १६ ॥

**विदूषक**—भो वयस्य एते खलु दास्या पुत्रा अर्थकल्यवर्ता वरटाभीता इव गोपालदारका अरण्ये यत्र यत्र न खाद्यन्ते तत्र तत्र गच्छन्ति। ( भो वअस्स एदे क्खु दासीएपुत्ता अत्थकल्लवत्ता वरडाभीदा विअ गोवालदारआ अरण्णे जहिं जहिं ण खज्जन्ति तहिं तहिं गच्छन्ति।)

**चारुदत्त**—वयस्य।

> **सत्य न मे विभवनाशकृताऽस्ति चिन्ता**
> **भाग्यक्रमेण हि धनानि भवन्ति यान्ति।**
> **एतत्तु मा दहति नष्टधनाश्रयस्य**
> **यत्सौहृदादपि जना शिथिलीभवन्ति॥ १३॥**

अपि च

> **दारिद्र्याद्ध्रियमेति ह्रीपरिगत[1] प्रभ्रश्यते तेजसो**
> **निस्तेजा. परिभूयते परिभवान्निर्वेदमापद्यते।**
> **निर्विण्ण शुचमेति शोकविहतो[2] बुद्ध्या परित्यज्यते[3]**
> **निर्बुद्धि क्षयमेत्यहो निधनता सर्वापदामास्पदम्॥ १४॥**

**विदूषक**—भो वयस्य तमेवार्थकल्यवर्तं स्मृत्वाऽल सतापितेन। ( भो वअस्स तं ज्जेव अत्थकल्लवत्तअ सुमरिअ[4] अल सतप्पिदेण।)

**चारुदत्त**—वयस्य दारिद्र्य हि पुरुषस्य

> **निवासश्चिन्ताया परपरिभवो वैरमपर**
> **जुगुप्सा मित्राणा स्वजनजनविद्वेषकरणम्।**
> **वन गन्तु बुद्धिर्भवति च कलत्रात्परिभवो**
> **हृदिस्थ शोकाग्निर्न च दहति सतापयति च॥ १५॥**

तद्वयस्य कृतो मया गृहदेवताभ्यो बलि। गच्छ त्वमपि चतुष्पथे मातृभ्यो बलिमुपहर।

**विदूषक**—न गमिष्यामि। ( ण गमिस्स। )

**चारुदत्त.**—किमर्थम्।

**विदूषक**—यत एव पूज्यमाना अपि देवता न ते प्रसीदन्ति तत्को गुणो देवेष्वर्चितेषु। ( जदो एव्व पूइज्जन्ता वि देवदा ण दे पसीदन्ति[5] ता को गुणो देवेसु अच्चिदेसु।)

**चारुदत्त**—वयस्य मा मैवम्। गृहस्थस्य नित्योऽय विधि।

> **तपसा मनसा वाग्भि[6] पूजिता बलिकर्मभि।**
> **तुष्यन्ति शमिना नित्य देवता किं विचारितै॥ १६॥**

---

१ तत्परि० २ पिहित. ३ परिभ्रश्यते. ४ सुमरिअ सुमरिअ ५ पसादं देन्ति. ६ वाऽपि

तद्गच्छ। मातृभ्यो बलिमुपहर।

**विदूषक**—भो न गमिष्यामि। अन्य कोऽपि प्रयुज्यताम्। मम पुनर्ब्राह्मणस्य सर्वमेव विपरीत परिणमति। आदर्शगतेव छाया वामतो दक्षिणा दक्षिणतो वामा। अन्यच्चैतस्या प्रदोषवेलायामिह राजमार्गे गणिका विटाश्चेटा राजवल्लभाश्च पुरुषाः सचरन्ति। तस्मान्मण्डूकलुब्धस्य कालसर्पस्य मूषिक इवाभिमुखापतितो वध्य इदानी भविष्यामि। त्वमिहोपविष्ट किं करिष्यसि। ( भो ण गमिस्सं। अण्णो को वि पउज्जीअदु। मम उण बम्हणस्स सव्व ज्जेव विपरीद परिणमदि। आदसगदा विअ छाआ वामादो दक्खिणा दक्खिणादो वामा। अण्ण अ एदाए पदोसवेलाए इध राअमग्गे गणिआ विडा चेडा राअवल्लहा अ पुरिसा सचरन्ति। ता मण्डूअलुद्धस्स कालसप्पस्स मूसिओ विअ अहिमुहावदिदो[1] वज्झो दाणिं भविस्स। तुम इध उवविट्ठो किं करिस्ससि। )

**चारुदत्त**—भवतु। तिष्ठ तावत्। अह समाधि निर्वर्तयामि।

( नेपथ्ये। )

तिष्ठ वसन्तसेने तिष्ठ।

( तत प्रविशति विटशकारचेटैरनुगम्यमाना वसन्तसेना। )

**विट**—वसन्तसेने तिष्ठ तिष्ठ।

**किं त्व भयेन परिवर्तितसौकुमार्या**
**नृत्यप्रयोगविशदौ चरणौ क्षिपन्ती।**
**उद्विग्नचञ्चलकटाक्षविसृष्टदृष्टि-**
**र्व्याधानुसारचकिता हरिणीव यासि॥ १७॥**

---

विपरीतमुपनमति [ अनिष्ट पर्यवस्यतीत्यर्थ। आदर्शगता छायेव। आदर्शस्थ-प्रतिबिम्बे वामो भागो दक्षिणे दृश्यते दक्षिणश्च वाम इति वस्तुगतिः। सचरन्ति। एतेन विटादीना प्रवेश सूचयति। 'नासूचितस्य प्रवेश' इति। **किं त्वमिति**। [ परिवर्तित त्वरितगमनार्थमन्यथाकृत परित्यक्तमिति यावत् सौकुमार्यं यया। नृत्यप्रयोगेण ] विशदौ सचरणलाघवगुणान्वितौ। पटू इति यावत्। उद्विग्नचञ्चलकटाक्षरूपेण [ यद्वा उद्विग्ना व्याकुला चञ्चलाश्च कटाक्षा अपाङ्ग-दर्शनानि यस्मिन्कर्मणि तथा ] विसृष्टा दृष्टिर्यया सा तथा। अनुसारोऽनुगमनम्। व्याधेन यदनुगमन तेन त्रस्ता मृगीव। [ किं किमर्थं यासि। उपमा। वसन्ततिलका वृत्तम् ]॥ १७॥ शकारभाषाया चवर्गशिरस्थितोऽन्तस्थो यकारो लेख्य। 'पूस्पृष्टा तालव्य' इति वचनात्। स च सयोग प्रयत्नलाघवात्पूर्वस्य गुरुत्व न करोति। य्चिष्ठ तिष्ठ। **किं यासीत्यादि**। वसन्ततिलकच्छन्दसा श्लोक। प्रस्खलन्ती। प्रस्खलन निम्नोन्नतादौ गतिविघटनम्। 'बाला स्याद्वासु' इत्यमर। न म्रियसे।

---

१ मुहावरिथदो २ वर्जित

Go, then, and offer the oblation to the Holy Mothers

VID —Sir, I won't go You may order somebody else. For, in the case of me, a ( poor ) Brahmana, everything turns out in a contrary manner just like the reflection in a mirror, the left appearing to the right and the right to the left Moreover, at this time of the night there are walking about, on this royal road, courtesans, their parasites and attendants, and men who are royal favourites I shall, therefore, just fall a prey ( to them ), if I come face to face with them, like a mouse with a black snake greedy of frogs. And what will you do sitting here ?

CHAR —All right ; wait awhile I will go through my holy meditation.

( *Behind the Scenes* ).

Stay, Vasantasena, stay !

( *Then enter* Vasantasena, *being followed by* Vita, Sakara *and* Cheta )

VITA —Stay, Vasantasena, stay !

Why are you, setting aside (*lit* having changed) your tenderness ( of limbs ) owing to fear, and plying your feet which are trained by the practice of dancing, running away like a female deer, frightened when being pursued by a hunter, with eyes casting affrighted and tremulous side-glances ? (17)

---

तिष्ठ तावत् । हडक्के हृदयम् । तपस्वि वराकम् । अङ्गारराशिपतित मासखण्डमिव कामेन दह्यते ॥ १८ ॥ अज्जुके गणिके । **उत्त्रासितेत्यादि** । उपजातिच्छन्दसा श्लोक । उत्त्रासिता गच्छस्यन्तिकान्मम । यद्वा । अत्तिका ज्येष्ठा मे भगिनी । 'अत्तिका भगिनी ज्येष्ठा ' इत्यमर । सपूर्णपक्षेव ग्रीष्ममयूरी । ओवग्गदी अववल्गति । ससभ्रममागच्छतीत्यर्थं । शामिअभश्टके स्वामिभट्टारक । वने गतकुक्कुटशावक इव । गडे इति प्रथमान्तस्यैकारान्तत्वम् । 'गतमृतकृताना ड ' इति ड ॥ १९ ॥ **किं यासीति** । [ पवनेन लोला दशा यस्य तादृश रक्ताशुक वहन्ती । रक्तोत्पलाना प्रकरः । तद्घटितमाल्यमिति यावत् । तद्गत कुड्मल ससभ्रमगमनाद् उत्सृजन्ती पातयन्ती । पक्षे रक्तोत्पलप्रकरवत् कुड्मलान् कुड्मलसदृशप्रस्तरखण्डान् उत्क्षिपन्ती । ] टङ्क पाषाणदारण ' इत्यमर । विदारणक्षणे हि निर्मला दीप्ति प्रसरतीति ' कुड्मल कलिका । मन शिलगुहेति । महाभारते मन शिलशब्दोऽपि दृश्यत इति तथा प्रयुक्त । ' मन शिला तु कुनटी ' इत्यमर ।

शकार --तिष्ठ वसन्तसेनिके तिष्ठ । ( चिश्ट वसन्तशेणिए चिश्ट । )

(किं याशि धावशि पलाअशि पक्खलन्ती
वाशू पशीद ण मलीहिशि[1] चिश्ट दाव ।
कामेण दज्जदि हु मे हडके तवश्शी
अङ्गाललाशिपडिदे विअ मशखण्डे ॥)

किं यासि धावसि पलायसे प्रस्खलन्ती
वासु प्रसीद न मरिष्यसि तिष्ठ तावत् ।
कामेन दह्यते खलु मे हृदय तपस्वि
अङ्गारराशिपतितमिव मासखण्डम् ॥ १८ ॥

चेट --आर्यके तिष्ठ तिष्ठ । ( अज्जुए चिट्ठ चिट्ठ । )
(उत्ताशिता गच्छशि अन्तिका[2] मे शपुण्णपुच्छा विअ गिम्हमोरी[3] ।
ओवग्गदी शामिअभश्टके मे वणे गडे कुक्कडशावके[4] व्व ॥)

उत्त्रासिता गच्छस्यन्तिकान्मम सपूर्णपक्षेव ग्रीष्ममयूरी ।
अववलगति स्वामिभट्टारको मम वने गत कुक्कुटशावक इव ॥ १९ ॥

विट —वसन्तसेने तिष्ठ तिष्ठ ।

किं यासि बालकदलीव विकम्पमाना
रक्तांशुक पवनलोलदश वहन्ती
रक्तोत्पलप्रकरकुड्मलमुत्सृजन्ती[5]
टङ्कैर्मन शिलगुहेव विदार्यमाणा ॥ २० ॥

---

[ वसन्ततिलका वृत्तम् ] ॥ २० ॥ मम मदनमित्यादि । मालिनीछन्दसा श्लोक । मम मदनमनङ्ग मन्मथ वर्धयन्ती निशि च शयनके मम निद्रामाक्षिपन्ती । प्रसरसि प्रगच्छसि । 'प्रस्वरसि दात्यूहवद्विरौषि' इति केचित् । भयभीतेति । भय-शब्दोऽयमपार्थक । मदनमनङ्गमित्यादि पुनरुक्तम् । रावणस्येव कुन्तीति हतोपमम् । तथा चोक्तम्—'आगमलिङ्गविहीन देशकलान्यायविपरीतम् । व्यर्थैकार्थमपार्थं भवति हि वचन शकारस्य ॥' इति ॥ २१ ॥ किं त्वमिति । विशेषयन्ती अतिशयाना । [ पतगेन्द्र गरुडस्तस्माद्भय तेन पीडिता त्रस्ता ] व्याली सर्पी [ इव यासि । अनेन तस्या शीघ्रगतित्व वक्रगमन च सूचितम् । ]प्रविसृत प्रचलित [ वात निरुन्ध्या गृह्णी-याम् । न रुन्ध्यामिति पाठे ] वात न रुणध्मि अपि तु रुणध्म्येव । नकार काकौ । हे वरगात्रि त्वन्निग्रहे मम प्रयत्न न । अनायासेनैव त्वा निगृह्णीयामित्यर्थ । यद्वा एव सत्यपि त्वन्निग्रहे बलात्कारेण ग्रहणे मम प्रयत्न न । अपि तु अनुनये एव ।

---

१ मलीहशि, मलिश्शसि २ अज्जए, अज्जुके. ३ अत्तिका. ४ कुक्कुर. ५कुण्डल

SAKARA —Stay, Vasantasena stay !

Why do you go, run and scamper and stumble ? Be pleassed, O girl ! you won't die Stay awhile Indeed, my poor heart is being burnt by passion, just like a piece of flesh fallen on a heap of burning charcoal (18)

CHETA —Stay, lady, stay !

You are running away from me in terror, like a pea hen in the hot season with her tail fully grown ( and outstreched ) Here is my lord and master bounding ( after you ) like a young cock in the forest (19)

VITA —Stay, Vasantasena, stay !

Why do you run away, quaking like a young plantain tree, trailing ( after you ) your red silken garment with its ends fluttering in the breeze, and dropping off the numerous buds of red lotuses ( in your hair ), like a cave of red arsenic, being excavated ( shattered ) with a chisel ? (20)

---

उपमालकार । वसन्ततिलका वृत्तम् ] ॥ २२ ॥ 'भावो विद्वान्' इत्यमर । **एषा नाणकेत्यादि** । शार्दूलविक्रीडितच्छन्दसा श्लोक । एषा । नाण शिवाङ्कटङ्कादिवित्त तस्य मोषणशील कामो यस्य तस्य कशिका चर्मकाष्ठिका । चौराणा किंचित्तया चोपकरण भवति । तदत्र कशोक्ता । कशा चाश्वताडनी । चर्मसडिकोच्यते । मच्छाशिका मत्स्यभक्षिका । 'मच्छ शुष्कमासम्' इत्येके । लाशिका नर्तकी । णिण्णाशा निम्ननासा । कुलणाशिका कुल वशस्तन्नाशयति पातित्यजननात् । णीशाशा । [ नि स्वाशा ] इति पाठे निःस्वानामाशा । कुलनाशिकेत्यर्थ । न वशिका [ अवशिका ] अनायत्ता दानेनापि कस्याप्यायत्ता न भवति । कामस्य मञ्जूषिका पात्रविशेष । कन्दर्पभाजनमिव । वर्तुलीभूत काम इवेत्यर्थ । एषा वेशवधू । 'वेशो वेश्याजनाश्रय' इत्यमर । सुवेशनिलया शोभनाना वेशानामलकाराणा निलय आश्रयो यस्या सा । वेशाङ्गना । वेशिका । वेशोऽस्यास्तीति वेशिका । एतान्यस्या दश नामकानि मया कृतानि अद्यापि मा नेच्छति । यदि देवताया अष्टौ दश द्वादश नामानि पठ्यन्ते तदा सा प्रसन्ना भवति । इय त्वेतावताऽपि न प्रसन्नेति भाव । अत्र पूर्वार्धोत्तरार्धयो एषैषेति पुनरुक्त न्यूनमधिक वा कृतम् । दशेति व्यर्थम् ॥ २३ ॥ **प्रसरसीत्यादि** । प्रचलिताभ्या कुण्डलाभ्या घृष्ट गण्डयो पार्श्व यस्या सा । अत एव विटनखपरिमृष्टवीणातुल्या । मनोहरत्वाच्छब्दवत्त्वाद्वा वीणातुल्यत्वम् । विटसदृशौ कुण्डलौ । [ जलधरस्य गर्जित तेन भीता सारसी इव । मालोपमालकार । पुष्पिताग्रा वृत्तम् ] ॥ २४ ॥ **झणज्झणायेति** । वसन्ततिलक छन्द । झणज्झणन्तेत्यव्यक्तानुकरणम् । अव्यक्तशब्दविशेषयुक्तबहुभूषणशब्देन मिश्र यथा स्यादेवम् । किं द्रौपदीव

शकार—तिष्ठ वसन्तसेने तिष्ठ ।( चिश्ट वशन्तशेणिए चिश्ट । )

(मम मअणमणङ्ग मम्मथ[1] वड्ढअन्ती
　　णिशि अ शअणके[2] मे णिद्दअ पक्खिवन्ती[3] ।
पशलशि भअभीदा पक्खलन्ती खलन्ती
　　मम वशमणुजादा लावणश्शेव कुन्ती ॥ )

मम मदनमनङ्ग मन्मथ वर्धयन्ती
　　निशि च शयनके मम निद्रा प्रक्षिपन्ती ।
प्रसरसि भयभीता प्रस्खलन्ती स्खलन्ती
　　मम वशमनुयाता रावणस्येव कुन्ती ॥ २१ ॥

विट—वसन्तसेने

किं त्वं पदैर्मम पदानि विशेषयन्ती
　　व्यालीव यासि पतगेन्द्रभयाभिभूता ।
वेगादहं प्रविसृत पवनं निरुन्ध्यां[4]
　　त्वन्निग्रहे तु वरगात्रि न मे प्रयत्नः ॥ २२ ॥

शकार—भाव भाव

एषा नाणकमोषिकामकशिका मत्स्याशिका लासिका
　　निर्नासा कुलनाशिका अवशिका कामस्य मञ्जूषिका ।
एषा वेशवधू सुवेशनिलया वेशाङ्गना वेशिका
　　एतान्यस्या दश नामकानि मया कृतान्यद्यापि मां नेच्छति ॥ २३ ॥

( भावे भावे

एशा णाणकमूशिकामकशिका मच्छाशिका लाशिका
　　णिण्णाशा कुलणाशिका अवशिका कामस्स[5] मञ्जूशिका ।
एशा वेशबहू शुवेशणिलआ वेशङ्गणा वेशिआ
　　एशे शे दश णामके मइ कले अज्जावि मं णेच्छदि ॥)

विट—

प्रसरसि भयविक्लवा किमर्थं प्रचलितकुण्डलघृष्टगण्डपार्श्वा ।
विटजननखघट्टितेव[6] वीणा जलधरगर्जितभीतसारसीव ॥ २४ ॥

---

पलायसे रामभीता । एष हरामि झटिति यथा हनुमान्विश्वावसोर्भगिनीमिव तां सुभद्राम् । विश्वावसो सिद्धराजविशेषस्य न भगिनी सुभद्रा किं तर्हि कृष्णस्य । यथा इवेति पुनरुक्तम् ॥ २५ ॥ रमयेत्यादि । प्रतिपादं चतुर्दशमात्रत्वान्मात्रासमकं छन्दः ।

---

१ बम्मह　२ शअणए.　३ आक्खि०.　४ न रुन्ध्या (टी०).　५ कामाह.
६ परिघाटितेव, नखखण्डितेव.

SAKARA—Stay, Vasantasena, stay !

You inflame my love, my passion, my lust, and forcibly deprive me of my sleep when lying on my bed at night, and you are running away stumbling and falling, being agitated by fear, now that you have come into my power, like Kunti into that of Ravana (21)

VITA—O Vasantasena,

Why do you, surpassing my steps (*i e*, speed) with your own, run away like a female snake overcome with the terror of the lord of birds (the eagle) ? Starting off with speed, I can overtake wind itself, but to overtake you, O fair-limbed one, I need make no (special) effort (or, my effort is not for seizing you by force) (22)

SAKARA—Friend, friend !

She is an inciter of (*lit* a whip to) the passion* (even) of stealers of coins (*i e*, thieves), she is a fish-eater, a figurante, a flat-nosed maiden, a destroyer of families (of her lovers), an untameable (shrew), a casket of love, a courtesan, an inhabitant of the fine harlot's quarter (or, a repository of fine ornaments), a prostitute, and a concubine.—I have given her (praised her by) these ten names, and still she desires (loves) me not (23)

VITA—

Why do you run away, overcome with fear, while the sides of your cheeks are rubbed against by your ear-rings tossing to and fro, (appearing) like a lute hard-struck with their nails by *vitas*, or like a female crane frightened by the rumbling of clouds ? (24)

---

लामेहि अ रमय च । चकारो भिन्नक्रम । राजवल्लभ चेत्यर्थ । तो खाहिशि तत खादिष्यसि मत्स्यमासकम् । 'तो इत्योकारो लघुश्छन्दोनुरोधात्' इत्याहु । 'एओकारौ हलन्तस्थौ शुद्धौ वाऽप्यपदान्वितौ । दीर्घात्परौ लघू स्याता छन्दोविचितिभाषया ॥' इत्युक्तम् । एदेहिं मच्छमशकेहिं एताभ्या मत्स्यमासाभ्या हेतुभ्याम् । 'मश्कलेहिं' इति पाठे मत्स्यशुष्कमासाभ्यामित्यर्थं । ककार स्वार्थे । शुणआ श्वान । मृतक न सेवन्ते । नकार शिरश्चालने । न सेवन्ते इति न अपि तु सेवन्त एवेत्यर्थ ॥२६॥ किं [त्वमिति । ताराभि मुक्ताभि विचित्रश्चासौ रुचिरश्च तम् ।] वक्त्रेण लक्षिता नगरदेवतावत्प्रयासि । कीदृशेन वक्त्रेण । [निर्मथित अत एव चूर्ण मन शिलस्तेन लक्षण्या] निर्मथितचूर्णमन शिलातुल्येन [यद्वा निर्मथिता पराभूता चूर्णमन शिला येन तेन । नगरदैवतेन तुल्य नगरदैवतवत् । द्रुतं प्रयासि । तद्धितोपमा । वसन्त-

---

* Or, of the God of Love that robs (men of their) coins (money)

**शकार** --

**झणज्झणायमानबहुभूषणशब्दमिश्रं**
**किं द्रौपदीव पलायसे रामभीता।**
**एष हरामि सहसेति यथा हनूमा-**
**न्विश्वावसोर्भगिनीमिव तां सुभद्राम् ॥ २५ ॥**

(झाणज्झणन्तबहुभूशणशद्दमिश्श[1] किं दोव्वदी[2] विअ पलाअशि लामभीदा।
एशे हलामि शहशत्ति जधा हणूमे विश्शावशुश्श बहिणिं[3] विअ तं शुभद्दं ॥)

**चेट** --

**रमय च राजवल्लभं ततः खादिष्यसि मत्स्यमांसकम्।**
**एताभ्यां मत्स्यमांसाभ्यां श्वानो मृतकं न सेवन्ते ॥ २६ ॥**

(लामेहि अ लाअवल्लहं तो[4] खाहिशि मच्छमंशकम्[5]।
एदेहिं मच्छमंशकेहिं[6] शुणआ मडअं[7] ण शेवन्ति ॥)

**विट** --भवति वसन्तसेने

**किं त्वं कटीतटनिवेशितमुद्वहन्ती**
**ताराविचित्ररुचिरं रशनाकलापम्।**
**वक्त्रेण निर्मथितचूर्णमनःशिलेन**
**त्रस्ता[8] द्रुतं नगरदैवतवत्प्रयासि ॥ २७ ॥**

**शकार** --

**अस्माभिश्चण्डमभिसार्यमाणा वने शृगालीव कुक्कुरैः।**
**पलायसे शीघ्रं त्वरितं सवेगं सवृन्तं मम हृदयं हरन्ती ॥२८॥**

(अम्हेहि चण्डं अहिशालिअन्ती वणे शिआली विअ कुक्कुलेहिं।
पलाशि शिग्घं तुलिदं शवेग्गं शवेण्टणं[9] मे हलअं हलन्ती ॥

**वसन्तसेना**--पल्लवक पल्लवक परभृतिके परभृतिके। (पल्लवआ पल्लवआ परहुदिए परहुदिए।)

**शकार**--(सभयम्।) भाव भाव मनुष्या मनुष्या। (भावे भावे मणुश्शे मणुश्शे।)

**विट**--न भेतव्यं न भेतव्यम्।

**वसन्तसेना**--माधविके माधविके। (माहविए माहविए।)

**विटः**--(सहासम्।) मूर्खं परिजनोऽन्विष्यते।

---

१ झणज्झ० २ दोवदी. ३ वहिणिं ४ता ५ मशमच्छकम् ६ मशमच्छकेहिं. ७ मलअ. ८ त्रस्ताद्भुत. ९ शवेठण

SAKARA—

Mixing up the sounds made by your numerous jingling ornaments, why do you fly away like Draupadi afraid of Rama ? Here I (shall) carry you off suddenly, as Hanumat did that ( well-known) Subhadra, the sister of Visvavasu. (25)

CHETA—

Admit to your caresses this royal favourite (Sakara,) and then you will get fish and flesh to eat By getting these two, *viz* , fish and flesh, (even) dogs feed not on dead bodies (26)

VITA—Madam, Vasantasena,

Why do you, wearing the girdle zone fastened round your sloping hips and shining with divers lustre like (that of) stars and with a face excelling ( in ruddiness of complexion ) powdered red arsenic, run away quickly in fright, looking like the guardian deity of the city ? (27)

SAKARA—

Being hard pursued by us, like a female jackal by dogs in the forest, you are running away quickly, and with speed, hastily taking away ( with you ) my heart together with its stem ( *i e* support ) (28)

VASANTASENA—Pallavaka, Pallavaka ! Parabhritika, Parabhritika !

SAKARA—( *With fear* ) Friend, friend ! Men, men !

VITA—Fear not, fear not

VAS —Madhavika, Madhavika !

VITA—(*With a laugh*) You fool ! She is looking for her servants !

---

तिलका वृत्तम् ] ॥ २७ ॥ अस्माभिरिति । उपेन्द्रवज्रा छन्द । अस्माभिश्चण्डं शीघ्रमभिसार्यमाणा वने शृगालीव कुक्कुरै । पलायस शीघ्रं त्वरित सवेग शवेण्टण सवृन्त समूलबन्धम् । मे हलअ मम हृदयम् । हरन्ती । ‘शवेठण सवेष्टन-मित्यर्थ ’ इत्येके ॥ २८ ॥ पल्लवक परभृतिका च वसन्तसेनाया परिचारक परि-चारिका च । माधविका अपरा परिचारिका । भावे भावे इति संबोधनम् । मणुश्शे मनुष्य । स्त्रीनामश्रवणेन मगर्वमाह-स्त्रीणा शत मारयामि । हद्धी हद्धो हा धिक् । हा धिक् । विलप । किमेकदेशविलापेन सकल वसन्तमास वा । अत्र पक्षे एको वाशब्द शकारवचनतया व्यर्थ एव प्रयुक्त । अनेकार्थत्वान्निपातानामवधारणे वा । सर्वमेव वसन्तमासमित्यर्थ । क तुम त्वा परित्रायते । कि भीमसेन इत्यादि । इन्द्रवज्राश्लोक । किं भीमसेनो जमदग्निपुत्र कुन्तीसुतो वा दशकन्धरो वा । एते चत्वार । एषोऽहं

**शकार**—भाव भाव स्त्रियमन्विष्यति। (भावे भावे इत्थिआ अण्णेशदि।)

**विट**—अथ किम्।

**शकार**—स्त्रीणां शतं मारयामि। शूरोऽहम्। (इत्थिआण शदं मालेमि। शूले हग्गे।)

**वसन्तसेना**—(शून्यमवलोक्य।) हा धिक् हा धिक्। कथं परिभ्रष्टः परिजनः। अत्र मयाऽऽत्मा स्वयमेव रक्षितव्यः। (हद्धी हद्धी। कधं परिब्भट्टो[1] परिअणो। एत्थ मए अप्पा सअं ज्जेव रक्खिदव्वो।)

**विट**—अन्विष्यतामन्विष्यताम्।

**शकार**—वसन्तसेनिके विलप विलप परभृतिकां वा पल्लवकं वा सर्वं वा वसन्तमासम्। मयाऽभिसार्यमाणां त्वां कः परित्रास्यते। (वसन्तशेणिए विलव विलव परहुदिअं वा पल्लवअं वा शव्वं वा[2] वशन्तमाशं। मए अहिशालिअन्तीं तुमं के पलित्ताइश्शदि।)

> किं भीमसेनो जमदग्निपुत्रः कुन्तीसुतो वा दशकन्धरो वा।
> एषोऽहं गृहीत्वा केशहस्ते दुःशासनस्यानुकृतिं करोमि॥ २९॥
> (किं भीमशेणे जमदग्गिपुत्ते कुन्तीशुदे वा दशकन्धले[3] वा।
> एशे हगे गेह्निय केशहस्ते[4] दुश्शाशणश्शाणुकिदिं कलेमि॥)

ननु प्रेक्षस्व ननु प्रेक्षस्व। (ण पेक्ख ण पेक्ख।)

> असिः सुतीक्ष्णो वलितं च मस्तकं कल्पये शीर्षमुत मारयामि वा।
> अलं तवैतेन पलायितेन मुमूर्षुर्यो भवति न स खलु जीवति॥ ३०॥
> (अशी शुतिक्खे वलिदे अ मश्तके कप्पेम[5] शीशं उद मालएम[6] वा।
> अलं तवेदेण पलाइदेण मुमुक्खु जे होदि ण शे क्खु जीअदि॥)

**वसन्तसेना**—आर्य अबला खल्वहम्। (अज्ज अबला क्खु अहम्।)

**विट**—अत एव ध्रियसे।

**शकार**—अत एव न मार्यसे। (अदो ज्जेव ण मालीअशि[7]।)

**वसन्तसेना**—(स्वगतम्।) कथमनुनयोऽप्यस्य भयमुत्पादयति। भवतु। एवं तावत् (प्रकाशम्।) आर्य अस्मात्किमप्यलंकरणं तर्क्यते। (कधं अणुणओ वि से भअं उप्पादेदि। भोदु। एव्वं दाव। अज्ज इमादो किंपि अलंकरणं तक्कीयदि।)

**विट**—शान्तं[8] पापम्। भवति वसन्तसेने न पुष्पमोषमर्हत्युद्यानलता। तत्कृतमलंकरणैः।

**वसन्तसेना**—तत्किं खल्विदानीम्। (ता किं क्खु दाणिम्।)

---

गृहीत्वा केशहस्ते दुःशासनस्यानुकृतिं करोमि॥ २९॥ ण ननु। पेक्ख प्रेक्षस्व। असिरिति। वंशस्थेन्द्रवज्रादिभिर्द्वादशैकादशवर्णैर्विजात्युपजातिः। असिः सुतीक्ष्णो वलितो लालितः। मस्तकम्। कल्पये छिनद्मि। तव शीघ्रं मारयामि वा॥ ३०॥

---

१ परिअणो वि मे परि०. २ एअं ३ कन्धलो ४ हत्थे ५ कप्पेध. ६ मालएध. ७ मालीअशि ८ शान्तम्; शान्तं पापं शान्तं पापम्.

SAKARA—Friend, friend! Is she calling some woman?

VITA—Surely

SAKARA—I can kill a hundred of women! I am (very) brave!

VAS—(*Seeing no one about*). Oh! ill-luck! How now! Even the servants have disappeared! Now I have got to protect myself by my own self

VITA—Seek them out, seek them out!

SAKARA—Vasantasena, cry out, cry out for (your) Parabhritika, or (your) Pallavaka, or the whole of the month of Vasanta (Spring) When I am pursuing you, who can save you?

Can Bhimasena, the son of Jamadagni, or can the ten-necked Ravana, the Son of Kunti (save you)? Here by seizing you by your massive hair, I am going to play (*lit.* imitate) Duhshasana (29)

Look here, I say, look here!

My sword is very keen, and your head is turned (towards me), I will dissect your head, or kill you So away with this running away of yours he who is destined to die can never live (30)

VAS—Sir, I am only a woman!

VITA—Hence you are (still) alive!

SAKARA—Hence it is that you are not killed!

VAS—(*To herself*) How! Even his courtesy strikes terror! Well, I will (proceed) thus (*Aloud*), Sir, do you expect to get some ornament from (*i e* by seizing) this person?

VITA—Heaven forbid! O Vasantasena, a garden-creeper deserves not to be robbed of its blossoms So we have nothing to do with ornaments

VAS—Then what, indeed, can it be now?

---

[न बल यस्या सा] अबला [दीनेत्यर्थः] खल्वहम् । अत एव ध्रियसे [illegible] बलवान्धारयितु न शक्यत एवेति तात्पर्यम् । अत एव न मार्यसे [illegible] अन्विष्यते । कृत निष्फलमलकरणै । यन उद्यानलता पुष्पमोष नार्हति [illegible] वरपुरुषमनुष्यो वासुदव कामयितव्य इति [illegible] । [illegible] अनार्यमनर्हम् । मतालिकम् । [illegible] ‘मयीत्यर्थ’ इत्येके । अन्तरेण वित्तेन [illegible] [illegible] हर्ग अह न ग्रामान्तरगतो न नगर [illegible] । [illegible] श्रान्त क्लान्तश्च भवति । न [illegible] विटस्य । शीर्षेणात्मीयाभ्य। पादाभ्या [illegible] । [illegible]

शकार--अहं देवपुरुषो मनुष्यो वासुदेवः कामयितव्यः। (हग्गे देवपुलिशे[1] मणुश्शे वाशुदेवके कामइदव्वे।)

वसन्तसेना--(सक्रोधम्।) शान्तं शान्तम्। अपेहि। अनार्यं मन्त्रयसि। (शन्तं शन्तम्[2]। अवेहि। अणज्जं मन्तेसि।)

शकार--(सहस्ततालं[3] विहस्य।) भाव भाव प्रेक्षस्व तावत्। अन्तरेण सुस्निग्धैषा गणिकादारिका ननु। येन मां भणति--'एहि। श्रान्तोऽसि। क्लान्तोऽसि' इति। अहं न ग्रामान्तरं न नगरान्तरं वा गतः। आर्यके [भट्टालिके] शपे भावस्य शीर्षमात्मीयाभ्यां पादाभ्याम्। तवैव पृष्ठानुपृष्ठिकयाऽऽहिण्डमानः श्रान्तः क्लान्तोऽस्मि संवृत्तः। (भावे भावे पेक्ख दाव[4]। अन्तलेण[5] शुशिणिद्धा एशा गणिआदालिआ[6] ण। जेण मं भणादि--'एहि। शन्तेऽपि। किलिन्तेशि' त्ति। हगे ण ग्गामन्तलं[7] ण णगलन्तलं वा गडे। अज्जुके शवामि भावश्श शीशं अत्तणकेहिं[8] पादेहिं। तव ज्जेव पश्चाणुपश्चिआए आहिण्डन्ते शन्ते किलिन्ते म्हि शवुत्ते।)

विट-- (स्वगतम्।) अये कथं शान्तमित्यभिहिते श्रान्त इत्यवगच्छति मूर्खः। (प्रकाशम्।) वसन्तसेने वेशवासविरुद्धमभिहितं भवत्या। पश्य।

तरुणजनसहायश्चिन्त्यतां वेशवासो
विगणय गणिका त्वं मार्गजाता लतेव।
वहसि हि धनहार्यं पण्यभूतं शरीरं
सममुपचर भद्रे सुप्रियं चाप्रियं[9] च ॥ ३१ ॥

अपि च।

वाप्यां स्नाति विचक्षणो द्विजवरो मूर्खोऽपि वर्णाधमः
फुल्लां नाम्यति वायसोऽपि हि लतां या नामिता बर्हिणा।
ब्रह्मक्षत्रविशस्तरन्ति च यया[10] नावा तयैवेतरे
त्वं वापीव लतेव नौरिव जनं वेश्याऽसि सर्वं भज ॥ ३२ ॥

---

पृष्ठानुपृष्ठिकया। आहिण्डन्ते उद्भ्राम्यन्। श्रान्तः क्लान्तोऽस्मि संवृत्तः। तरुणे-त्यादि। वेशो वेश्याजनवासस्थानं [तरुणजनः सहायो यस्य तथा। तरुणजनापेक्षी-त्यर्थः।] इति चिन्त्यतामवधार्यताम्। विगणय विजानीहि। धनेन हार्यं धनहार्यम्। केनापि तरुणजनेनेति शेषः। सुप्रियं च अप्रियं च नरं सममविशेषेण उपचर। उपमा काव्यलिङ्गं च अलंकारौ। मालिनी वृत्तम्] ॥ ३१ ॥ वाप्यामित्यादि। [वर्णे-नाधमः वर्णाधमः शूद्रादिः।] नाम्यति नमयति। नाम्यतीति कण्ड्वादिपाठात् 'नाम

---

१ वरपुलिशमनुश्शे २ पाव (पापम्) ३ सतालकम् ४ दाव म ५ म अन्त०. ६ गणिकादारिकेत्यादि नास्ति पुस्तकान्तरे. ७ अण्णग्गाम०, न्तलं गडे. ८ अत्तणकेलकेहिं, ०केरेहिं ९ वाऽप्रियं वा १० यथा. .तथै०

SAKARA—That I, a heavenly personage, a man, and Vasudeva (Krishna), should be loved (by you)

VAS —(*Angrily*) Enough, no more of this ! Get away ! You talk wickedly (*lit*, what is unworthy of an Arya)

SAKARA—(*Clapping his hands and laughing*) Friend, friend ! Just see This courtesan girl is indeed very much attached (to me) at heart, and hence she says to me, 'come, you are fatigued, you are exhausted', while I have not gone to another village, nor to another city Lady, I swear by my friend's head and by my feet, I am fatigued and wearied while tramping close at your back here and there

VITA—(*To himself*) Oh ! The fool understands shranta (fatigued) when she said *shanta* (enough). (*Aloud*) O Vasantasena, you have spoken in a manner contrary to your stay (*i e* life) in the courtesans' quarter See—

Remember that the courtesans' quarter is (mainly) dependent on young men for help, and consider (also) that you, a courtesan are just like a creeper growing by the wayside You possess a body that can be bought for money and hence is like an article for sale (Therefore), O good maiden, serve equally one much coveted by you and one disliked by you (31)

Moreover—

An erudite eminent Brahmana, and also an idiot of the lowest caste—both bathe in the same well Even a crow bends (*i e.* sits upon) the same creeper in bloom, that had been bent by a peacock (sitting upon it) And by the same boat do other fellows (*i. e* Chandalas, etc) cross (a river), by which Brahmanas, Kshatriyas and Vaisyas cross it You are a harlot, and (therefore) are like a well, or a creeper, or a boat Wait upon all (equally) (32)

---

करोति' इत्यर्थे यक्यकारलोपे च रूपम् । यथा मगधशब्दे मागध्यतीति भवति । 'नाम करोतीत्यर्थे णिचि सज्ञापूर्वको विधिरनित्य इति गुणमकृत्वा यणादेशे नाम्यतीति रूपम् इत्येके । 'ण्यन्तात्सपदादिपाठमभ्युपेत्य क्विपिक्यचि रूपम्' इत्यपरे ॥ ३२ ॥ गर्भदासी जन्मप्रभृतिचेटी । [कामदेवायतनोद्यानात् कामदेवायतनोद्यानगतात् चारुदत्तदर्शनादारभ्येत्यर्थः ।] वामत पार्श्वे तस्य चारुदत्तस्य गृहम् । परिहर्तव्यम् । चारुदत्तवासोऽतिनिकट इति वसन्तसेनाया कथयितु नार्हतीति तदेव च तेनोक्तम् । तद्वचन परिहारविषय । काणेलीमात । 'काणेली कन्यकामाता ' इति देशीप्रकाश । 'असती काणेली ' इत्येके । भाव बलीयानन्धकार ।

वसन्तसेना—गुण खल्वनुरागस्य कारण न पुनर्बलात्कार (गुणो[1] क्खु अणुराअस्स कारण ण उण बलक्कारो।

शकर—भाव भाव एषा गर्भदासी कामदेवायतनोद्यानात्प्रभृति तस्य दरिद्र-चारुदत्तस्यानुरक्ता न मा कामयते। वामतस्तस्य गृहम्। यथा तव मम च हस्ता-न्नेषा परिभ्रश्यति तथा करोतु भाव। (भावे भावे एशा गब्भदाशी कामदेवा-अदणुज्जाणादो पहुदि ताह[2] दलिद्दचालुदत्ताह अणुलत्ता ण म कामेदि। वामदो तश्श घलम्। जधा तव मम अ हश्तादो ण एशा पलिभशदि तधा कलेदु भावे।)

विट—(स्वगतम्।) यदेव परिहर्तव्य तदेवोदाहरति मूर्ख। कथ वसन्त-सेनाऽऽर्यचारुदत्तमनुरक्ता। सुष्ठु खल्विदमुच्यते रत्न रत्नेन सगच्छत इति। तद्गच्छतु। किमनेन मूर्खेण। (प्रकाशम्।) काणेलीमात वामतस्तस्य सार्थ-वाहस्य गृहम्।

शकार—अथ किम्। वामतस्तस्य गृहम्। (अध इ। वामदो तश्य घलम्।

वसन्तसेना—(स्वगतम्।) आश्चर्यम्। वामतस्तस्य गृहमिति यत्सत्य-मपराध्यताऽपि दुर्जनेनोपकृत येन प्रियसगम प्रापिता। (अम्महे। वामदो तश्श गेह त्ति ज सच्च अवरज्झन्तेण वि दुज्जणेण[3] उवकिद जेण पिअसगम पाविदा[4]।)

शकार—भाव भाव बलीयसि खल्वन्धकारे माषराशिप्रविष्टेव मसीगुटिका दृश्यमानैव प्रनष्टा वसन्तसेना। (भावे भावे बलिए क्खु अन्धआले माशलाशि-पविश्टा विअ मशीगुडिआ दीशन्दी[5] ज्जेव पणश्टा वशन्तशेणिआ।

विट—अहो बलवानन्धकार। तथा हि।

आलोकविशाला मे सहसा तिमिरप्रवेशविच्छिन्ना।
उन्मीलिताऽपि दृष्टिर्निमीलितेवान्धकारेण ॥ ३३ ॥

---

माषराशिप्रविष्टेव मसीगुटिका दृश्यमानैव प्रनष्टा वसन्तसेना। आलोकेति। आलोके दर्शने। विशाला महती। [तिमिरे प्रवेशस्तेन विछिन्ना विलुप्ता। निमी-लिता इवेति उत्प्रेक्षा]॥ ३३॥ लिम्पतीत्यादि। [असत्पुरुषसेवेवेत्यनन शकार-सेवाया निष्फलत्व ध्वनितम्। बिगत फल यस्या सा विफला तस्या भावः विफलता ताम्। उपमोत्प्रेक्षयो ससृष्टि] ॥ ३४ ॥ चिह्न भूषणशब्दादि। उपलक्षण माल्यगन्धादि। 'अस्ति किंचिच्चिह्नमुपलक्षयसि' इति पाठान्तरार्थो व्यक्त एव। किं विअ। कीदृशमिवेत्यर्थ। शृणामि मल्लगन्धम्' इत्यादिना लोकविरुद्धोक्ति। काममित्यादि। [प्रदोषतिमिरेण निशामुखान्धकारेण। जल-दोदरसधौ लीना। वसन्ततिलका वृत्तम्।]॥ ३५ ॥ श्रुतमवधारितम्। गृहीतमस्य

---

१ गुणा २ तस्स...दत्तस्स. ३ णेण पिअसंगम (प्रियसगम). ४ पाविद. ५ दीशन्दी दीशन्दी

VAS —But it is merit indeed that is the cause of love, and not force

SAKARA—Friend, friend ! This accursed wench ( *lit* slave-from her birth ) does not love me, having fallen in love with that penniless Charudatta ever since (she visited) the garden of Cupid's shrine Here is his house to the left So you will please so manage that she shall not slip from your hands or from mine.

VITA—( *To himself* ) The fool utters the very thing that should have been avoided ! What, Vasantsena has fallen in love with the noble Charudatta ! It is indeed well said that 'a jewel unites with a jewel ' Well, then, let her eseape , what do I care for this fool ? ( *Aloud* ) Son of an unmarried woman, is that Sarthavaha's house to the left ?

SAKARA—Surely , his house *is* to the left.

VAS —( *To herself* ) Wonderful ! To tell the truth, ( by saying ) his house is to the left, a favour has been conferred upon me by this villain even when doing evil to me, since I am enabled to meet my beloved,

SAKARA– Friend, friend ! in this pitchy darkness Vasantsena has disappeared while being just in sight, like a pellet of lampblack fallen in a heap of black beans

VITA—Ah ! The darkness is indeed very dense. For--

Long ranged in light, but suddenly deprived of their power by their entrance into the darkness, my eyes, although wide open have been closed as it were owing to the darkness (33)

---

तात्पर्यमप्याकलितम् । अये मात भित्तिपरामर्षसूचित पक्षद्वार खल्वेतत् । जानामि सयोगेन स्पर्शनेन्द्रियानुभवेन गृहस्य सवृत पक्षद्वारकम् । दारिद्र्याबित्यादि । बान्धवजनो वाक्ये न सतिष्ठते । वचनं न करोतीत्यर्थ । प्रतापाभावात् । स्फारीभवन्त्येकीभवन्ति । [ ततो विस्तार यान्तीत्यर्थः । ] तत्तस्य सभाव्यते चौर्यादिकमिदमस्य नासीदिदानी कथमित्यादि ॥ ३६ ॥ सङ्गमित्यादि । [ सङ्ग सङ्गतिम् । अवज्ञया सहित यथा तथा सावज्ञ सतिरस्कारम् । ] अल्पच्छदो वस्त्रविहीन । [ षष्ठ–पञ्चमहापातकानि मनुनोक्तानि यथा–'ब्रह्महत्या सुरापान स्तेय गुर्वङ्गनागम । महान्ति पातकान्याहुः ससर्गश्चापि तैं सह ॥' इति । उत्प्रेक्षालकार । उभयो शार्दूलविक्रीडित वृत्तम् ] ॥ ३७ ॥ दारिद्र्येति । भवन्तमेव [ भवन्तमेव इ. पा ] शोचामि । [ विपन्न देह यस्य तस्मिन् विपन्नदेहे ] विनष्टदेहे मयि क्व यास्यसि । अस्मत्सदृक्सार्वदिक सुहृत्कोऽपि नास्तीत्यर्थ. । अर्थ-

अपि च ।

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां[1] गता ।। ३४ ।।

शकार:—भाव भाव अन्विष्यामि वसन्तसेनिकाम् । ( भावे भावे अण्णेशामि वशन्तशेणिअं । )

विट:—काणेलीमातः अस्ति किंचिच्चिह्नं[2] यदुपलक्षयसि ।

शकार:—भाव भाव किमिव । ( भावे भावे किं विअ । )

विट:—भूषणशब्दः सौरभ्यानुविद्धो माल्यगन्धो वा ।

शकार:—शृणोमि माल्यगन्धम् । अन्धकारपूरितया पुनर्नासिकया न सुव्यक्तं पश्यामि भूषणशब्दम् । ( शुणामि मल्लगन्धं । अन्धआलपूलिदाए उण णाशिआए ण शुव्वत्तं पेक्खामि भूशणशद्दं । )

विट:—( जनान्तिकम् ) वसन्तसेने ।

कामं प्रदोषतिमिरेण न दृश्यसे[3] त्वं
सौदामनीव जलदोदरसंधिलीना[4]
त्वां सूचयिष्यति तु माल्यसमुद्भवोऽयं
गन्धश्च भीरु मुखराणि च नूपुराणि ।। ३५ ।।

श्रुतं वसन्तसेने ।

वसन्तसेना—( स्वगतम् । ) श्रुतं गृहीतं च । ( नाटयेन नूपुराण्युत्सार्य माल्यानि चापनीय किंचित्परिक्रम्य हस्तेन परामृश्य । ) अहो भित्तिपरामर्शसूचितं पक्षद्वारकं खल्वेतत् । जानामि च संयोगेन गेहस्य संवृतं पक्षद्वारकम् । ( सुदं गहिदं अ । अम्मो भित्तिपरामरिससूइदं पक्खदुआरअं क्खु एदं । जाणामि अ संजोएण गेहस्स संवुदं पक्खदुआरअं । )

चारुदत्त:—वयस्य समाप्तजपोऽस्मि । तत्सांप्रतं गच्छ । मातृभ्यो बलिमुपहर ।

विदूषक:—भो न गमिष्यामि । ( भो ण गमिस्सम् । )

चारुदत्त:—धिक्कष्टम् ।

---

परत्वात्पुंलिङ्गत्वम् । यद्वा 'तमेव भवमुत्पत्तिं स्मरामि' इति कुव्याख्या । सुहृन्मित्रम् । अतो हेतोः मयि विनष्टदेहे क्व यास्यसि त्वमिति मे चारुदत्तस्य चिन्ता । उपजातिच्छन्दः ]।। ३८ ।। सहायिनी द्वितीया । अभ्युपपत्तिरनुग्रहः । स्थगितद्वारेणापसरणाभावात्पिण्डीभूतेनैकीभूतेन प्रतिबन्धकत्वादपावृते पक्षद्वारे सति निर्वापितो दीपः । गृहीता प्राप्ता । ततः इत एकप्रदेशे भूत्वैकान्ते हे भाव

---

१ निष्फ०. २ किं चिह्नं ३ दृश्यते. ४ सविलीना.

Moreover—

The darkness is, as if, besmearing the limbs, the sky is, as it were, showering down (black) collyrium, and eye-sight has been of no avail, like service rendered unto a wicked man. (34)

SAKARA—Friend, friend! I shall search for Vasantasena

VITA—Bastard, is there any sign (of her) that you mark?

SAKARA—Friend, friend, of what kind?

VITA—(For example) the sound of her ornaments or the scent of her chaplets, with its fragrance closely following (its track)?

SAKARA—I hear the scent of her chaplets: but, my nose being choked up with darkness, I do not very clearly see the sound of her ornaments

VITA—(*Aside*) O Vasantasena,

True that owing to this nocturnal darkness you cannot be seen, like lightning lying concealed in the gap of the interior of a cloud But, O timid one, this scent proceeding from your chaplets, as well as (these your) jingling anklets, will betray you (35)

Did you hear me, Vasantasena?

VAS—(*To herself*) I have heard, and comprehended too (*She shows that she takes off her anklets, and removes her chaplets, then walking about a little, and feeling with her hand*) Ah! Here, surely, is a side door which I have discovered by feeling over the wall. And I know, by its being closed, that this side entrance of the house is fastened (from within)

CHAR—Friend, I have finished my prayers So you may now go and offer the oblation to the Holy Mothers

VID—Sir, I won't go

CHAR—Ah! Fie!

---

तिष्ठ । इदो भाव इत्यादि भ्रमव्युदासाय सुनिश्चय करोति । युवा द्वावपि तावदे-कान्ते तिष्ठतम् । सपद साम्प्रतम् । अन्धकार इत्यादि । अनुष्टुप् । [ मालाएव माल्यम् । चतुर्वर्णादिष्यञ् । तस्य गन्धेन ] माल्यगन्धेन सूचिता । केशहस्ते केशवृन्दे परामृष्टा [ स्पष्टा ] ॥ ३९ ॥ एषेति । कुलपुत्रानुसारिणी चारुदत्तानुरक्ता । ] कुसुमाढ्येषु पुष्पै समृद्धेषु । भूषितेष्वित्यर्थं । सेवितव्येऽत्रलकार्येषु ॥ ४० ॥ एषाऽसीति । इन्द्रवज्राया श्लोक । एषाऽसि बाला । [ वासु बाले ] अधिचण्डम-

दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न सतिष्ठते
सुस्निग्धा विमुखीभवन्ति सुहृद[1] स्फारीभवन्त्यापद ।
सत्त्व ह्रासमुपैति शीलशशिन कान्ति परिम्लायते[2]
पाप कर्म च यत्परैरपि कृत तत्तस्य सभाव्यते ॥ ३६ ॥

अपि च

सङ्ग नैव हि कश्चिदस्य कुरुते सभाषते[3] नादरा-
त्सप्राप्तो गृहमुत्सवेषु धनिना सावज्ञमालोक्यते ।
दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया
मन्ये निर्धनतो प्रकाममपर षष्ठ महापातकम् ॥ ३७ ॥

अपि च

दारिद्र्य शोचामि [4]भवन्तमेवमस्मच्छरीरे सुहृदित्युषित्वा ।
विपन्नदेहे मयि मन्दभाग्ये ममेति चिन्ता क्व गमिष्यसि त्वम् ॥ ३८ ॥

**विदूषक** —( सवैलक्ष्यम् । ) भो वयस्य यदि मया गन्तव्य तदेषाऽपि मम सहायिनी रदनिका भवतु । ( भो वअस्स जइ मए गन्तव्य ता एसा वि मे सहाइणी रदणिआ भोदु । )

**चारुदत्त** —रदनिके मैत्रेयमनुगच्छ ।

**चेटी** [5]—यदार्य आज्ञापयति । (ज अज्जो आणवेदि ।)

**विदूषक** —भवति रदनिके गृहाण बलि प्रदीप च । अहमपावृत पक्षद्वारक करोमि । ( तथा करोति । ) (भोदि रदणिए गेण्ह बलि पदीव अ । अह अपावुद पक्खदुआरअ करेमि । )

**वसन्तसेना**—ममाभ्युपपत्तिनिमित्तमिवापावृत पक्षद्वारकम् । ( दृष्ट्वा । ) तद्यावत्प्रविशामि । हा धिक् हा धिक् । कथ प्रदीप । ( पटान्तेन निर्वाप्य प्रविष्टा । ) ( मम अब्भुववत्तिणिमित्त विअ अवावुद पक्खदुआरअम् । ता जाव पविसामि । हद्धी हद्धी । कध पदीवो । )

**चारुदत्त** —मैत्रेय किमेतत् ।

---

त्युच्चै । हिशब्द एव वा । चण्ड महादेव च ॥४१॥ आर्यमिश्रैमान्यै । [ आर्याश्च ते मिश्राश्चेति समास । व्यवसित कर्तुमारब्धम् । अन्य वसन्तसेनाया भिन्न. । ] भात्र यथा दधिभक्तलुब्धाया मार्जारिकाया स्वरपरिवृत्तिर्भवति तथैतया स्वरपरिवृत्ति [ ध्वनेरन्यथाकरण ] कृता । 'दहिशर' इति पाठे 'छल्लि' इति पाठेऽपि शरो दध्न उपरिभाग । इयमिति । [ रङ्ग नृत्यशाला तत्र प्रवेशेन । तत्र भिन्नभिन्नस्वरानुकरणशिक्षयेत्यर्थ । वञ्चना प्रतारणा तस्या पण्डितत्वेन पाटवेन । स्वरनैपुण्य स्वर-

---

१. सहसा २ पर ३ सभाष्यते ४. मेव ह्य०. ५ रदनिका.

Owing to poverty a man's relatives do not abide by his order, his bosom friends turn away from him, his difficulties multiply, his spirit languishes, the brilliance of the moon of his character grows entirely dim, and whatever evil deed may have been done even by other persons, the same is attributed to him (36)

Moreover—

Nobody keeps company with him, or talks respectfully to him, if he goes to the mansions of the rich on festive occasions, he is looked at with contempt Scantily clad, in shame he keeps himself at a distance from the great I consider poverty to be, forsooth, another great sin, the sixth ( of the class of the usual five ) (37)

Moreover

O Poverty, I am sorry just for you : I feel concerned as to where you can go, when I, the unlucky one, shall have departed this body, you having thus ( so long ) resided in my frame like a friend (38)

VID —( *With shame* ) Well, friend, if I have to go, then let this Radanika, too, be my companion

CHAR —Radanika, follow Maitreya

THE MAID—As Your Honour commands.

VID —Girl Radanika take you the oblation as well as the lamp I shall unfasten the side-door ( *He does so* )

VAS —The side-door has opened, as though to favour me. Well, then, I shall get in. ( *Seeing* ) Oh ! Pity ! How now ! Here is a lamp !

*She extinguishes it with the hem of her garment and then enters* )

CHAR —Maitreya, what is that ?

---

विकृतिचातुर्यम्। समुच्चयालकार ] ॥ ४२ ॥ ही ही भो इति परितोषे। पशुबन्धोपनीतस्येव छागलस्य हृदय फुरफुरायति अत्यर्थं प्रकम्पते प्रदीप । युक्त नेदम्। न काकौ। किं एसो। किं प्रश्ने। स्वकीयगृहसमीपे कुक्कुरोऽपि बलीयान्भवति। एतेनास्मादृशजनभागधेयवक्रेण दण्डकाष्ठेन। दुष्टस्येव। कृतद्वेषस्य वैरिणो महादुष्टस्यानिग्रहेऽपि ममापराधो भवत्येवेत्यर्थं। यद्वा। दुष्टश्चानपराधोऽपि निग्रह प्राप्नोत्येवेत्यर्थ। पाठान्तरे चोडे कर्णनासिकाशून्य । शुष्कवशप्रहारेण। शुष्कोऽतिदीर्घत्वप्रतिपादनाय। एवभूतस्य शिर कुटयते। तथा तव शिर कुट्टिष्यामि। राजश्यालकेत्यादि। सस्थानक

विदूषकः--अपावृतपक्षद्वारकेण पिण्डीभूतेन वातेन निर्वापित प्रदीप । भवति रदनिके निष्क्राम त्व पक्षद्वारकेण । अहमप्यभ्यन्तरचतुःशालात प्रदीप प्रज्वाल्यागच्छामि । ( इति निष्क्रात । ) ( अवावुदपक्खदुआरएण पिण्डीभूदेन[1] वादेण णिव्वाविदो पदीवो । भोदि रदणिए णिक्कम तुम पक्खदुआरएण । अह पि[2] अब्भन्तरचदुस्सालादो पदीव पज्जालिअ आअच्छामि ।)

शकार --भाव भाव अन्वेष्यामि वसन्तसेनिकाम् । ( भावे भावे अण्णेशामि वशन्तशेणिअम् ।)

विट --अन्विष्यतामन्विष्यताम् ।

शकार --( तथा कृत्वा । ) भाव भाव गृहीता गृहीता । ( भावे भावे गहिदा गहिदा ।)

विट --मूर्ख नन्वहम् ।

शकार --इतस्तावद्भूत्वैकान्ते भावस्तिष्ठतु । ( पुनरन्विष्य चेट गृहीत्वा ।) भाव भाव गृहीता गृहीता । ( इदो दाव भविअ एअन्ते भावे चिश्टदु । भावे भावे गहिदा गहिदा ।

चेट --भट्टारक चेटोऽहम् । (भट्टके चेडे हगे ।)

शकार--इतो भाव इतश्चेट । भावश्चेटश्चेटो भाव । युवा तावदेकान्ते तिष्ठतम् । (पुनरन्विष्य रदनिकां केशेषु गृहीत्वा ।) भाव भाव साप्रत गृहीता गृहीता वसन्तसेनिका ।

अन्धकारे पलायमाना माल्यगन्धेन सूचिता ।
केशहस्ते परामृष्टा चाणक्येनेव द्रौपदी ।। ३९ ।।

(इदो भावे इदो चेडे । भावे चेडे चेडे भावे । तुम्हे दाव एअन्ते चिट्ट । भावे भावे शपद गहिदा गहिदा वशन्तशेणिआ ।

अन्धआले पलाअन्ती मल्लगन्धेण शूइदा ।
केशहस्ते[3] पलामिट्टा चाणक्केणेव्व दोव्वदी ।।)

विट --

एषाऽसि वयसो दर्पात्कुलपुत्रानुसारिणी ।
केशेषु कुसुमाढ्येषु सेवितव्येषु कर्षिता ।। ४० ।।

शकार --एषाऽसि वासु शिरसि गृहीता केशेषु बालेषु शिरोरुहेषु ।
आक्रोश विक्रोश लपाधिचण्ड शभु शिव शकरमीश्वर वा ।। ४१ ।।

एशाशि वाशू शिलशि ग्गहीदा[4] केशेशु बालेशु शिलोलुहेशु ।
अक्कोश विक्कोश लवाहिचण्ड शभु शिव शंकलमीशल वा ।।

---

१ किदेण (कृतेन). २ वि ३ विन्दे (वृन्दे). ४ ग्गिहीदा.

VID —The lamp has been blown out by the breeze coming in with a burst (*lit* that was collected together), the side-door being opened Girl, Radanika, you may go out through the side-door I too shall follow you after having lighted the lamp from the interior quadrangle. ( *Exit* )

SAKARA—Friend, friend ! I shall look for Vasantasena

VITA—Do look, please, do

SAKARA—( *Does accordingly*). Friend, friend ! I have caught her !

VITA--Blockhead, it is I !

SAKARA—You should come this side and stand in a corner. ( *Again searching, and catching* Cheta ). Friend, friend ! I have caught her !

CHETA--Master, I am Cheta

SAKARA—Here is friend ( Vita ), here is Cheta Vita and Cheta, Cheta and Vita ! As for you, you both stand in a corner. ( *Again searching, and catching* Radanika *by the hair* ) Friend, friend, I have this time ( really ) caught her, I have caught Vasantasena !

Like Chanakya seizing Draupadi, I have caught her by her massive hair, as she was indicated by the scent of her chaplets while running away in the dark (39)

VITA—

Here, you, who in your pride of youth were going to seek a noble born person ( *i e* Charudatta ),—you have now been seized by the hair, which is richly decorated with flowers and which deserves to be ( so ) honoured (40)

SAKARA—

Here you are caught by your head, O maiden,—caught by your hair, by your tresses, by your locks ! Now cry or scream or shout very loudly for Sambhu, Siva, Samkara, or Isvara ! (41)

---

इति तस्य नाम । उपमर्दो निग्रह । मा दुर्गत इति । गाथा । कृतान्तस्य दैवस्य दुर्गतो नाम । नाम सभावनायाम् । चारित्रेण विहीन आढ्योऽपि दुर्गतो दरिद्रो भवति ॥ ४३ ॥ महाब्राह्मणश्चाण्डाल. । सकामेति । सकामा स्वाधीनयौवनेति-पदाभ्यामस्या धारण नापराधाय । सा वेश्या तिष्ठति न स्त्रियमित्याशय· । शील-वञ्चना दुश्चरितसभावना [ शीलस्य सद्वृत्तस्य वञ्चना प्रतारणा ।परस्त्रीपरामर्श-रूपवृत्तलोप इत्यर्थ । ]॥ ४४ ॥ जानन्ननुनयामि । आदरविषयताऽनुनय । समय क्रियाबन्ध । समयमेवाह—यदीममिति । एष इति । [ प्रणय सत्प्रार्थना-

रदनिका—( सभयम्। ) किमार्यमिश्रैर्व्यवसितम् । ( किं अज्जमिस्सेहिं ववसिदम् ।)

विट—काणेलीमात अन्य एवैष स्वरसयोग ।

शकार —भाव भाव यथा दधिशरपरिलुब्धाया मार्जारिकाया स्वरपरिवृत्तिर्भवति तथा दास्या पुत्र्या स्वरपरिवृत्ति कृता । (भावे भावे जधा [1]दहिशरपलिलुद्धाए मज्जालीए शलपलिवत्ते होदि तधा दाशीएधीए शलपलिवत्ते कडे । )

विट—कथ स्वरपरिवर्त कृत । अहो चित्रम् । अथ वा किमत्र चित्रम् ।

इय रङ्गप्रवेशेन कलाना चोपशिक्षया ।
वञ्चनापण्डिततत्वेन स्वरनैपुण्यमाश्रिता ॥ ४२ ॥

(प्रविश्य ।)

विदूषक—आश्चर्यं भो प्रदोषमन्दमारुतेन पशुबन्धोपनीतस्येव छागलस्य हृदय फुरफुरायते प्रदीप । (उपसृत्य रदनिका तथा दृष्ट्वा ।) भो रदनिके। (ही ही भो पदोसमन्दमारुदेण पसुबन्धोवणीदस्य विअ छागलस्स हिअअ फुरफुराअदि पदीवो । भो रदणिए ।)

शकार—भाव भाव मनुष्यो मनुष्य । (भात्रे भावे मणुश्शे मणुश्शे ।)

विदूषक—युक्त न्विद सदृश न्विद यदार्यचारुदत्तस्य दरिद्रतया साप्रत परपुरुषा गेह प्रवेश्यन्ते। (जुत्त ण्णेद सरिस ण्णेद ज अज्जचारुदत्तस्य दलिद्ददाए सपद परपुरिमा गेह्न पवेसीअन्ति[2] ।)

रदनिका—आर्य मैत्रेय प्रेक्षस्व मे परिभवम् । (अज्ज मित्तेअ पेक्ख मे परिहवम् ।)

विदूषक—किं तव परिभव । अथ वाऽस्माकम् । (किं तव परिहवो । आदु अम्हाणम ।)

रदनिका—ननु युष्माकमेव । (ण तुम्हाण ज्जेव ।)

विदूषक—किमेष बलात्कार । ( कि एसो बलक्कारो । )

रदनिका—अथ किम् । ( अध इ । )

विदूषक—सत्यम् । ( सच्च । )

रदनिका—सत्यम् । ( सच्चम् । )

---

नुमतिरूप ।] गुणशस्त्रै गुणा एव शस्त्राणि तै ॥ ४५ ॥ किविण कृपणम् । अशितव्य भोक्तव्यमपि नास्ति । यद्वा अन्हिअदव्व पि आह्निकद्रव्यमद्य भाक्तव्यमपीत्यर्थ । स इति । [अस्माकमिव विधा प्रकारो येषा तेऽस्मद्विधा । अर्थिन । तेषा] प्रणय प्रार्थनाभि [प्रार्थनानुरूपार्थदानै ।] स्नेहप्रकारै समयोचितदानैरित्यर्थ ' इत्येके । [विभवैः

---

१ दहिछलिल. २ पविशन्ति

RADANIKA—( *With alarm* ). What are the noble ones ( bent upon ) doing ?

VITA—Bastard, this consonance of the voice seems to be quite different!

SAKARA—Friend, friend! That whore's-daughter has changed her voice, just as a she-cat changes hers when coveting the cream of curds

VITA—How! She has changed her voice! Oh! Strange! Or rather, what is there strange about it?

She has attained skill in ( the use of ) her voice, by her acting on the ( dancing ) stage, by the training she has received in the arts, and her cleverness in ( the art of ) deception. ( 42 )

(*Entering*).

VID—Ah! Wonderful! Owing to the gentle night-breeze, the lamp is fluttering like the heart of a goat brought in for being tied to the sacrificial post ( as a victim ), ( *Approaching and seeing* Radanika *in that state* ) O Radanika!

SAK—Friend, friend! A man, a man!

VID—Is it indeed proper, is it at all becoming, that the poverty of our noble Charudatta should now make even strangers invade his house ( with impunity )?

RAD—Sir Maitreya, see how I am being insulted!

VID—What! Is that an insult to you or to us?

RAD.—Well, to you, surely!

VID—Is this violence?

RAD—What else?

VID—Really?

RAD—Really

---

सपद्गर्वादित्यर्थ । वशस्थ वृत्तम् ] ॥४६॥ शूर इति । श्लोको वैश्वदेव्या वृत्तेन । आह। उपायास्तेन रामेण जात इद व्यर्थं विरुद्धार्थम् । श्वेतकेतुरादालकिर्दुर्वासस्सा मातुल ऋषिविशेष । इन्द्रदत्तो बृहत्कथाप्रलम्बके स्यशो सस्यित ॥ ४७ ॥ दीनानामिति । [ स्वस्य गुणा स्वगुणा । स्वगुणा एव फलानि तै नत नम्र कल्पवृक्ष । ] सज्जनाना कुटुम्बमुपजीव्य । [ आदर्श मुकुर इव निदर्शनभूत । सुचरितस्य निकष कषपट्टिकेव स्थित । शीलमेव वेला तस्या समुद्र । समुद्रवेलामिव न कदापि शीलमतिक्रामता-त्यर्थ । दीनाना नावमन्तेत्यर्थ । पुरुषगुणाना दयादाक्षिण्यादीना निधि । दक्षिण सरलमुदार महत् च सत्त्व यस्य स तथा । अधिका इतरातिशायिनो गुणा यस्य स तस्य भावस्तया । अन्ये केवलमुच्छ्वसन्ति चर्मभस्त्रेवेति शेष । मालारूपकम् । आर्या वृत्तम् ]

**विदूषकः**—( सक्रोध दण्डकाष्ठमुद्यम्य । ) मा तावत् । भो स्वके गेहे कुक्कुरोऽपि तावच्चण्डो भवति किं पुनरह ब्राह्मण । तदेतेनास्मादृशजनभागधेय-कुटिलेन दण्डकाष्ठेन दुष्टस्येव शुष्कवेणुकस्य मस्तक ते प्रहारै कुट्टयिष्यामि । ( मा दाव । भो सके गेहे कुक्कुरो वि दाव चण्डो भोदि किं उण अह बम्हणो । ता एदिणा अह्मारिसजणभाअधेअकुडिलेण दण्डकठ्ठेण दुठ्ठस्स विअ सुक्खाण-वेणुअस्स[1] मत्थअ दे पहारेहिं कुट्टइस्सम्[2] । )

**विट**·—महाब्राह्मण मर्षय मर्षय ।

**विदूषक**—( विट दृष्ट्वा । ) नात्रैषोऽपराध्यति । ( शकार दृष्ट्वा । ) एष खल्वत्रापराध्यति । अरे रे राजश्यालक सस्थानक दुर्जन दुर्मनुष्य युक्त न्विदम् । यद्यपि नाम तत्रभवानार्यचारुदत्तो दरिद्र सवृत्त तत्कि तस्य गुणैर्नालकृतोज्जयिनी येन तस्य गृह प्रविश्य परिजनस्येदृश उपमर्द क्रियते । (ण एत्थ एसो अवरज्झदि । एसो क्खु एत्थ अवरज्झदि । अरे रे राअसालअ सट्ठाणअ दुज्जण दुम्मणुस्स जुत्त ण्णेदम् । जइ वि णाम तत्तभव अज्जचारुदत्तो दलिद्दो सवुत्तो ता किं तस्स गुणेहिं ण अलकिदा उज्जइणी जेण तस्स गेह पविसिअ परिअणस्स ईरिसो उवमद्दो करीअदि ।)

मा दुर्गत इति परिभवो नास्ति कृतान्तस्य दुर्गतो नाम ।
चारित्रेण विहीन आढ्योऽपि च दुर्गतो भवति ॥ ४३ ॥

( मा दुग्गदीत्ति परिहवो णत्थि कअन्तस्य दुग्गदो णाम ।
चारित्तेण विहीणो अड्ढो वि अ दुग्गदो होइ ॥)

**विट**—( सवैलक्ष्यम् ) महाब्राह्मण मर्षय मर्षय । अन्यजनशङ्कया खल्विद-मनुष्ठित न दर्पात् । पश्य ।

सकामाऽन्विष्यतेऽस्माभि

**विदूषक**—किमियम् । (किं इअम् । )

---

॥४८॥ नष्टा अदर्शन गता । अन्धस्येति । [आतुरस्य रुग्णस्य । सिद्धि कार्यसफलता । स्वल्पा मन्दा स्मृतिर्यस्य तस्य । तथा च व्यसनिन आपद्गतस्य मृगयादिव्यसनपरस्य वा । परमा उत्कृष्टा विद्या वेदान्तविद्या वा । रतिरनुराग । वसन्ततिलका वृत्तम्]॥४९॥ आलान इति । [ आलाने बन्धनस्तम्भे गृह्यते निरुध्यते । वल्गासु खलीनाकर्षणेन । हृदये तस्या अनुरागपूर्णं हृदय चेदित्यर्थ । ] यदि चेदर्थे । चेन्नास्ति । यदिद इति पाठे यद् यस्मादिद अनुरक्त हृदय] नास्ति तत तदा गम्यताम् ॥ ५० ॥

---

१ सुक्खवेणु २ पाडइस्स.

VID —( *Angrily raising his wooden stick* ) This cannot be allowed ! Look here, even a dog becomes formidable when in his own kennel, what then of a Brahamana like me ? So, by means of this wooden stick which is crooked like the luck of people like us, I will batter with blows your head, like the top of a spoiled dry bamboo !

VITA —Pardon, worthy Brahmana, pardon !

VID —( *Looking at* Vita ) He is not the guilty party in this matter ( *Looking at* Sakara ) *This* fellow, obviously, is the offender in this affair O you, king's brother-in-law, Samsthanaka, bad man, villain ! Is this indeed becoming ? Even though it is true that the noble Charudatta has been reduced to poverty, still, are not his merits an ornament to this Ujjayini, that you should enter his house and thus insult his servants ?

Insult no man because he is poor for indeed fate treats none as poor, moreover, even a rich person is poor if he be destitute of good character ( 43 )

VITA—( *Feeling ashamed* ) Pardon, worthy Brahmana, pardon ! This was done, not in insolence, but owing to our having msitaken her for another person (whom we were following) See—

An amorous woman is sought by us—

VID —What, *this* one ?

---

अभावमदर्शनम् । काकपदशीशमस्तका इति । द्यूताद्यकार्यप्रवृत्तौ काकपदाकारा ये धूर्तास्तेषा शीर्षप्राया ग्रामण्यस्तेषा मस्तकभूत धूर्तचक्रवर्तिनामपि प्रधानभूत । एतेनाचारकुलयोराक्षेप कृत । केचित्तु—'काकपदशीर्षं काकपदवत्पञ्चधा शीर्षं मस्तक यस्य । पञ्चेत्युपलक्षणम् । अष्टकपाळ [ तेनालक्षणयुक्तमस्तक इत्यर्थ ]' इत्याहुः । अत्र च मते शीशमस्तका इति शकारवाणीत्वेन पुनरुक्तत्व न दोष । दुष्टबटो । ततोऽधिकरणे व्यवहार विना इत्यनेन व्यवहारनाम्नो नवमाङ्कस्य सूचनम् । [ अधिकरणे न्यायसभायायाम् । व्यवहार निर्णयकरणम् ] लघु शीघ्रम् । णिज्जाद-माणाह निर्यातयत । तव मयाऽनुबद्धा प्रीतिर्भविष्यति । कूष्माण्डीत्यादि । उपजातिच्छन्दसा । कूष्माण्डी गोमयलिप्तवृता शाक च शुष्क पलिर प्रचुरप्रलेह मासम् । [ तलित घृतपक्वम् । तदुक्त भावप्रकाशे—'शुद्धमासविधानेन मास सम्यक्प्रसाधितम् । पुनस्तदाज्ये सभृष्ट तलित प्रोच्यते बुधै ॥' इति । ] 'तलिद स्नेहपक्वे देशी' इत्येके । 'भडिदे' इति पाठे भटित्रमित्यर्थ । 'शूलाकृत भटित्र च' इत्यमर । भक्त च हैमन्तिकरात्रिसिद्ध लीणे अ [विले लीनाया च वेलायाम् । गते

**विट** --शान्त[1] पापम् ।

**काचित्स्वार्यगर्मयौवना ।**
**सा नष्टा[2] शङ्कया तस्या प्राप्तेय शीलवञ्चना ॥ ४४ ॥**

सर्वथेदमनुनयसर्वस्व गृह्यताम् । (इति खड्गमुत्सृज्य कृताञ्जलिः पादयो पतति ।)

**विदूषक** --सत्पुरुष उत्तिष्ठोत्तिष्ठ । अजानता मया त्वमुपालब्ध. । साम्प्रत पुनर्जानन्ननुनयामि । (सप्पुरिस उठ्ठेहि उठ्ठेहि । अआणन्तेण मए तुम उवालद्धे । सपद उण जाणन्तो अणुणेमि । )

**विट** --ननु भवानेवात्रानुनेय । तदुत्तिष्ठामि समयत ।

**विदूषक** --भणतु भवान् । ( भणादु भवम् । )

**विट** --यदीम वृत्तान्तमार्यचारुदत्तस्य[3] नाख्यास्यसि[4] ।

**विदूषक** --न कथयिष्यामि । ( ण कधइस्सम् । )

**विट** --

**एष ते प्रणयो विप्र शिरसा धार्यते मया ।**
**गुणशस्त्रैर्वय येन शस्त्रवन्तोऽपि निर्जिता ॥ ४५ ॥**

**शकार** --( सासूयम् । ) किंनिमित्त पुनर्भाव एतस्य दुष्टबटुकस्य कृपणाञ्जलिं कृत्वा पादयोर्निपतित । (किंणिमित्त उण भावे एदश्श दुट्टबडुअश्श किविणअञ्जलिं[5] कदुअ पाएशु णिवडिदे ।)

**विट** --भीतोऽस्मि ।

**शकार** --कस्मात्त्व भीत । ( कश्श तुम भीदे ।)

**विट** --तस्य चारुदत्तस्य गुणेभ्य ।

**शकार** --के तस्य गुणा यस्य गृह प्रविश्याशितव्यमपि नास्ति । ( के तश्श गुणा जश्श गेह पविशिअ अशिदव्व पि णत्थि ।)

**विट** --मा मैवम् ।

**सोऽस्मद्विधाना प्रणयैः कृशीकृतो**
**न तेन कश्चिद्विभवैर्विमानित ।**
**निदाघकालेष्विव सोदको ह्रदो ।**
**नृणा स तृष्णामपनीय शुष्कवान् ॥ ४६ ॥**

**शकार** --( सामर्षम् । ) क स गर्भदास्या॰ पुत्र ।

**शूरो विक्रान्त पाण्डव श्वेतकेतु**
**पुत्रो राधाया रावण इन्द्रदत्त ।**
**आहो कुन्त्यां तेन रामेण जात**
**अश्वत्थामा धर्मपुत्रो जटायु ॥ ४७ ॥**

---

१ शान्त पाप शान्त पापम् २ भ्रष्टा. ३ आर्येति नास्ति क्वचित् ४ नाख्यापयसि. ५ किं विणअ

VITA—Heaven forbid !

—Who is a courtesan ( *lit* the mistress of her youth ) She disappeared, and, mistaking this lady for her, we came to commit this breach of decorum ( *lit* good character ) ( 44 )

Please accept this all-in-all of conciliation ( unconditional apology ) *He throws away his sword, and folding his hands prostrates himself at his feet* )

VID —Good man, get up, get up I blamed you as I did not know ( your real nature ). Now that I know it, I will apologize to you

VITA—It is indeed you to whom we owe an apology in this affair So, I will get up, ( but ) on condition.

VID —Speak ( what it is )

VITA—( I will get up ) if you will not tell Charudatta of this incident

VID —I will not tell

VITA—

This favour of you, O Brahmana, I bear on my head ( i e accept with great respect ), ( of you ) by whom, we, even though armed with real weapons, have been conquered with the weapons of virtues ( 45 )

SAK —( *With jealous anger* ) Well, for what reason did you fall at this rascally fellow's feet, folding your hands cringingly ?

VITA—Because I am afraid

SAK —Of what are you afraid ?

VITA—Of the virtues of that Charudatta

SAK —What sort of virtues does he possess, when on entering his house one does not find even eatables there ?

VITA—Nay, say not so

He has become impoverished by ( granting ) the prayers of persons like us , never did he insult anyone in his ( pride of ) wealth He has dried up ( i e become poor ) by having satisfied the thirst ( i e needs ) of men, like a reservoir, full of water, in the hot season ( 46 )

SAK —( *Indignantly*) Who is he, that son-of a-born-slave ?

Is he Svetaketu, the brave and valiant son of Pandu ? Or is he Ravana, the Indra-given son of Radha ? Or is he Asvatthama, born of Kunti from that ( well-known ) Rama ? Or is he Jatayu, the son of Dharma ? (47)

(के शे गब्भदासीएपुत्ते ।

शूले विक्कन्ते पण्डवे शेदकेदू पुत्ते लाधाए लावणे इन्ददत्ते ।

आहो कुन्तीए तेण लामेण जादे अश्शत्थामे धम्मपुत्ते जडाऊ ॥ )

विट —मूर्ख आर्यचारुदत्त खल्वसौ ।

दीनाना कल्पवृक्ष स्वगुणफलनत सज्जनाना कुटुम्बी
आदर्श[1] शिक्षिताना सुचरितनिकष शीलवेलासमुद्र ।
सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो
ह्येक श्लाध्य स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये ॥ ४८ ॥

तदितो गच्छाम ।

शकार —अगृहीत्वा वसन्तसेनाम् । ( अगेण्हिअ वशन्तशेणिअम् । )

विट —नष्टा वसन्तसेना ।

शकार —कथमिव । ( कध विअ । )

विट —

अन्धस्य दृष्टिरिव, पुष्टिरिवातुरस्य ।
मूर्खस्य बुद्धिरिव, सिद्धिरिवालसस्य ।
स्वल्पस्मृतेर्व्यसनिन परमेव विद्या
त्वा प्राप्य सा रतिरिवारिजने प्रनष्टा ॥ ४९ ॥

शकार —अगृहीत्वा वसन्तसेना न गमिष्यामि । (अगेण्हिअ वशन्तशेणिअ ण गमिश्शम् ।)

विट —एतदपि न श्रुत त्वया ।

आलाने गृह्यते हस्ती वाजी वल्गासु गृह्यते ।
हृदये गृह्यते नारी यदीद[2] नास्ति गम्यताम् ॥ ५० ॥

शकार —यदि गच्छसि गच्छ त्वम् । अह न गमिष्यामि । (यदि गच्छशि गच्छ तुमम् । हगे ण गमिश्शम् ।)

विट —एवम् । गच्छामि । (इति निष्क्रान्त ।)

---

समये इत्यर्थ । लीणे वेळे इति पुलिङ्ग शकारवचनत्वेन न दोष । अत पूर्वमेवोक्त—'आगमलिङ्गविहीनम्' इत्यादीति ध्येय सुधीभि । न खलु भवति पूतिर्दुर्गन्धताऽपि तु भवत्येव इति काकु—इति लल्लादीक्षित ।] ऋण च वैर च न भवति। पूदी पूति । चिरतनत्वेन प्रशिथिल स्वकार्यम् ॥ ५१ ॥ शोश्तक शोभनम् । लश्तक सकपटम् । भणिष्यसि । तथा भणिश्यसि । भणेशीति भविष्यद्वर्तमानयोस्तुल्य रूपम् । यथाऽहमात्मकीयाया प्रासादस्य बालाग्रलक्षिताया कपोतपालिकाया विटङ्के । 'बालाग्र मत्तवारणम् । कपोतपालिका उपरिगृहश्रेणीति दक्षिणापथे लोकोक्तिरियम्' इति प्राचीनटीका । तस्यामुपविष्ट शृणोमि । अन्यथा यदि भणसि तदा कपाट-

---

१ चादर्श. २ यदिद.

VITA—You fool! He is, as is well known, the worthy Charudatta

To the distressed, he is the wish-yielding tree, bent down with (the load of) the fruit of his virtues To the virtuous he is a family-head To the learned he is a mirror (reflecting learning) He is the touch stone of moral conduct, and the ocean having righteousness for its coast-line (i e never transgressing it) He is (ever) hospitable, and never shows disrespect He is a treasure of all manly virtues, and is courteous and magnanimous by nature. By reason of his manifold virtues, he alone, deserving of praise, really lives, while others are (merely) breathing as it were. (48)

So we shall go away from this place

SAK —Without taking Vasantasena (with us)?

VITA—Lost is your Vasantasena!

SAK —How, indeed?

VITA,—

Meeting with you, she has vanished, like the sight of a blind man, or the robustness of a sick person, or the common sense of a fool, or the achievement of an idle fellow, or the highest kind of (i e. Vedic) learning in the case of one of weak memory and addicted to vices, or like the feeling of love towards an enemy (49)

SAK —I will not go without taking Vasantasena (with me).

VITA—Have you not heard even this?—

"An elephant can be held by means of a tying-rope, a horse by means of reins, and a woman by the heart if you haven't this, then go away" (50)

SAK —If you want to go, you may. I won't go.

VITA—All right I am off (*Exit*)

---

प्रविष्ट कपित्थगुलिकमिव मस्तक तव शब्दविशेषयुक्त [ मडमड इति शब्दयुक्त ] तथा भक्षयिष्यामि लोकोक्त्या मडमडायिश्शमिति व्याख्यायते । कपित्थ फलविशेष । 'लस्तक शोस्तक द्वयमपि शोभनार्थम्' इति प्राचीनटीका । [अपवार्येति । तल्लक्षण—'तद्भवेदपवारितम् । रहस्य तु यदन्यस्य परावृत्य प्रकाशते ॥' इति । ] गतो भावो विट सत्यम् । एषोऽसि । भट्टारक स्वामिक । निर्वल्कलमित्यादि । उपजातिच्छन्दसा । निर्वल्कल [निर्गत वल्कल लक्षणया कोश यस्य त विकोशमित्यर्थ ।] मूलकपेशित्रणम् । पेशी त्वक् । मूलकत्वग्वर्णम् । आलोहितमित्यर्थ । [एतादृशमसि] स्कन्धेन गृहीत्वा च कोशीसुप्तम् । अल्पार्थे स्त्रीत्वम् । कोशावस्थितमित्यर्थ । कोशावस्थित कृत्वेति यावत् ।] कुक्कुरै कुक्कुरीभिश्च शब्दायमानो

शकार—गत खलु भावोऽभावम्। (विदूषकमुद्दिश्य।) अरे काकपदशीर्ष-मस्तक दुष्टबटुक उपविशोपविश। ( गडे क्खु भावे अभावम्। अले काकपदशीश-मश्तक[1] दुश्टबडुका उवविश उवविश। )

विदूषक—उपवेशिता एव वयम्। ( उववेसिदा ज्जेव अम्हे। )

शकार—केन। ( केण। )

विदूषक—कृतान्तेन। ( कअन्तेण।)

शकार—उत्तिष्ठोत्तिष्ठ। (उठ्ठेहि उठ्ठेहि। )

विदूषक—उत्थास्याम। ( उठ्ठिस्सामो। )

शकार—कदा। ( कदा। )

विदूषक—यदा पुनरपि दैवमनुकूलं भविष्यति। ( जदा पुणो वि देव्वं अणुऊल भविस्सदि। )

शकार—अरे रुदिहि रुदिहि। ( अले लोद लोद। )

विदूषक—रोदिता एव वयम्। ( रोदाविदा ज्जेव अम्हे।)

शकार—केन। ( केण। )

विदूषक—दुर्गत्या। (दुग्गदीए।)

शकार—अरे हस हस। ( अले हश हश।)

विदूषक—हसिष्याम। ( हसिस्सामो। )

शकार—कदा। ( कदा। )

विदूषक—पुनरपि ऋद्ध्याऽऽर्यचारुदत्तस्य। ( पुणो वि ऋद्धीए[2] अज्जचारुदत्तस्स[3]। )

शकार—अरे रे दुष्टबटुक भणिष्यसि मम वचनेन तं दरिद्रचारुदत्तकम्—'एषा ससुवर्णा सहिरण्या नवनाटकदर्शनोत्थिता सूत्रधारीव वसन्तसेना नाम गणिका-दारिका कामदेवायतनोद्यानात्प्रभृति त्वामनुरक्ताऽस्माभिर्बलात्कारानुनीयमाना तव गेहं प्रविष्टा। तद्यदि मम हस्ते स्वयमेव प्रस्थाप्यैनां समर्पयसि ततोऽधिकरणे व्यवहारं विना लघु निर्यातियतस्तव मयाऽनुबद्धा प्रीतिर्भविष्यति। अथ वाऽनिर्यातियतो मरणान्तिकं वैरं भविष्यति। अपि च प्रेक्षस्व प्रेक्षस्व। ( अलेले[4] दुश्टबडुका भणेशि मम वअणेण तं दलिद्दचालुदत्तकम्—'एशा शशुवण्णा शहिलण्णा णवणा-डअदशणुठ्ठिदा शुत्तधालिव्व वशन्तशेणा णाम गणिआदालिआ कामदेवाअदणुज्जाणादो पहुदि तुमं अणुलत्ता अम्हेहिं बलक्कालाणुणीअमाणा तुह गेहं पविश्टा। ता जइ मम हश्ते[5] शअं ज्जेव पठ्ठाविअ एणं शमप्पेशि तदो अधिअलणे ववहालं विणा लहु णिज्जादमाणाह तव मए अणुबद्धा पीदी हुविश्शदि। आदु अणिज्जादमाणाह मलणन्तिके वेले हुविश्शदि। अवि अ पेक्ख पेक्ख।)

---

१ पदमश्तशीशक. २ सिद्धीए ३ अज्ज इति नास्ति क्वचित्. ४ अले. ५ हत्थे.

SAK —Well, he has taken himself off ! ( *To the* Vid ) You villainous fellow, with your pate and head of the shape of a crow's foot ! Sit down, sit down !

VID —We have been already made to sit down

SAK —By whom ?

VID —By fate

SAK —Well, get up, get up

VID —We shall get up

SAK —When ?

VID —When fate will again become favourable

SAK —Eh, weep, weep !

VID —We have been already made to weep

SAK —By whom ?

VID —By poverty

SAK —Eh, laugh, laugh !

VID —We shall laugh

SAK —When ?

VID —When the noble Charudatta attains prosperity again.

SAK —You villainous fellow ! Say to that beggar Charudatta at my bidding (as follows) —" This courtesan, named Vasantasena decked with gold and covered with gold, (and charming) like the chief actress rising up for (or, at) the exhibition of a new play, who has fallen in love with you since (her visit to) the garden of Cupid's temple, has entered your house while we were trying to win her over by force, so, if you, of your own accord, send her away and place her in my hands, then there will subsist permanent friendliness between you and me, by your quickly restoring her without ( any recourse on my part to ) judicial proceedings in a court af law And if you don't restore her, there will be (between us ) a feud lasting till death Moreover, observe carefully—

---

यथा शृगालस्तथा स्वगृह प्रयामि । विदूषकरदनिके कुक्कुरकुक्कुरीस्थाने ॥ ५२ ॥ [सयतमुखी नियन्त्रितवदना । नाह कथञ्चिन्निवेदयामीत्यर्थं । ] एव ण्णेदमिति एवार्थे । रोहसेनश्चारुदत्तसुत । अम्हहे विस्मये । अनुदासीन साभिलाषम् । तदनुरूपचेष्टायोगात् । अभ्यन्तरगमनस्याभागिनी । वेश्यात्वात् । यदेति । भाग्य शोभन कर्म [यदा नर भाग्यक्षयेण विभवनाशेन पीडिता सकटा कृतान्तेन दैवेन उपहिता प्रापिता दशा प्रतिपद्यते तदा । विरज्यते विरक्तो भवति । वशस्थ वृत्तम् ] ॥५३॥ अविज्ञातेति । [ अविज्ञाता यथार्थतोऽज्ञाता । अत एव अवसक्तेनाङ्गलग्नेन मम वाससा दूषिता । यद्वा अविज्ञातायामवसक्तेन लग्नेन इति एक पदम् । अविज्ञात यथा

**कूष्माण्डी गोमयलिप्तवृन्ता शाक च शुष्क तलित खलु मासम् ।**
**भक्त च हैमन्तिकरात्रिसिद्ध लीनाया च वेलाया न खलु भवति पूति ॥५१॥**

(कश्चालुका[1] गोच्छडलित्तवेण्टा शाके अ शुक्खे तलिदे[2] हु मशे ।
भत्ते अ हेमन्तिअलत्तिशिद्धे लीणे अ वेले ण हु होदि पूदी ॥')

शोभन भणिष्यसि । सकपट भणिष्यसि । तथा भणिष्यसि यथाऽहमात्मकीयाया प्रासादबालाग्रकपोतपालिकायामुपविष्ट श्रृणोमि । अन्यथा यदि भणसि तदा कपाटप्रविष्टकपित्थगुलिकमिव मस्तक ते मडमडायिष्यामि । (शोश्तक[3] भणेशि । लश्तक[4] भणेशि । तधा भणेशि जधा हगे अत्तणकेलिकाए पाशादबालग्गकवोदवालिआए उवविश्टे शुणामि । अण्णधा[5] जदि भणेशि ता कवालपविट्ठकवित्थगुडिअ[6] विअ मश्तअ दे मडमडाइश्शम् ।)

**विदूषक**—भणिष्यामि । (भणिस्सम् ।)

**शकार**—(अपवार्य ।) चेट गत सत्यमेव भाव । (चेडे गडे शच्चक ज्जेव भावे ।)

**चेट**—अथ किम् । (अध इ ।)

**शकार**—तच्छीघ्रमपक्रमाव । (ता शिग्घ अवक्कमम्ह ।)

**चेट**—तद्गृह्णातु भट्टारकोऽसिम् । (ता गेण्हदु[7] भट्टके अशिम् ।)

**शकार**—तवैव हस्ते तिष्ठतु । (तव ज्जेव हत्थे चिश्ठदु ।)

**चेट**—एष भट्टारकस्य । गृह्णात्वेन भट्टारकोऽसिम् । (एशे भट्टालकस्य । गेण्हदु ण भट्टके अशिम् ।)

**शकार**—(विपरीत गृहीत्वा ।)

**निर्वल्कल मूलकपेशिवर्णं स्कन्धेन गृहीत्वा च कोशसुप्तम् ।**
**कुक्कुरै कुक्कुरीभिश्च बुक्कयमानो यथा शृगाल शरण प्रयामि ॥५२॥**

(णिव्वक्कल मूलकपेशिवण्ण खन्धेण घेत्तूण अ कोशशुत्तम्[8] ।
कुक्केहिं कुक्कीहिं अ [9]बुक्कअन्ते जधा शिआले शलण पलामि ॥)

(परिक्रम्य निष्क्रान्तौ ।)

**विदूषक**—भवति रदनिके न खलु तेऽयमपमानस्तत्रभवतश्चारुदत्तस्य निवेदयितव्यः । दौर्गत्यपीडितस्य मन्ये द्विगुणतरा पीडा भविष्यति । (भोदि रदणिए ण क्खु दे अअ अवमाणो तत्तभवदो चारुदत्तस्य णिवेदइदव्वो । दोग्गच्चपीडिअस्स मण्णे दिउणदरा पीडा हुविस्सदि ।

**रदनिका**—आर्य मैत्रेय रदनिका खल्वह सयतमुखी । (अज्ज मित्तेअ रदणिआ क्खु अह सजदमुही ।)

---

१ कक्कालुका (कर्कालुका). २ पलिर ३ शोट्टक (स्वस्तिक) ४ लहुअ (लघुक). ५ तधा जदि ण ६ कवालतल ७ गेण्ह म. ८ कोशि० ९ भुक्क.

A pumpkin whose stalk is besmeared with cow's dung, a vegetable that has been dried, meat which is fried, and boiled rice that has been cooked at night in the cold season—these do not get spoiled (*lit* putrefy) even by lapse of time (And so will be my enmity ever-lasting ) " (51)

Speak well, and speak craftily , speak in such a ( loud ) voice that I may hear you when seated in the elephant corniced upper terrace of my palace If you speak in any other manner, I will crunch your head like a round *Kapittha* fruit crushed by being inserted between the panels of a door

VID —I will speak ( as you desire

SAK —( *Aside* ) Cheta, has Vita really gone ?

CHETA—He has

SAK —Then let us be off quickly

CHETA—Then let the master take the sword.

SAK —Let it be in your own hand.

CHETA—It belongs to the master Let the master keep it with him

SAK —( *Seizing it by the wrong end* )

Like a jackal pursued with yells by dogs and bitches ( going to his lair ), I go to my house, bearing on my shoulder this unsheathed sword resembling in colour the radish-skin, after making it rest in its scabbard (52)

( *They walk about and depart* )

VID —Girl, Radanika, you should not inform Charudatta about this insult offered to you , for I think he would be doubly pained ( to hear it ), afflicted as he already is by poverty

RAD —Sir Maitreya, I am, indeed, Radanika , my lips are sealed

---

तथा अवसक्तेनेति वा । ननु भूषिता इत्यनेन औदार्याख्यो नायिकालकार प्रदर्शित । 'औदार्यं विनय सदा' इति लक्षणात् । ] दूषिता परपुरुषत्वात् ॥ ५४ ॥ यथेति । [ क्षीणे नष्टे विभवविस्तरे सपन्निधौ सति यया जनित मम काम साफल्याभावात् । कुत्सित पुरुष कुपुरुष निस्तेजस्क पुमास्तस्य क्रोध इव स्वगात्रेष्वेव ] सीदति कर्तंव्यासामर्थ्यात्प्रव्यक्तो न भवति । [ तत्रैव विलीयते इत्यर्थं । ] अत्र 'अल परकलत्रशङ्कया' इत्यारभ्य 'अये इय वसन्तसेना' इत्यन्तेन नायकोपकारिकाया अर्थंसपत्तेरवगमात्प्रथम पताकास्थानमिदम् । तदुक्तं— 'सहसैवार्थंसपत्तिर्नायकस्योपकारिका । पताकास्थानक सवौ प्रथमे तन्मतम्'

विदूषक --एव न्विदम् । (एव ण्णेदम् ।)

चारुदत्त --( वसन्तसेनामुद्दिश्य । ) रदनिके मारुताभिलाषी प्रदोषसमय-शीतार्तो[1] रोहसेन । तत प्रवेश्यतामभ्यन्तरमयम् । अनेन प्रावारकेण छादयैनम् । (इति प्रावारक प्रयच्छति ।)

वसन्तसेना--(स्वगतम् ।) कथ परिजन इति मामवगच्छति । ( प्रावारक गृहीत्वा समाघ्राय च स्वगत सस्पृहम् ।) आश्चर्यम् । जातीकुसुमवासित प्रावारक । अनुदासीनमस्य यौवन प्रतिभासते । (अपवारितकेन प्रावृणोति ।) (कध परि-अणोत्ति म अवगच्छदि । अम्हहे । जादीकुसुमवासिदो पावारओ । अणुदासीण से ज्जोव्वण पडिभासेदि ।)

चारुदत्त --ननु रदनिके रोहसेन गृहीत्वाऽभ्यन्तर प्रविश ।

वसन्तसेना--( स्वगतम् । ) मन्दभागिनी खल्वह तवाभ्यन्तरस्य । ( मन्द-भाईणी क्खु अह तुम्हे अब्भन्तरस्स ।)

चारुदत्त --ननु रदनिके प्रतिवचनमपि नास्ति । कष्टम् ।

**यदा तु भाग्यक्षयपीडितां दशा नर· कृतान्तोपहिता प्रपद्यते ।**
**तदाऽस्य मित्राण्यपि यान्त्यमित्रता चिरानुरक्तोऽपि विरज्यते जन ॥५३॥**

(उपसृत्य[2] रदनिका विदूषकश्च ।)

विदूषक --भो इय सा रदनिका । (भो इअ सा रदणिआ ।)

चारुदत्त --इय सा रदनिका । इयमपरा का ।

**अविज्ञातावसक्तेन दूषिता मम वाससा ।**

वसन्तसेना--(स्वगतम ।) ननु भूषिता । (ण भूसिदा ।)

चारुदत्त --

**छादिता शरदभ्रेण चन्द्रलेखेव दृश्यते ॥ ५४ ॥**

अथ वा न युक्त परकलत्रदर्शनम् ।

विदूषक --भो अल परकलत्रदर्शनशङ्कया । एषा वसन्तसेना कामदेवायतनो-द्यानात्प्रभृति भवन्तमनुरक्ता । (भो अल परकलत्तदसणसङ्काए । एसा वसन्तसेणा कामदेवाअदणुज्जाणादो पहुदि भवन्तमणुरत्ता ।)

चारुदत्त --अये[3] इय वसन्तसेना । (स्वगतम् ।)

**यया मे जनित काम क्षीणे विभवविस्तरे ।**
**क्रोध कुपुरुषस्येव स्वगात्रेष्वेव सीदति ॥ ५५ ॥**

विदूषक --भो वयस्य एष खलु राजश्यालो भणति । (भो वअस्स एसो क्खु राअसालो भणादि ।)

---

१ समय । शीता०. २ विदूषक रदनिकामुपसृत्य ३ अये इति नास्ति क्वचित्.

VID —Well, so be it.

CHAR —( *To Vasantasena* ) Radanika ( the boy ) Rohasena covetous of ( enjoying ) the breeze, is now suffering from the chilliness of the night-time So let him be carried inside And cover him with this cloak ( *He gives her the cloak* )

VAS —(*To herself*) How now ! He takes me for his servant ! ( *Taking up the cloak she smells it : then longingly to herself* ) Ah ! This cloak bears the scent of jasmine flowers ! His youth seems to be not indifferent ( to the pleasures of life ), after all ( *She turns aside and covers herself with it* )

CHAR.—I say, Radanika, take Rohasena and go inside

VAS —( *To herself* ) Alas ! I have not the good fortune to ( enter ) your inside

CHAR —I say, Radanika, you don't even make a reply ! Alas !

When a man attains a state brought on by fate and painful on account of the loss of prosperity, even his friends turn into his enemies, and even persons who have long been attached to him grow cold (53)

( Radanika *and* Vidushaka *approach* )

VID —Sir, *here* is that Radanika

CHAR —This is our Radanika ! Then who is this another lady,

Who is desecrated by my garment which I threw at her in ignorance—

Vas —( *To herself* ). Say rather *consecrated.*

CHAR —

—And who appears like the lunar digit obscured by an autumnal cloud ? (54)

Or rather, it is improper to look at another's wife

VID —Sir, you need not have any fear about looking at another's wife This is Vasantasena, who has fallen in love with you since ( her visit to ) the garden of Cupid's shrine

CHAR —Ah, this is Vasantasena ! ( *To himself* )

—The passion inspired in me by whom subsides in my limbs like the anger of a cowardly person, now that my ample ( large ) fortune has declined (55)

VID.—My friend, this is what the king's brother-in-law says—

**चारुदत्त**—किम् ।

**विदूषक**—एषा ससुवर्णा सहिरण्या नवनाटकदर्शनोत्थिता सूत्रधारीव वसन्तसेना नाम गणिकादारिका कामदेवायतनोद्यानात्प्रभृति त्वामनुरक्ताऽस्माभिर्बलात्कारानुनीयमाना तव गेहं प्रविष्टा । (एसा ससुवण्णा सहिलण्णा णवणाडअदसणुट्ठिदा सुत्तधालिव्व वसन्तसेणा णाम गणिआदालिआ कामदेवाअदणुज्जाणादो पहुदि तुमं अणुलत्ता अम्हेहिं बलक्कालाणुणीअमाणा तुह गेहं पविट्ठा ।)

**वसन्तसेना**—(स्वगतम् ।) बलात्कारानुनीयमानेति यत्सत्यमलङ्कृताऽस्म्येतैरक्षरैः । (बलक्कालाणुणीअमाणेत्ति जं सच्चं अलंकिदम्हि एदेहिं अक्खरेहिं ।)

**विदूषक**—तद्यदि मम हस्ते स्वयमेव प्रस्थाप्यैनां समर्पयसि ततोऽधिकरणे व्यवहारं विना लघु निर्यातयतस्तव मयाऽनुबद्धा प्रीतिर्भविष्यति । अन्यथा मरणान्तिकं वैरं भविष्यति । (ता जइ मम हत्थे सअं ज्जेव्व पट्ठाविअ एणं समप्पेसि तदो अधिअलणे ववहालं विणा लहु णिज्जादमाणाह तव मए अणुबद्धा पीदी हुविस्सदि। अण्णधा मलणन्तिके वेले हुविस्सदि ।)

**चारुदत्त**—(सावज्ञम् ।) अज्ञोऽसौ । (स्वगतम् ।) अये कथं देवतोपस्थानयोग्या युवतिरियम् । तेन खलु तस्यां वेलायां

> **प्रविश गृहमिति प्रतोद्यमाना**
> **न चलति भाग्यकृतां दशामवेक्ष्य ।**
> **पुरुषपरिचयेन च प्रगल्भं**
> **न वदति यद्यपि भाषते बहूनि ॥ ५६ ॥**

(प्रकाशम् ।) भवति वसन्तसेने अनेनाविज्ञानादपरिज्ञातपरिजनोपचारेणापराद्धोऽस्मि । शिरसा भवतीमनुनयामि ।

**वसन्तसेना**—एतेनानुचितभूमिकारोहणेनापराद्धाऽऽर्यं शीर्षेण प्रणम्य प्रसादयामि (एदिणा अणुचिदभूमिआरोहणेण अवरज्झा अज्ज सीसेण पणमिअ पसादेमि।)

---

इति ॥ ५५ ॥ एषेत्यादि पूर्वोक्तमेव भणति । अलङ्कृताऽस्मीति । ममान्यत्राभिलाषो नास्तीत्यर्थः ] । देवतेवोपस्थानं [ स्तुत्योपचरणम् । यद्वा देवतया उपस्थानं समागमः । तस्य योग्या । तस्यां वेलायां रोहसेनस्य गृहप्रवेशाज्ञादानकाले । ] [ अनेन विलोभनं नामाङ्गमुपक्षिप्तम् । 'गुणाख्यानं विलोभनम्' इति तल्लक्षणम् । ] प्रविश गृहमिति । [ प्रतोद्यमाना सपरुषाक्षरमनुरुध्यमानाऽपि । भाग्यकृतां मद्दैवकृतामवस्थामवेक्ष्य दाक्षिण्यात् न चलति अन्यत्र न गता । यद्यपि गणिकात्वेन लब्धपाटवत्वाद्बहूनि भाषते तथाऽपि अधुना पुरुषपरिचयेन मादृशस्य पुरुषस्य संगत्या प्रगल्भं धृष्टं न भाषते । सविनयमेव वक्तीत्यर्थः । ] पुष्पिताग्रा वृत्तम् ॥ ५६ ॥ [ अज्ञानात् अपरिज्ञातायां त्वयि यः परिजनवदुपचारः आज्ञाकरणादिरूपः तेन । ]

CHAR —What is it ?

VID —" This courtesan, named Vasantasena, decked with gold and covered with gold, ( and charming ) like the chief actress rising up for ( or, at ) the exhibition of a new play, who has fallen in love with you since ( her visit to ) the garden of Cupid's temple, has entered your house while we were trying to win her over by force

VAS —( *To herself* ) To tell the truth, I have been obliged ( *lit* decked ) by these words ( of his ), *viz* " trying to win her over by force."

VID —" So, if you, of your own accord, send her away and place her in my hands, then there will subsist permanent friendliness between you and me, by your quickly restoring her without (any recourse on my part to) judicial proceedings in a court of law Otherwise there will be ( between us ) a feud lasting till death "

CHAR —( *Contemptuously* ) He is a fool ! ( *To himself* ) Ah ! How now ! She is indeed a lady fit to be waited upon ( worshipped ) like a goddess ! Hence it was that at that time,

She, although ordered to enter the house did not move away, observing my ( penurious ) condition brought upon by fate And although she can talk boldly in a variety of ways owing to her familiarity with men, she does not speak boldly (56)

( *Aloud* ) Madam Vasantasena, I have offended you by thus treating you like a servant, not recognizing you through my ignorance So here I ask your pordon with my ( bent ) head,

VAS — I have to conciliate your honour by bowing down to you with my head, since I have offended you by this intrusion into a place of which I am unworthy.

---

अनुचित भूमिसमारोहण पक्षद्वारेणावासप्रवेशादिकम् । [ कलम शालिविशेष केदार. क्षेत्र च ताविव । ] करभ उष्ट्रशिशु तस्य जानु तत्सदृशेन । अवर्तुलेन निम्नोन्नतेन चेति भाव । तिष्ठतु प्रणय आस्तामिय प्रणयोक्ति । अय प्रणय स्नेह तिष्ठतु स्थिरो भवत्विति गूढाभिसधि । ] प्रणय इत्यनेन सभोगप्रार्थना कटाक्षिता । ईदृशेन गहीतसभोगोपकरणादिना । पापा अकार्यकारिण । भग्नत्वाद्रक्षकाभावाच्चायोग्यता । अत्यन्तप्रश्रयवत्त्वादनुग्रह. । चोरेहिं हरिज्जउ इति सधिच्छेदनाम्नस्तृतीयाङ्कस्य सूचनम् । [ तेन चेह तृतीय पताकास्थानकमुक्तम् । ' अर्थोपक्षेपकमनुलीन सविनय भवेत् । श्लिष्टप्रत्युत्तरोपेत तृतीयमिदमुच्यते ॥ ' इति । ] चतुष्पथोपनीत इवोपहारो

विदूषक--भो द्वावपि युवा सुख प्रणम्य कलमकेदारावन्योन्यशीर्षेण शीर्षं समागतौ। अहमप्यमुना करभजानुसदृशेन शीर्षेण द्वावपि युवा प्रसादयामि। ( इत्युत्तिष्ठति। ) (भो दुवेवि तुम्हे सुख[१] पणमिअ कलमकेदारा अण्णोण्ण सीसेण सीस समाअदा। अह पि इमिणा करहजाणुसरिसेण सीसेण दुवेवि तुम्हे पसादेमि।[२]

चारुदत्त--भवतु। तिष्ठतु प्रणय।

वसन्तसेना--( स्वगतम्।) चतुरो मधुरश्चायमुपन्यास। न युक्तमद्येदृशेनेहागतया मया प्रतिवस्तुम्। भवतु। एव तावद्भणिष्यामि। (प्रकाशम्।) आर्य यद्येवमहमार्यस्यानुग्राह्या तदिच्छाम्यहमिममलकारकमार्यस्य गेहे निक्षेप्तुम्। अलकारस्य निमित्तमेते पापा अनुसरन्ति। ( चदुरो मधुरो अ अअ उवण्णासो। ण जुत्त अज्ज एरिसेण इध आअदाए मए पडिवसिदुम्। भोदु। एव्व दाव भणिस्सम्। अज्ज जइ एव्व अह अज्जस्स अणुग्गेज्झा ता इच्छे अह इम अलकारअ अज्जस्स[३] गेहे णिक्खिविदुम्। अलकारस्स णिमित्त एदे पावा अणुसरन्ति।)

चारुदत्त--अयोग्यमिद न्यासस्य गृहम्।

वसन्तसेना--आर्य अलीकम्। पुरुषेषु न्यासा निक्षिप्यन्ते न पुनर्गेहेषु। (अज्ज अलीअम्। पुरुसेसु णासा णिक्खिविअन्ति ण उण गेहेसु।)

चारुदत्त--मैत्रेय गृह्यतामयमलकार।

वसन्तसेना--अनुगृहीताऽस्मि। ( इत्यलकारमर्पयति। ) (अणुग्गहिदम्हि।)

विदूषक--(गृहीत्वा।) स्वस्ति भवत्यै। ( सोत्थि भोदीए।)

चारुदत्त--धिङ् मूर्ख न्यास खल्वयम्।

विदूषक--(अपवार्य।) यद्येव तदा चौरैर्ह्रियताम्-( जइ एव्वं ता चोरेहिं हरिज्जउ--)

चारुदत्त--अचिरेणैव कालेन--

विदूषक--एषोऽस्या अस्माक विन्यास। (एसो से अम्हाण विण्णासो।)

चारुदत्त--निर्यातयिष्ये।

वसन्तसेना--आर्य इच्छाम्यहमनेनार्येणानुगम्यमाना स्वक गेह गन्तुम्। (अज्ज इच्छे अह इमिणा अज्जेण अणुगच्छिज्जन्ती सक गेह गन्तुम्।)

चारुदत्त--मैत्रेय अनुगच्छ तत्रभवतीम्।

विदूषक--त्वमेवैता कलहसगामिनीमनुगच्छन्राजहस इव शोभसे। अह पुनर्ब्राह्मणो यत्र तत्र जनैश्चतुष्पथोपनीत इवोपहार कुक्कुरैरिव खाद्यमानो विपत्स्ये। ( तुम ज्जेव एद कलहसगामिणी अणुगच्छन्तो[५] राअहसो विअ सोहसि। अह उण बम्हणो जहिं तहिं जणेहिं चउप्पहोवणीदो विअ उदहारो कुक्कुरेहिं विअ खज्जमाणो विवज्जिस्सम्।

---

१ सुसपण्णा–सुसपुण्णा–विअ. २ पसादेमि उठ्ठेध त्ति. ३ अज्जगेहे. ५ अणु गच्छ०

**चारुदत्त**—एव भवतु। स्वयमेवानुगच्छामि नत्रभवतीम्। तद्राजमार्गविश्वासयोग्या प्रज्वाल्यन्ता प्रदीपिका।

**विदूषक**—वर्धमानक प्रज्वालय प्रदीपिका। (वड्ढमाणअ पज्जालेहि पदीविआओ।)

**चेटी**—(जनान्तिकम्।) अरे तैलेन विना प्रदीपिका प्रज्वाल्यन्ते। (अले तेल्लेण विणा पदीविआओ पज्जालीअन्ति।)

**विदूषक**—(जनान्तिकम्।) आश्चर्यम्। ता खल्वस्माक प्रदीपिका अपमानितनिर्धनकामुका इव गणिका नि स्नेहा इदानी सवृत्ता। (ही। ताओ क्खु अम्हाण पदीविआओ अवमाणिदनिद्धणकामुआ विअ गणिआ णिस्सिणेहाओ दाणि सवुत्ता।

**चारुदत्त**—मैत्रेय भवतु। कृत प्रदीपिकाभि[1]। पश्य।

**उदयति हि शशाङ्क कामिनीगण्डपाण्डु**
**ग्रहगणपरिवारो राजमार्गप्रदीप।**
**तिमिरनिकरमध्ये रश्मयो यस्य गौरा**
**स्रुतजल इव पङ्के क्षीरधारा पतन्ति॥५७॥**

(सानुरागम्[2]।)भवति वसन्तसेने इद भवत्या गृहम्। प्रविशतु भवती।

**वसन्तसेना**—(सानुरागमवलोकयन्ती[3] निष्क्रान्ता।)

**चारुदत्त**—वयस्य गता वसन्तसेना। तदेहि। गृहमेव गच्छाव।

**राजमार्गो हि शून्योऽय रक्षिण सचरन्ति च।**
**वञ्चना परिहर्तव्या बहुदोषा हि शर्वरी॥५८॥**

(परिक्रम्य।) इद च सुवर्णभाण्ड रक्षितव्य त्वया रात्रौ वर्धमानकेनापि दिवा।

**विदूषक**—यथा भवानाज्ञापयति। (जधा भव आणवेदि)

(इति निष्क्रान्तौ)

**इति मृच्छकटिकेऽलकारन्यासो[4] नाम प्रथमोऽङ्क।**

---

शून्य जनसचाररहित। केवल रक्षिण सचरन्ति। तथाऽपि वञ्चना प्रतारणा। वसन्तसेनालकारापहाररूपेति यावत्। हि यत शर्वरी रात्रि बहव दोषा स्तेयादिरूपा यस्या सा तथोक्ता॥५८॥

इति महोपाध्यायश्रीपृथ्वीधरकृतौ मृच्छकटिकविवृतौ
न्यासार्पणो नाम प्रथमोऽङ्क॥

---

१ दीपिकाभि २ उत्थाय सानु० ३ पश्यन्ती ४ मृच्छकटिकायाम्.

CHAR —All right I myself will accompany her ladyship So light ( some ) torches, such as can be relied upon ( to light up ) the king's high road

VID —Vardhamanaka, light (some) torches

THE SERVANT—( *Aside to* Vid ). Here, how are torches to be lighted without oil ?

VID —( *Aside to* Char ) Ah ! Those torches of ours have now become void of *sneha* ( oil ), like courtesans who, slighting penniless lovers, lose their *sneha* ( affection ) for them

CHAR —Maitreya, let it be , there is no need ( now ) of the torches See—

Here indeed, rises the moon, palish-white like the cheek of an amorous lady, having the starry clusters as his retinue, and serving as the lamp on the king's road,—( the moon ) whose white beams fall in the midst of the dense darkness like streams of milk over (dried) mud from which all the water has oozed out (57)

( *With love* ) Lady Vasantasena, here is your house, you may now get in

VAS —( *Looking at him lovingly, exit* )

CHAR —Friend, Vasantasena has gone in Come then, we too shall go home

Deserted is this royal road, and guards are patrolling it We must avoid being duped, for night is full of ( *i e* affords scope for ) many crimes ( 58 )

( *Walking about* ) And this golden casket should be guarded by you at night and by Vardhamanaka by day

VID —As Your Honour commands

( *Exeunt both* )

*End of Act I of the* Mrichchhakatika, *styled* 'The Depositing *of the* Ornament.'



# द्वितीयोऽङ्कः ।

( प्रविश्य । )

**चेटी**--मात्राऽऽर्यासकाश सदेशेन प्रेषिताऽस्मि । तद्यावत्प्रविश्यार्यासकाशं गच्छामि । ( परिक्रम्यावलोक्य च । ) एषाऽऽर्या हृदयेन किमप्यालिखन्ती तिष्ठति । तद्यावदुपसर्पामि । ( अत्ताए अज्जआसआस सदेसेण पेसिदम्हि । ता जाव पविसिअ अज्जआसआस गच्छामि । एसा अज्जआ हिअएण कि पि आलिहन्ती चिठ्ठदि । ता जाव उपसप्पामि । )

( तत प्रविशत्यासनस्था सोत्कण्ठा वसन्तसेना मदनिका च । )

**वसन्तसेना**—चेटि ततस्तत । ( हञ्जे तदो तदो । )

**मदनिका**[1]—आर्ये न किमपि मन्त्रयसे । किं ततस्तत । ( अज्जए ण किं पि मन्तेसि । किं तदो तदो । )

**वसन्तसेना**—किं मया भणितम् । ( किं मए भणिदम् । )

**चेटी**--ततस्तत इति । ( तदो तदो त्ति । )

**वसन्तसेना**--( सभ्रूक्षेपम् । ) आ एवम् । ( आ एव्वम् । )

(उपसृत्य)

**प्रथमा चेटी**--आर्ये माताऽऽदिशति स्नाता भूत्वा देवताना पूजा निर्वर्तयेति (अज्जए अत्ता आदिसदि ण्हादा भविअ देवदाण पूअ णिव्वत्तेहि त्ति । )

**वसन्तसेना**--चेटि विज्ञापय मातरम् । अद्य न स्नास्यामि तद्ब्राह्मण एव पूजा निर्वर्तयत्विति । ( हञ्जे विण्णवेहि अत्तम् । अज्ज ण ण्हाइस्स ता बम्हणो ज्जेव्व पूअ णिव्वत्तेदु त्ति । )

**चेटी**—यदार्याऽऽज्ञापयति (इति निष्क्रान्ता ।) (ज अज्जआ आणवेदि ।)

**मदनिका**--आर्ये स्नेह पृच्छति न पुरोभागिता । तत्किं न्विदम् । (अज्जए सिणेहो पुच्छदि ण पुरोभाइदा । ता किं णेदम् । )

**वसन्तसेना**--मदनिके कीदृशी मा प्रेक्षसे । ( मदणिए केरिसिं म पेक्खसि । )

**मदनिका**--आर्याया शून्यहृदयत्वेन जानामि हृदयगत कमप्यार्याऽऽभिलषतीति । ( अज्जआए सुण्णहिअअत्तणेण जाणामि हिअअगद क पि अज्जआ अहिलसदि त्ति । )

---

[ इत आरभ्य चतुर्थाङ्कसमाप्ति यावत्प्रतिमुखसधि । तल्लक्षण-'फलप्रधानोपायस्य मुखसधिनिवेशिन । लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुख च

---

1 चेटी.

# ACT II

*( Entering )*

A MAID—The mother has sent me with a message to my mistress, so I will just enter and approach her *( Walking about and observing )* Here is seated my lady, brooding over something in her heart Well, then, I will approach her

( *Then enter love-sick* Vasantasena *seated, and also* Madanika ).

VAS —Friend, what next ?

MAD —Lady, you have not spoken about anything How then ( do you ask ) 'what next' ?

VAS —What did I say ?

MAD —You asked, 'what next' ?

VAS.—( *Knitting her eye brows* ) Ah ! Yes !

*( Approaching )*

THE FIRST MAID—Lady, the mother asks that you should take your bath and go through the worship of the deities.

VAS —Friend, tell mother that I am not going to bathe to-day, let therefore the Brahmana himself perform the worship

THE MAID—As your ladyship commands *( Exit )*

MAD —Madam, it is my love that prompts me to inquire, and not the disposition to find faults so tell me, please, what all this means

VAS —Madanika, what do you see me to be like ?

MAD —I can see from your ladyship's absent-mindedness that you have fallen in love with somebody whom you have treasured up in your heart

---

तत् ॥ ' इति । तदत्र मदनिकामैत्रेयाभ्या ज्ञाततया वसन्तसेनामात्रादिभिरज्ञाततया च अनुरागरूपबीजस्य लक्ष्यालक्ष्यतयोद्भेद । ] अत्ताए वसन्तसेनामात्रा । [ अत्ता इति मातु श्वश्वाश्च प्राकृते सज्ञा । ] अज्जआसआस वसन्तसेनासकाशम् । सदेशेन प्रयोजनार्थम् । [ सदेश दत्त्वेत्यर्थ । ] [ हञ्जे इति चेटीसबोधनम् । 'हण्डे हञ्जे हलाऽऽह्वाने नीचा चेटी सखी प्रति ' इत्यमर । 'हञ्जे तदो तदो ' इत्युन्माददशारीत्युपन्यास । अत्र विप्रलम्भशृङ्गाराङ्गभूत प्रलाप उपक्षिप्त । तल्लक्षणम्- 'अलक्ष्यवाक् प्रलाप स्याच्चेतसो भ्रमणाद्भृशम् ' इति ।

**वसन्तसेना**--सुष्ठु त्वया ज्ञातम् । परहृदयग्रहणपण्डिता मदनिका खलु त्वम् । (सुठ्ठु[1] तुए जाणिदम् । परहिअअग्गहणपण्डिआ मदणिआ क्खु तुमम् ।)

**मदनिका**--प्रिय मे प्रियम् । काम खलु नामैष भगवाननुगृहीतो महोत्सवस्तरुणजनस्य । तत्कथयत्वार्या किं राजा राजवल्लभो वा सेव्यते । ( पिअं मे पिअम् । कामो क्खु णाम असो भअव अणुगहिदो[2] महूसवो तरुणजनस्य । ता कधेदु अज्जआ किं राआ राअवल्लहो वा सेवीअदि ।)

**वसन्तसेना**--चेटि रन्तुमिच्छामि न सेवितुम् । ( हञ्जे रमिदुमिच्छामि न-सेविदुम् ।)

**मदनिका**--विद्याविशेषालकृत किं कोऽपि ब्राह्मणयुवा काम्यते । ( विज्जा-विसेसालकिदो किं को वि बम्हणजुआ[3] कामीअदि ।)

**वसन्तसेना**--पूजनीयो मे ब्राह्मणजन । (पूअणीओ[4] मे बह्मणजणो ।)

**मदनिका**--किमनेकनगराभिगमनजनितविभवविस्तारो वाणिजयुवा वा काम्यते । ( किं अणेअणअराहिगमणजणिदविह्ववित्थारो वाणिअजुआ वा कामीअदि ।)

**वसन्तसेना**--हञ्जे उपारूढस्नेहमपि प्रणयिजन परित्यज्य देशान्तरगमनेन वाणिजजनो महद्वियोगज दु खमुत्पादयति । ( हञ्जे उवारूढसिणेह पि पणइजण परिच्चइअ देसन्तरगमणेण वाणिअजणो महन्त विओअज[5] दुक्ख उप्पादेदि ।)

**मदनिका**--आर्ये न राजा न राजवल्लभो न ब्राह्मणो न वाणिजजन । तत्क इदानी स भर्तृदारिकया काम्यते । (अज्जए ण राआ ण राअवल्लहो ण बह्मणो ण वाणिअजणो । ता को दाणिं सो भट्टिदारिआए कामीअदि । )

**वसन्तसेना**--हञ्जे त्व मया सह कामदेवायतनोद्यान गताऽऽसी । (हञ्जे तुम मए सह कामदेवाअदणुज्जाण गदा आसि ।)

**मदनिका**--आर्ये गताऽऽस्मि । (अज्जए गदह्मि ।)

**वसन्तसेना**--तथाऽपि मामुदासीनेव पृच्छसि । (तह वि म उदासीणा विअ पुच्छसि ।)

---

अज्जआ वसन्तसेनैव । [ स्नेह पृच्छति स्नेहात्पृच्छामीत्यर्थ ।] पुरोभाइदा पुरोभागिता दोषदर्शिता । ‘दोषैकदृक्पुरोभागी’ इत्यमर । दोषशून्यत्वेनेति भाव । [ भगवान् काम खलु य एव विकारयति इत्यर्थ । यद्वा भगवान् काम एवाद्यानुग्रहीत इति वाक्यम् ।] ‘भअवदा’ इत्यपि पाठ. । भगवता हरेण । स्वीकृतोऽनुगृहीतो वा । ण सेविदुम् । कामोपभोगरसिकाऽस्मि न द्रव्यार्थिनीत्यर्थ । पूजनीयाश्च ये भवन्ति तेषा विलासवैमुख्य सदेति भाव । उवारूढसिणेह विवृद्धस्नेहम् । भट्टिदारिआए ईश्वरसुतया । [ उदासीना मध्यस्था वृत्तान्तमजानतीत्यर्थ । शरणागता गृह प्रविष्टा ।] सुहिदा सुखयुक्ता । अभ्युपपन्ना स्वीकृता । सुगृहीतनामधेयो दातृत्वेन ।

---

१ सुठ्ठु क्खु २ अणवगहीदो. ३ बह्मणो ४ हञ्जे पूअ० ५ विओदद्दुक्ख

VAS —Rightly have you guessed! You are indeed Madanika, clever in fathoming the hearts of others!

MAD —Well, I am glad, I am glad indeed! Herein you are indeed obliging the mighty Cupid, who is (i. e occasions) a glorious festive joy to all young persons So your ladyship will please tell whether he is a king, or a king's favourite, who is (thus desired) to be served!

VAS —Girl, I want to *enjoy*, not to *serve*

MAD —Do you love some Brahmana youth, distinguished for his deep erudition?

VAS —I have a veneration for all Brahmanas.

MAD —Do you then love some young merchant, who has amassed a great fortune by visiting many cities?

VAS —Friend, a merchant causes great pain of separation, by going to other countries, leaving behind his beloved person even though her love for him be very deep

MAD —Madam, he is not a king, nor a king's favourite, nor a Brahmana, nor a merchant Who may he be then, that my mistress desires?

VAS —Girl, you visited with me the garden of Cupid's shrine?

MAD —I did, Madam

VAS —And still you ask me (about it), as if you are a stranger (in the matter)?

---

दरिद्रपुरुषदत्तमना अवचनीया भवति अर्थानभिलाषित्वात् । [ अवचनीयाऽर्थानभिलाषेण गुणमात्रानुरागेण च वागगोचरमाहात्म्यानुशालिनीत्यर्थ –इति लल्लादीक्षिता. ।] अतिस्वश्चारुदत्तो ब्राह्मण अनध्यापकत्वेन विलासी । अन्यश्च श्रोत्रिय तर्कतन्त्रप्रवीण पूजनीय न काम्यो विलासवैमुख्यादित्याशय । महुअरीओ इति । मधु कुर्वन्ति सेवन्ते । मत्ता इत्यर्थ । [ मधु कुर्वन्त्येव केवल न स्वय सेवन्ते । तथा गणिका धनार्थमेव केवल स्वदेह परोपकरणीकृत्य अलब्धरतयो वृथाजन्मभाजो भवन्तीत्यर्थ । सहसा विस्रम्भोत्पादनात्प्रागभिसार्यमाण प्रत्युपकारे दुर्बलतया अक्षमतया पुनरात्मान न दर्शयिष्यति एव दुर्लभदर्शन स्यादिति सहसा न गम्यते ।] भट्टेति, द्यूतकरस्य सबोधनम् । दशसुवर्णक्वने लुद्धु रुद्ध । दश सुवर्णा लभ्या यस्य पार्श्वे स द्यूतकर प्रपलायित । अतो गृहाण धारय । 'लब्ध' इति पाठे दशसुवर्णाना द्यूतकरो लब्ध प्रपलायित इत्यर्थ । [ 'नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि च' इत्युक्ते अत्र सवाहकस्य तिरस्करिणीमाक्षिप्य प्रवेश सूचनाभावात् ।] सभ्यानुद्दिश्य ब्रूते । हीमाणहे इति विस्मये । कष्ट एष द्यूतकरभाव । नवबन्धनेत्यादि । चित्रजाति । गद्दहीए गर्धभीनामधेय्या । हा कष्टम् । ताडितोऽस्मि । गद्दहीति वराटिका-

**मदनिका**—ज्ञातम् । किं स एव येनार्या शरणागताऽभ्युपपन्ना । (जाणिदम् । कि[1] सो ज्जेव्व जेण अज्जआ सरणाअदा अब्भुववण्णा । )

**वसन्तसेना**—किंनामधेय खलु स । ( किणामहेओ क्खु सो ।)

**मदनिका**—स खलु श्रेष्ठिचत्वरे प्रतिवसति । ( सो क्खु सेट्ठिचत्तरे पडिवसदि ।)

**वसन्तसेना**—अयि नामास्य पृष्टासि । (अइ णाम से[2] पुच्छिदासि ।)

**मदनिका**—स खल्वार्ये सुगृहीतनामधेय आर्यचारुदत्तो नाम । (सो क्खु अज्जए सुगहिदणामहेओ अज्जचारुदत्तो णाम ।)

**वसन्तसेना**—(सहर्षम् ।) साधु मदनिके साधु । सुष्ठु त्वया ज्ञातम् । (साहु मदणिए साहु । सुट्ठु तुए जाणिदम् ।)

**मदनिका**—(स्वगतम् ।) एवं तावत् । (प्रकाशम् ।) आर्ये दरिद्र खलु स श्रूयते । (एव्व दाव । अज्जए दलिद्दो क्खु सो सुणीअदि ।)

**वसन्तसेना**—अत एव काम्यते । दरिद्रपुरुषसङ्क्रान्तमना खलु गणिका लोकेऽवचनीया भवति । (अदो ज्जेव्व कामीअदि । दलिद्दपुरिससकन्तमणा क्खु गणिआ लोए अवअणीआ भोदि ।)

**मदनिका**—आर्ये किं हीनकुसुम सहकारपादप मधुकर्य पुन सेवन्ते । (अज्जए किं हीणकुसुम सहआरपादव महुअरीओ उण सेवन्ति ।)

**वसन्तसेना**—अत एव ता मधुकर्य उच्यन्ते । (अदो ज्जेव्व ताओ महुअरीओ वुच्चन्ति ।)

**मदनिका**—आर्ये यदि स मनीषितस्तात्कमर्थमिदानी सहसा नाभिसार्यते । (अज्जए जइ सो मणीसिदो ता कीस दाणिं सहसा ण अहिसारीअदि ।)

**वसन्तसेना**—चेटि सहसाऽभिसार्यमाण प्रत्युपकारदुर्बलतया मा तावज्जनो दुर्लभदर्शन पुनर्भविष्यति । (हञ्जे सहसा अहिसारिअन्तो पच्चुअआरदुब्बलदाए मा दाव जणो दुल्लहदसणो पुणो भविस्सदि ।)

**मदनिका**—किमत एव सोऽलकारस्तस्य हस्ते निक्षिप्त । (किं अदो ज्जेव्व सो अलकारओ तस्य हत्थे णिक्खित्तो ।)

**वसन्तसेना**—हञ्जे सुष्ठु त्वया ज्ञातम् । (हञ्जे सुठ्ठु दे जाणिदम् ।)

---

नाम । गर्दभीशक्तिकै आर्थी इति प्रसिद्धद्यूतके कपर्दकनामधेये । नवबन्धनान्मुक्तयेव गर्दभ्या पशुविशेषेण ताडितोऽस्मि गर्दभ्या [वराटिकया] । ताडनस्वभावा मा यत । अङ्गराजेन कर्णेन मुक्तयेव शक्त्या अस्त्रविशेषेण घटोत्कचो भीमसेनसुत इव ताडितोऽस्मि शक्त्या ॥१॥ लेखकेत्यादि । गाथा । [लेख एव लेखक । स्वार्थे कन् । यद्वा लिखतीति लेखक । तत्र व्यापृतहृदयमासक्तचित्त] लेखकव्यापृतहृदय सभिक दृष्ट्वा

---

१ अज्जुए किं. २ सपुच्छि.

MAD —I have it ! Is he that same gentleman who favourably received my mistress when she sought his help ?

VAS —Well, what is his name ?

MAD —Why, he resides in the merchants' quarter

VAS —Girl, I asked you his *name* !

MAD —My lady, he, of auspicious name, is called the noble Charudatta

VAS —( *Joyfully* ) Excellent, Madanika, excellent ! You know it rightly

MAD —( *To herself* ). I will thus ( speak to her ) now ( *Aloud*) My lady, it is heard that he is a poor man.

VAS —Hence it is that I love him For a courtesan who fixes her affections on a poor lover would not incur censure from the world

MAD —But, madam, do the female honey-bees frequent a mango tree which has lost its blossoms ?

VAS —[ No, they do not , ] and hence they are known as 'honey-makers'

MAD —Lady, if you desire him, then why is it that you do not now approach him of your own accord, at once ?

VAS —Girl, if I were to go to him myself at once, then, being unable to make an adequate return ( for my self offer ), he may probably make it impossible for me to visit him again, and I wish to prevent that

MAD —Is it for this very reason that you deposited that ornament in his hands ?

VAS —Girl, you have guessed it correctly !

---

[तस्य दर्शनपथ विहायेत्यर्थं ।] झटिति प्रभ्रष्ट । मार्गनिपतित तन्मार्गगत ] । क नु खल्विति विमर्शे ॥ २ ॥ विप्रतीपाभ्या विपरीताभ्याम् । देवीभविष्यामि । [देवतावत्प्रतिमास्थाने स्थास्यामि ।] देवीति च्व्यन्तम् । यदि व्रजसीत्यादि । आर्या । [ तरति समर्थो भवेदित्यर्थ ] ॥३॥ कुत्र कुत्रेत्यादि । रुचिरा वृत्तम् । [ विप्रलम्भक प्रतारक । ] रे भयपरिवेपमानाङ्गक । पदे पदे समविषम यथा स्यादेवं स्खलन्कुल यशश्चातिकृष्ण कुर्वन् ॥ ४ ॥ [पद सवाहकचरणचिह्नम् । विप्रतीपेति । ढक्कभाषायामस्यामुकारान्तानि प्रथमान्तादीनीत्यवधेयम्—इति ल दी ] । अरे विप्रतीपगानशून्य देवकुलम् । प्रयोजनाभावेन नात्र मानुष इति भाव । 'धूर्तो द्यूतकरो विप्रतीपाभ्या पादाभ्या देवकुल प्रविष्ट ' इत्येके । [ [illegible]ाप्येति–अय सवाहक एव

(नेपथ्ये ।)

अरे भट्टारक दशसुवर्णस्य रुद्धो द्यूतकर प्रपलायित प्रपलायित । तद्गृहाण गृहाण । तिष्ठ तिष्ठ । दूरात्प्रदृष्टोऽसि । (अले भट्टा दशसुवण्णाह् लुद्धु जूदकरु पपलीणु पपलीणु । ता गेण्ह[1] गेण्ह । चिट्ठ चिठ्ठ । दूलात्पदिट्टो सि ।)

(प्रविश्यापटीक्षेपेण सम्भ्रान्त ।)

**सवाहक**—आश्चर्यम् । कष्ट एष द्यूतकरभाव । (हीमाणहे । कट्ठे एशे जूदिअलभावे ।)

**नवबन्धनमुक्तयेव गर्दभ्या हा ताडितोऽस्मि गर्दभ्या ।**
**अङ्गराजमुक्तयेव शक्त्या घटोत्कच इव घातितोऽस्मि शक्त्या ॥१॥**
**लेखकव्यापृतहृदय सभिक दृष्ट्वा झटिति प्रभ्रष्ट. ।**
**इदानीं मार्गनिपतित क नु खलु शरण प्रपद्ये ॥ २ ॥**

(णवबन्धणमुक्काए[2] विअ गद्दहीए हा ताडिदो म्हि गद्दहीए ।
अङ्गलाअमुक्काए विअ शत्तीए घडुक्को विअ घादिदो म्हि शत्तीए ॥
लेखअवावडहिअअ शहिअ दट्ठूण[3] झत्ति पब्भट्टे ।
एण्हि मग्गणिवडिदे क णु क्खु शलण पपज्जे ॥)

तद्यावदेतौ सभिकद्यूतकरावन्यतो मामन्विष्यत तावदह विपरीताभ्या पादाभ्यामेतच्छून्यदेवकुल प्रविश्य देवीभविष्यामि । (बहुविध नाट्य कृत्वा तथा स्थित ।) (ता जाव एदे शहिअजूदिअला अण्णदो म अण्णेशन्ति ताव हक्के[4] विप्पडीवेहिं पादेहिं एद शुण्णदेउल पविशिअ देवीभविश्शम् ।)

(तत प्रविशति माथुरो द्यूतकरश्च)

**माथुर.**—अरे भट्टारक दशसुवर्णस्य रुद्धो द्यूतकर प्रपलायित प्रपलायित । तद्गृहाण गृहाण । तिष्ठ तिष्ठ । दूरात्प्रदृष्टोऽसि । (अले भट्टा दशसुअण्णाह् लुद्धु जूदकरु पपलीणु पपलीणु । ता गेण्ह गेण्ह । चिट्ठ चिट्ठ । दूलात्पदिट्टो सि ।)

**द्यूतकर**—

**यदि व्रजसि पातालमिन्द्र शरण च साप्रत यासि ।**
**सभिक वर्जयित्वैक रुद्रोऽपि न रक्षितु तरति ॥ ३ ॥**

(जइ वज्जसि पाआल इन्द शलण च सपद जासि ।
सहिअ वज्जिअ एक रुद्दो वि ण रक्खिदु तरइ ॥)

---

प्रतिमारूपेणात्मान निह्नुवान इह तिष्ठतीति सज्ञापन कृत्वेत्यर्थ ।] सज्ञापन प्रतिमायाम् । [शिलाया इय शैली सा चासौ प्रतिमा च शैलप्रतिमा । सवरण गोपन स्वस्य प्रतिमारूपेण स्थितत्वात्–इति ल. दी.] । कत्तेति । द्यूतकरण यया सा कत्ता । काड

---

१ गेण्णध गेण्हध. २ मुक्कापुए ३ दश्टूण पब्भष्टे ४ इदो

*( Behind the Scenes )*

O Gamester! This gambler, bound ( to us ) for ten gold-pieces, is making off—making off! Catch him! Oh! Catch him! Stop, stop! I see you from a distance!

*( Entering wish a toss of the curtain, and in a flurry )*

SAMVAHAKA.—Oh! Painful is this state of a gambler!

Oh! I am kicked ( i e defeated ) by the *gardabhi* die, as if by a *gardabhi* ( she ass ) just let loose from her first halter Ah! I am struck ( i e, defeated ) by the *Sakti* die, like Ghatotkacha struck by the *Sakti* ( weapon ) discharged by Karna, the king of the Angas! (1)

Seeing the keeper mentally occupied with the score, I suddenly escaped, and have now reached the public road, whom shall I now approach for refuge? (2)

Well, then while these two, the master and the gamester, are looking for me elsewhere, I shall enter this deserted temple walking backwards ( *lit* with feet turned in the opposite direction ) and take my stand there as the goddess ( idol ) ( *He makes numerous gestures and then remains in that posture* )

( *Then enter* Mathura, *and the* Gamester )

MATHURA—O Bhattaraka! This gambler here, bound to us for ten gold-pieces, is making off—making off! Catch him! Oh! Catch him! (O you) Stop, stop! I see you from a distance!

GAMESTER—

Even if you now go to the nether regions, or seek the protection of Indra himself, nobody, not even Siva, would be able to save you, excepting the keeper alone (3)

---

(उ) इति प्रसिद्ध । नान्दीपूरा इति प्रसिद्धे द्यूत इत्यन्ये । [ नान्दी नक्की इति भाषायाम् । पूर्वं पूरा इति भाषया प्रसिद्ध । निर्गत नाणकमपि यस्य यस्माद्वा स तथा तस्य निर्नाणकस्य । इति ल दी. ] । कत्ताशब्दो निर्नाणकस्य निर्धनस्य ।।५।। जानामीति । सुमेरुशिखरपतनसन्निभ द्यूतम् । [ सुमेरो शृङ्गात्पतनवत् ] सुखविनाशकमित्यर्थं । कोकिलमधुर [ कोकिलशब्दवन्मधुर ] ।। ६ ।। मम पाठ इत्यार्थी द्यूतकरोक्तिविशेष । गोहे पुरुष मनुष्य । पेदण्डा लुप्तदण्डक । उभे अपि वेशी । शिर पतति । भ्रमतीत्यर्थं । इति भूमौ निपत्य स्थित । ही कष्टम् । अस्माभि सर्वं समय उल्लङ्घ्यते । एषोऽस्माक द्यूतकराणामलङ्घ्य समय. ।

**माथुर** --

**कुत्र कुत्र सुसभिकविप्रलम्भक पलायसे रे भयपरिवेपिताङ्गक।**
**पदे पदे समविषम स्खलन्कुल यशोऽतिकृष्ण कुर्वन् ॥ ४ ॥**
(कहिं कहिं सुसहिअविप्पलम्बआ पलासि ले भअपलिवेविदङ्गआ ।
पदे पदे समविसम[1] खलन्तआ कुल जस अदिकसण कलेन्तआ ॥)

**द्यूतकर** --(पद वीक्ष्य ।) एष व्रजति । इय प्रनष्टा पदवी । (एसो वज्जदि । इअ पणटठा पदवी ।)

**माथुर** --( आलोक्य सवितर्कम् । ) अरे विप्रतीपौ पादौ । प्रतिमाशून्य देवकुलम् । (विचिन्त्य ।) धूर्तो द्यूतकरो विप्रतीपाभ्या पादाभ्या देवकुल प्रविष्ट । (अले विप्पदीवु पादू । पाडिमाशुण्णु देउलु । घुत्तु जूदकरु विप्पदीवेहिं पादेहिं देउल पविट्ठो ।)

**द्यूतकर** --ततोऽनुसराव । (ता अणुसरेह्म ।)

**माथुर** --एव भवतु । (एव्व भोदु ।)

( उभौ देवकुलप्रवेश निरूपयत[2] । दृष्ट्वान्योऽन्य संज्ञाप्य । )

**द्यूतकर** --कथ काष्ठमयी प्रतिमा । (कध कट्ठमयी पडिमा ।)

**माथुर** --अरे न खलु न खलु । शैलप्रतिमा । ( इति बहुविध चालयति[3] । सज्ञाप्य च ।) एव भवतु । एहि। द्यूतेन क्रीडाव । (इति बहुविध द्यून क्रीडत[4] ।) (अले ण हु ण हु । शैलपडिमा । एव्व भोदु । एहि । जूद किलेह्म । )

**सवाहक** --(द्यूतेच्छाविकारसवरण बहुविध कृत्वा । स्वगतम् ।) अरे ।

**कत्ताशब्दो निर्नाणकस्य हरति हृदय मनुष्यस्य ।**
**ढक्काशब्द इव नराधिपस्य प्रभ्रष्टराज्यस्य ॥ ५ ॥**
**जानामि न क्रीडिष्यामि सुमेरुशिखरपतनसनिभ द्यूतम् ।**
**तथाऽपि खलु कोकिलमधुर कत्ताशब्दो मनो हरति ॥ ६ ॥**

(अले ।

कत्ताशद्दे णिण्णाणअश्श हलइ हडक मनुश्शश्श ।
ढक्काशद्दे व्व णडाधिवश्श पब्भट्टलज्जश्श ॥
जाणामि ण कीलिश्श शुमेलुशिहलपडणशण्णिह जूअम् ।
तह वि हु कोइलमहुले कत्ताशद्दे मण हलदि ॥

**द्यूतकर** --मम पाठे मम पाठे । (मम पाठे मम पाठे ।)

**माथुर** --न खलु । मम पाठे मम पाठे । (ण हु । मम पाठे मम पाठे ।

---

१ शमविशमम्. २ नाटयत.. ३ चालयत . ४ क्रीडति.

# ACT III

*( Then enter Cheta )*

CHETA--

A master who is kind and compassionate to his servants, is pleasing ( *lit* shines ) even though he may be poor But again, one who is mean and purse proud is forsooth difficult to serve, and proves formidable in the end * (1)

Moreover--

It is not possible to turn away a bull who is greedy of corn, nor a man who is deeply attached to another's wife, nor one who is addicted to gambling, nor is it possible to cure what is one's natural defect (2)

---

[ चेटोऽय वर्धमानकनामा चारुदत्तस्येति बोध्यम् । ] सुजन इति । वैतालीयम् । 'सुअणे' इत्येकारो लघु छन्दोनुरोधात् । [ स्वामी सुजन तथा भृत्येषु दयावान् निधनकोऽपि शोभते खलु । स पिशुन दुर्जन चेत् दुष्कर दुसेव्य इत्यर्थ । परिणामे सुसेवितोऽपि अवसाने फलदानसमये दारुण च । अनेन शकार कटाक्षित । अत्र पूर्वार्धेन चारुदत्तस्योत्तरार्धेन च शकारस्य तादृशप्रस्तुतस्य वर्णने-नात्रगमादप्रस्तुतप्रशसालकार । ] खलु यस्मादर्थे । दुष्करो यत अत परिणामदारुण. ॥ १ ॥ सस्येत्यादि । शक्वरी जाति । पल्लको लम्पट । 'पडकल्ला' इति महाराष्ट्र-भाषायाम् । योऽपि स्वाभाविको दोष सोऽपीत्यर्थ न शक्यो वारयितुम् । अतिरिक्तदातृत्व दोष एवेति । त च मम स्वामी न त्यजतीति भाव ॥ २ ॥ गन्धव्व गन्धर्वम । गीतमित्यर्थ । उत्कण्ठितस्येति । [ 'सर्वेन्द्रियसुखास्वादो यत्रास्तीत्य भिमन्यते । तत्प्राप्तीच्छा ससकल्पामुत्कण्ठा कवयो विदु ॥ ' इत्युक्तलक्षणा उत्कण्ठा

---

* Instead of this some MSS read—"A good man ( master ) who keeps in his service servants even though they be worthless, and who is himself poor and without power, is pleasing ( *lit* shines ), but not so a purse-proud, mean master, laden though he may be with immense wealth "

After this some MSS also read the following two verses —"The stalk of a cucumber is bitter ( in taste ), an illiterate Brahmana is bitter ( *i e* unwelcome ), so, too, is a lazy wife, and a man who is poor from his very birth "

"First an unchaste woman does not like to behave virtuously, which to her is unpleasant acting, but she feels proud when she behaves like a chaste woman, and in the beginning she covers her ( upper ) body with a long hem ( as becomes a chaste lady ) "

काऽपि वेलाऽऽर्यचारुदत्तस्य गान्धर्वं श्रोतु गतस्य । अतिक्रामत्यर्धरजनी । अद्यापि नागच्छति । तद्यावद्बहिर्द्वारशालाया गत्वा स्वप्स्यामि । ( इति तथा करोति ।)
(का वि वेला अज्जचारुदत्तश्श गन्धव्व शुणिदु गदश्श । अदिक्कमदि अद्धलअणी । अज्ज वि ण आअच्छदि । ता जाव बाहिलदुआलशालाए गदुअ शुविश्शम् ।)

(तत प्रविशति चारुदत्तो विदूषकश्च ।)

चारुदत्त —अहो[१] साधु साधु रेभिलेन[२] गीतम् । वीणा हि नामासमुद्रोत्थित रत्नम् । कुत[३] ।

उत्कण्ठितस्य हृदयानुगुणा वयस्या
सकेतके चिरयति प्रवरो विनोद ।
सस्थापना प्रियतमा विरहातुराणां
रक्तस्य रागपरिवृद्धिकर[४] प्रमोद ॥ ३ ॥

विदूषक —भो एहि । गृह गच्छाव । (भो एहि । गेह गच्छेम्ह ।)

चारुदत्त —अहो सुष्ठु भावरेभिलेन गीतम् ।

विदूषक —मम तावद्द्वाभ्यामेव हास्य जायते । स्त्रिया सस्कृत पठन्त्या मनुष्येण च काकली गायता । स्त्री तावत्सम्कृत पठन्ती दत्तनवनस्येव गृष्टिरधिक सूसूशब्द क रोति । मनुष्योऽपि काकली गायञ्शुष्कसुमनोदामवेष्टितो वृद्धपुरोहित इव मन्त्र जपन्दृढ मे न रोचते । (मम दाव दुवेहिं ज्जेव्व हस्स जाअदि । इत्थिआए सक्कअं पठन्तीए मणुस्सेण अ काअली गाअन्तेण । इत्थिआ दाव सक्कअ पठन्ती दिण्णणवणस्सा विअ गिट्ठी अहिअ सुसुआअदि । मणुस्सो वि काअलीं गाअन्तो सुक्खसुमणोदामवेट्ठिदो बुड्ढपुरोहिदो विअ मन्त जवन्तो दिढ मे ण रोअदि ।)

चारुदत्त — वयस्य सुष्ठु खल्वद्य गीत भावरेभिलेन । न च भवान्परितुष्ट ।

रक्त च नाम मधुर च सम[५] स्फुट च
भावान्वित च ललित च मनोहर च ।
कि वा प्रशस्तवचनैर्बहुभिर्मदुक्तै-
रन्तर्हिता[६] यदि भवेद्वनितेति मन्ये ॥ ४ ॥

---

सजाता अस्य असौ उत्कण्ठित । विरहोत्सुको वा हृदयानुगुणा मनोनुरूपा वयस्या सखी । सकेतके कृतसकेते जने चिरयति विलम्ब कुर्वति । प्रवर उत्कृष्ट विनोद । विरहातुराणा प्रियतमा अत्यन्तेष्टा सस्थापना शरीरस्वास्थ्यकरण मनस आश्वासो वा । रक्तस्यानुरक्तस्य रागपरिवृद्धिकर प्रमोद । वीणावादनमिति शेष । प्रथमचरणे रूपकालकार । इतरत्र कारणे कार्योपचारादतिशयोक्ति । वसन्ततिलका वृत्तम् ] ॥ ३ ॥ [ काकली सूक्ष्ममधुरध्वनियक्तां गीतिम् । दत्ता नस्या नासारज्जुर्यस्या.

---

१ अहो अहो. २ रेभिलकेन ३ यत . ४ करप्रमोद ५ समस्फुट. ६ अन्तर्हित .

A long time has passed since the noble Charudatta went to attend the musical concert It is past midnight, and still he hasn't come. So then I'll go to the room near the outer entrance, and go to sleep (there) (*He does accordingly*)

(*Then enter* Charudatta *and* Vidushaka)

CHAR.—Oh! Splendid! Rebhila sang just beautifully! The lute is indeed a jewel, (only that it was) not produced from the ocean For—

To a love-sick person, it is a companion agreeable to (the state of) his heart, if the lover who has made an appointment is long in coming, it serves as an excellent means to pass time, to those suffering from (the pangs of) separation, it is the most welcome means of consolation, and to a person actually in love, it yields delight that intensifies his passion (3)

VIDUSHAKA—Sir, come along, let us go home

CHAR —Master Rebhila did, indeed, sing charmingly!

Vid —As for me, a smile is produced in me by two things by a woman reading Sanskrit, and by a man singing in a low, sweet tone For when a woman reads Sanskrit, she noisily snuffles (*lit* makes a 'Soo, Soo' sound), like a young cow that has had a new rope put through the septum of her nose A man, too, when he is singing in a low, sweet tone, is emphatically not to my liking, like an old priest repeating *Mantras* and having a garland of dried-up flowers (round his neck)

CHAR —Friend, Master Rebhila did indeed, sing wonderfully to day! And (how is it that) you were not pleased?

Really his song was impassioned, sweet, smooth, clear, and full of emotion, and graceful, and charming Or where is the use of many words of praise uttered by me?—Methinks it was as if some woman concealed who sang (and not he) (4)

---

सा । नासायै हिता नस्या । गृष्टि सकृत्प्रसूता गौ ।] णस्मा नासिकाविवररज्जु । सुसुआअदीत्यव्यक्तशब्दानुकरणम् । शुष्कसुमनोदामवष्टितत्वेन चिरकालजपप्रवणत्व-मुक्तम् । रक्तमिति । [रक्त रागयुक्तम् । मधुर कर्णस्वादु । सम रागोत्थापकस्वराणा वैपरीत्यरहितम् ।] भावान्वित रत्यास्पदम् । ललित लालित्याख्यधर्मविशेषशालि । [किं वा बहुभि मदुक्तै प्रशस्त प्रशस्ति तस्य वचनै किम् । अन्तर्हिता पुरुषरूपच्छन्ना वनिता यदि भवेदपि नाम स्यादिति मन्ये ।] पिहिता योषिदेव गायति न पुरुष इति

अपि च ।

तं तस्य स्वरसंक्रमं मृदुगिरः[1] श्लिष्टं च तन्त्रीस्वनं[2]
वर्णानामपि मूर्छनान्तरगतं तारं विरामे मृदुम् ।
हेलासंयमितं पुनश्च ललितं रागद्विरुच्चारितं[3]
यत्सत्यं विरतेऽपि गीतसमये गच्छामि शृण्वन्निव ॥ ५ ॥

**विदूषकः**—भो वयस्य आपणान्तररथ्याविभागेषु सुखं कुक्कुरा अपि सुप्ताः । तद्गृहं गच्छावः । (अग्रतोऽवलोक्य ।) वयस्य पश्य पश्य । एषोऽप्यन्धकारस्येवावकाशं ददवन्तरिक्षप्रासादादवतरति भगवांश्चन्द्रः । (भो वअस्स आवणन्तररच्छाविहाएसु सुहं कुक्कुरा वि सुत्ता[4] । ता गेहं गच्छेम्ह । वअस्स पेक्ख पेक्ख । एसो वि अन्धआरस्स विअ अवआसं देन्तो अन्तरिक्खपासादादो ओदरदि भअवं चन्दो ।)

**चारुदत्तः**—सम्यगाह भवान् ।

असौ हि दत्त्वा तिमिरावकाशमस्तं व्रजत्युन्नतकोटिरिन्दुः ।
जलावगाढस्य वनद्विपस्य तीक्ष्णं विषाणाग्रमिवावशिष्टम् ॥ ६ ॥

**विदूषकः**—भो इदमस्माकं गेहम् । वर्धमानक वर्धमानक उद्घाटय द्वारम् । ( भो एदं अम्हाणं गहं । वड्ढमाणअ वड्ढमाणअ उग्घाटेहि दुआरअं । )

**चेटः**—आर्यमैत्रेयस्य स्वरसंयोगः श्रूयते । आगत आर्यचारुदत्तः । तद्यावद् द्वारमस्योद्घाटयामि । ( तथा कृत्वा । ) आर्य वन्दे । मैत्रेय त्वामपि वन्दे । अत्र विस्तीर्णे आसने निषीदतमार्यौ । ( अज्जमित्तेआह शलशंजोए शुणीअदि । आगदे अज्जचालुदत्ते । ता जाव दुआलअं शे उग्घाटेमि[5] । अज्ज वन्दामि । मित्तेअ तुमं पि वन्दामि । एत्थ वित्थण्णे आशणे णिशीदन्तु अज्जा । )

( उभौ नाट्येन प्रविश्योपविशतः । )

**विदूषकः**—वर्धमानक रदनिकामाकारय पादौ धावितुम् । ( वड्ढमाणअ रअणिअं सद्दावेहि पादाइं धाइदुम् । )

**चारुदत्तः**—( सानुकम्पम् । ) अलं सुप्तजनं प्रबोधयितुम् ।

**चेटः**—आर्य मैत्रेय अहं पानीयं गृह्णामि । त्वं पादौ धाव । ( अज्ज मित्तेअ अहं पाणिअं गेण्हे । तुमं पादाइं धोवेहि । )

**विदूषकः**—( सक्रोधम् । ) भो वयस्य एष इदानीं दास्याः पुत्रो भूत्वा पानीयं गृह्णाति । मां पुनर्ब्राह्मणं पादौ धावयति । ( भो वअस्स एसो दाणिं दासीएपुत्तो भविअ पाणिअं गेण्हेदि । मं उण बम्हणं पादाइं धोवावेदि । )

**चारुदत्तः**—वयस्य मैत्रेय त्वमुदकं गृहाण । वर्धमानकः पादौ प्रक्षालयतु ।

---

१ मृदुगिरा श्लिष्टं २ स्वरं ३ रागाद्द्वि० ४ पसुत्ता ५ देमि ( ददामि )

Moreover—

To tell the truth, I feel that, although the time of the musical concert is over, I am as it were still listening, as I walk, to the cadence of the notes of his sweet voice, and to those well-blended notes of the lute, high-pitched when following up with the harmonious swell and fall of the sounds of the syllables ( of the song ), but low towards the close,—and to the song, sung with due regard to the pitch of sounds, graceful and repeated twice where the *raga* ( passion ) required it (5)

VID.—Friend, even the dogs are fast asleep in the various lanes that stretch across the market place So let us go home ( *Looking before him* ) Friend, see, see ! Here is the divine Moon descending from his skyey mansion, as though to make room for darkness !

CHAR.—Your remark is quite proper

There sets the moon, giving room to darkness, and with one end raised upwards, looking as if it were the sharp tip remaining ( visible ) outside, of the tusk of a wild elephant submerged in water (6)

VID —Well, here's our house Vardhamanaka, Vardhamanaka ! Open the door !

CHETA—I hear the revered Maitreya's voice, the noble Charudatta has arrived Well, then, let me open the door for him ( *He does so* ) Sir, my bow to you ! Maitreya, to you too ! May you both sit on this commodious seat !

( *Both show that they enter and sit down* ).

VID —Vardhamanaka, call Radanika to wash our feet

CHAR —( *With compassion* ). You need not awaken a person who is asleeping

CHETA—Sir Maitreya I'll hold the water, and you may wash (Charudatta's) feet

VID —( *Angrily* ) Frind, here is this fellow, the son-of-a-slave, going to hold the water, while he wants to make *me*, who am a Brahmana, wash your feet !

CHAR —Friend Mitreya, you may hold the water and, Vardhamanaka will wash my feet

चेट —आर्य मैत्रेय देह्युदकम्। (अज्ज मित्तेअ देहि उदअम्। )

(विदूषकस्तथा करोति। चेटश्चारुदत्तस्य पादौ प्रक्षाल्यापसरति। )

चारुदत्त —दीयतां ब्राह्मणस्य पादोदकम्।

विदूषक —किं मम पादोदकैः। भूम्यामेव मया ताडितगर्दभेनेव पुनरपि लोठितव्यम्। ( किं मम पादोदएहिं। भूमीए ज्जेव मए ताडिदगद्दहेण विअ पुणो वि लोट्टिदव्वम्।)

चेट —आर्य मैत्रेय ब्राह्मण खलु त्वम्। ( अज्ज मित्तेअ बम्हणे क्खु तुमम्।)

विदूषक —यथा सर्वनागानां मध्ये डुण्डुभस्तथा सर्वब्राह्मणाना मध्येऽहं ब्राह्मण । ( जधा सव्वणागाण मज्झे डुण्डुहो तधा सव्वबम्हणाणं मज्झे अहं बम्हणो। )

चेट —आर्य मैत्रेय तथाऽपि धाविष्यामि। (तथा कृत्वा।) आर्य मैत्रेय एतत्तत्सुवर्णभाण्डं मम दिवा तव रात्रौ च। तद्गृहाण। ( इति दत्त्वा निष्क्रान्त । ( अज्ज मित्तेअ तधा वि धोइस्सम। अज्ज मित्तेअ एदं तं शुवण्णभण्डअं मम दिवा तुह लत्तिं च। ता गेण्ह।)

विदूषक —( गृहीत्वा। ) अद्याप्येतत्तिष्ठति। किमत्रोज्जयिन्यां चौरोऽपि नास्ति य एतं दास्या पुत्र निद्राचौरं नापहरति। भो वयस्य अभ्यन्तरचतुःशालकं प्रवेशयाम्येनम्। (अज्ज वि एदं चिठ्ठदि। किं एत्थ उज्जइणीए चोरो वि णत्थि जो एदं दासीएपुत्त णिद्दाचोरं ण अवहरदि। भो वअस्स अब्भन्तरचतुस्सालअं पवेसआमि णम्।)

चारुदत्त —

अलं चतुःशालमिमं प्रवेश्य प्रकाशनारीधृत एष यस्मात्।
तस्मात्स्वयं धारय विप्र तावद्यावन्न तस्याः खलु भो समर्प्यते ॥ ७ ॥

( निद्रां नाटयन्[1] 'तं तस्य स्वरसक्रम–' (३।५) इत्यादि पुन पठति ।)

विदूषक —अपि निद्राति भवान्। ( अवि णिद्दाअदि भवम्।)

चारुदत्त —अथ किम्।

इयं हि निद्रा नयनावलम्बिनी ललाटदेशादुपसर्पतीव माम्।
अदृश्यरूपा चपला जरेव या मनुष्यसत्त्वं परिभूय वर्धते ॥ ८ ॥

---

भासते। [ वसन्ततिलका वृत्तम् ]॥४॥ तमिति। [ यद्गीतसमये विरतेऽपि गतेऽपि सर्वमिदं शृण्वन्निवाहं गच्छामि तत्सत्यमित्यन्वय । इदं किम्। मृदुगिर कोमलकण्ठस्वरस्य तस्य रेभिलस्य तमिदानीं श्रुतं स्वरसक्रमं स्वराणां निषादर्षभगान्धारषड्जमध्यमधैवतपञ्चमानां सप्तानां प्रसिद्धानां समीचीनं क्रममारोहावरोहरूपम्। शृण्वन्नित्यत्रान्वय सर्वद्वितीयान्तानाम्। श्लिष्टं गीताक्षरैरभिन्नतया श्रूयमाणम्। तन्त्री वीणा तस्या

---

१ नाटयति चारु०

CHETA—Sir Maitreya, pour the water

( VID *does accordingly*, Cheta *washes* Char's *feet and moves away*).

CHAR.—You should also pour water over (i. e wash) the Brahmana's (Maitreya's) feet

VID —What good will water for my feet do? I shall again (soon) have to roll on the ground, like a beaten ass?

CHETA—Sir Maitreya, you are indeed, a Brahmana!

VID —Yes I am a Brahmana among all the Brahmanas, like the (harmless and despised) *dundubha* among all the serpents!

CHETA—Sir Maitreya, still I shall wash your feet (*Does so*) Sir Maitreya, here's that golden casket which I have to guard by day and you by night So please take it (*Gives it*). (*Exit*).

VID —(*Taking it*) This still remains with us! What, is there not even a thief in this Ujjayini who would rid me of this vile thing, this robber of my sleep? Friend, I am going to keep it inside, in the interior quadrangle

CHAR.—

Do not take it inside the quadrangle, for it has been worn by a courtesan, therefore, O Brahmana, you should keep it with you till it is returned to her (7).

( *Showing that he is about to sleep, he again recites the former verse, "To tell the truth" &c.*)

VID —Are you going to sleep?

CHAR—Yes

Here is this sleep approaching me as it were from my forehead, seizing my eys, of invisible form and elusive, it gains strength, like old age, overcoming the (opposing) vitality of a person (8)

---

स्वन च शृण्वन्नित्यर्थ । वर्णानां गानाक्षराणा मूर्छना । 'यथा कुटुम्बिन सर्वे एकीभूता भवन्ति हि । तथा स्वराणा सदोहो मूर्छनेत्यभिधीयते' इति । तस्या अन्तरगत मध्यगतम् । तारमुच्चम् । विरामे समाप्तौ मृदुम् । इदं विशेषणत्रय तन्त्रीस्वनस्येति बोध्यम् । हेला रागस्यारोहावरोहयोरनौचित्यम् । तत्र सयमित नियमितम् । अनौचित्यान्निवृत्तमिति भाव । पुनश्च ललितं रागेषु द्विरुच्चारित द्विस्त्रिरुक्त गीत शृण्वन्नित्यर्थं । इति ल०दी०। शार्दूलविक्रीडित छन्द ] ॥ ५ ॥ आपणमध्यरथ्याविभागेषु कुक्कुरा अपि सुप्ता । ओदरदि अवतरति । अस्ताभिमुखं यातीत्यर्थ । असाविति । [हि असौ उन्नते कोटी अग्रे यस्य स उन्नतकोटि इन्दु । अनेनार्धचन्द्रो गम्यते । तिमिरस्य अवकाश

विदूषक —तत्स्वपिव । (नाटयेन स्वपिति[1] ।) (ता सुवेम्ह ।)

(तत प्रविशति शर्विलक ।)

शर्विलक —

कृत्वा शरीरपरिणाहसुखप्रवेश
शिक्षाबलेन च बलेन च कर्ममार्गम् ।
गच्छामि भूमिपरिसर्पणघृष्टपार्श्वो
निर्मुच्यमान इव जीर्णतनुर्भुजङ्ग[2] ॥ ९ ॥

(नभोऽवलोक्य । सहर्षम् ।) अये कथमस्तमुपगच्छति[3] स भवान्मृगाङ्क । तथा हि ।

नृपतिपुरुषशङ्कितप्रचार परगृहदूषणनिश्चितैकवीरम् ।
घनतिमिरनिरुद्धसर्वभावा[4] रजनिरिय जननीव सवृणोति ॥ १० ॥

वृक्षवाटिकापरिसरे सधि कृत्वा प्रविष्टोऽस्मि मध्यमकम् । तद्यावदिदानीं चतु॰-शालकमपि दूषयामि । भो ।

---

प्रसरणावसर दत्त्वा अस्त व्रजति। जलावगाढस्य जलनिमग्नस्य वनद्विपस्य अवशिष्ट तीक्ष्ण विषाणाग्रमिव दृश्यमान इत्यर्थ । वनपदेन साम्रदन्तवत्त्व व्यज्यते। तेन च तीक्ष्ण विषाणाग्र दन्ताग्रमिवेत्युपमाऽपि सगच्छते। वृत्तमुपजाति ] ॥ ६ ॥ सयोग समवधानम् । द्वार देमि ददामि । कवाटमुद्घाटय अवकाश बिभर्मीत्यर्थ । बलमिति । प्रकाशनारी वेश्या [ तया धृत परिहित । अत कुटुम्बिन्यलकार-निवेशनस्थाने स्थापयितुमयोग्य इत्यर्थ । उपजाति छन्द ] ॥ ७ ॥ इयमिति । मनुष्यसत्त्व । नृसत्ताम् । [ मनुष्यसत्त्व मनुष्यबल परिभूय तिरस्कृत्य । उत्प्रेक्षानु-प्राणितोपमालकार । वशस्थ वृत्तम् ] ॥८॥ कृत्वेति । [ शिक्षाबलेन विद्यासामर्थ्येन बलेन शक्त्या च शरीरस्य परिणाहो विशालता तस्य सुख अक्लिष्ट सुखेन वा प्रवेशो यत्र तादृश कर्ममार्गं भित्तौ सधि कृत्वा भूमिपरिसर्पणेन घृष्टौ पार्श्वौ यस्य तथा गच्छामि । जीर्णतनु कञ्चुकेन निर्मुच्यमान भुजङ्ग इव गच्छामि । उपमा । वसन्ततिलका वृत्तम् । ] यथा जीर्णतनु सर्प मुच्यमानकञ्चुको गच्छति ॥ ९ ॥ नृपतीति । [ घन निबिड च तत्तिमिर च तेन निरुद्धा छन्ना सर्वे भावा पदार्था यस्या सा इय रजनि । नृपतिपुरुषेभ्य नगररक्षकेभ्य इत्यर्थ । शङ्कित शङ्कापूर्वं कृत इत्यर्थ । प्रचारो यस्य तम् । परगृहस्य यद् दूषण चौर्येण धनहरण तत्र निश्चि-तश्चासौ एकवीरश्च तम् । मादृशमिति शेष । सवृणोति गोपायति । घन यत्तिमिर प्रेमान्ध्य तेन निरुद्ध सर्वभावो यस्या तादृशी । जननी केवल वात्सल्यप्रेरितेत्यर्थ । यथा कुटिलगामिनमतिदुर्वृत्तमपि स्वपुत्र सवृणोति दूषणाद्रक्षति तथा । घन-पटलतमोनिरुद्धतारा ' इति पाठे घन पटल समूहो यस्य तथाभूत तम तेन निरुद्धा तारा नक्षत्राणि यस्या सा । पक्षे घन यत्पटल नेत्ररोगविशेषस्तस्य तमसा निरुद्धा

---

१ स्वपित . २ जीर्णतनू. ३ अस्त ग॰. ४ घनपटलतमोनिरुद्धतारा

VID —Well, we shall both sleep (*Shows that he falls asleep*)

(*Then enter Sarvilaka*),

SAR --

Having made a passage (for my business), by the power of my training and physical strength, (a passage) large enough to easily admit a man of my build, I move about, my sides being scratched by my creeping along the ground, like a snake with his old (worn out) body casting off his slough (9)

(*Looking at the sky joyfully*) Ah! How now! The divine Moon is about to set! For now--

This night, in which all the objects are hidden (from sight) by the pitchy darkness, is concealing me (as fondly) as a mother (conceals her son —a mother) in whom all other sentiments are overpowered by the intense blindness (of love),--(me) who walk about in fear of the king's watchmen, and who, supremely brave, am bent upon burgling the houses of others (10)

Having made a hole in the surrounding wall of the park, I have (now) reached the central building So now I shall force an entry into the (inner) quadrangle also Oh!

---

व्याप्ता तारा अक्ष्ण कनीनिका यस्या तथाभूता जननो पुत्र सवृणोति आलि- ङ्गनेनाच्छादयति तथा । उपमालकार । पुष्पिताग्रा वत्तम् ] ।। १० ।। काममिति । [ यत् चौर्यं स्वप्ने निद्रावस्थाया न तु जाग्रदवस्थायामिति भाव । वर्धने प्रसरति तद् इद नीच कर्म इति तथा च यद् विश्वस्तेषु शङ्कारहितेषु वञ्चना प्रतारणा तद्रूप पराभव । इति यद् तद् हि न शौर्यमिति पुरुष काम वदन्तु । काममित्य- र्धाङ्गीकारे । न मम तत्सर्वथा समतम् । स्वाधीना स्वायत्ता वचनीयता निन्दाऽपि वर मनाक् प्रिया । अत्र वचनीयताशब्देन तत्कारण चौर्यादि लक्ष्यते । बद्ध सेवा- ञ्जलिर्न वरम् । श्ववृत्ति सेवा । तदपेक्षया स्वातन्त्र्योपेत चौर्यादिकमपि वरमिति भाव । एतदेव पुरावृत्तोपन्यासेनोत्तम्भयति । हि यत एष मार्ग विश्वस्तवञ्चना- रूप पूर्वं द्रौणिना प्रशस्तवीरेणेत्यर्थं । नरेन्द्राणा सौप्तिकवधे सुप्त निद्रा तत्र भव. सौप्तिक वधस्तत्र कृत अवलम्बित ।] अश्वत्थाम्ना पाण्डवपक्षपातिनो राजानो रात्रौ सधि कृत्वा मारित । सौप्तिकमिति भावक्तान्तादध्यात्मादित्वाठ्ठञ् । शार्दूलविक्री- डित छन्द ]।। ११ ।। देश इति । [को नु भित्तीना देश भाग जलावसेकेन शिथिल यस्मिन्खननजन्य शब्द न भवेत् । यत्र च सधि बिल कराल तुङ्ग भीषणो वा अत एव दर्शनान्तरगत न भवेत् । क्षारेण क्षीणतया दुर्बलतया हर्म्यं लोष्टकै कृश

कामं नीचमिदं वदन्तु[1] पुरुषाः स्वप्ने च यद्वर्धते
विश्वस्तेषु च वञ्चनापरिभवश्चौर्यं न शौर्यं हि तत् ।
स्वाधीना वचनीयताऽपि हि वरं बद्धो न सेवाञ्जलि-
र्मार्गो ह्येष नरेन्द्रसौप्तिकवधे पूर्वं कृतो द्रौणिना ॥ ११ ॥

तत्कस्मिन्नुद्देशे[2] सन्धिमुत्पादयामि ।

देशः को नु जलावसेकशिथिलो यस्मिन्न शब्दो भवे-
द्भित्तीनां च न दर्शनान्तरगतः सन्धिः करालो भवेत् ।
क्षारक्षीणतया च लोष्टककृशं जीर्णं[3] क्व हर्म्यं भवे-
त्कस्मिन्स्त्रीजनदर्शनं च न भवेत्स्यादर्थसिद्धिश्च मे ॥ १२ ॥

( भित्तिं परामृश्य । ) नित्यादित्यदर्शनोदकसेचनेन[4] दूषितेयं भूमिः क्षारक्षीणा । मूषिकोत्करश्चेह । हन्त सिद्धोऽयमर्थः । प्रथममेतत्स्कन्दपुत्राणां सिद्धिलक्षणम् । अत्र कर्मप्रारम्भे कीदृशमिदानीं सन्धिमुत्पादयामि । इह खलु भगवता कनकशक्तिना चतुर्विधः सन्ध्युपायो दर्शितः । तद्यथा—'पक्वेष्टकानामाकर्षणमामेष्टकानां छेदनं पिण्डमयानां सेचनं काष्ठमयानां पाटनमिति । तदत्र पक्वेष्टके[5] इष्टकाकर्षणम् । तत्र

---

शीर्णलोष्टमिति यावत् । अत एव जीर्णमयत्नपाति क्व भवेत् । तथा च कस्मिन्स्थाने स्त्रीजनदर्शनं न भवेत् । स्त्रीणां स्तेयशास्त्रे निषिद्धत्वादिति भावः । मे अर्थसिद्धिश्च भवेत् । ] सन्धिः किंभूतः । दर्शनान्तरगतो दर्शनान्तरं कनकशक्त्यादिमतविशेषस्तदनुगतस्तद्बोधितः । करालो विपरीतः । स्त्रीजनदर्शनं हि तदनिष्टाचरणं वीरजनगर्हितं संभाव्येत । [ शार्दूलविक्रीडितं छन्दः ] ॥ १२ ॥ [ मूषिकोत्करः मूषकोद्धृतमृत्पुञ्जः । स्कन्दपुत्राणां स्कन्दोपजीविचौराचार्याणाम् । कनकशक्तिना कनकस्य शक्तिः आयुधविशेषो यस्य तेन स्कन्देन । पद्मव्याकोशमित्यादि । वैश्वदेवीच्छन्दः । [ पद्मव्याकोशादयः सन्धिसंज्ञाः ।] वापी विस्तीर्णमिति द्वे नामनी । यदुक्तवान्—'इष्टकाभित्तौ च संस्कारवशेन पद्मव्याकोशादयः सप्त संज्ञाः ' इति । भास्करो मण्डलाकारः । अन्येऽपि नामसदृशाः सप्त सन्धयः । [ आत्मशिल्पं सन्धिनिर्माणकौशलम् । ] ॥ १३ ॥ क्षतास्विति । [ क्षारेण क्षतासु जीर्णासु विषमासु कठिनासु च कल्पनासु रचनासु मया पाटितासु । प्रतिवेशिवर्गः आसन्नवर्तिजनसमूहः । ] कौशलं चेति चकारोऽप्यर्थे ॥ १४ ॥ कार्त्तिकेयः परमगुरुः । 'ब्रह्मण्यदेवादयोऽपरगुरवः ' इत्याहुः सर्वे । 'कार्तिकेयविशेषणम् ' इत्येके । 'ब्रह्मण्याय देवाय' इति क्वचित्पाठः । [ योगः मायाप्रयोगः तेन साधिता रोचना गोरोचना । ] अनयेति । [ समालभ्य लिप्तगात्रम् । ] ॥१५॥ एतेनेति । कर्मसु सन्धिरचनासु कर्ममार्गं प्रवेशानुकूलसन्धिपरिमाणमिति यावत् । भूषणसंप्रयोगानिति कटकादेर्मर्मावकीलकसुश्लिष्टसंयोजनाभेदान् ।

---

१ वदन्ति २ कस्मिन्नु देशे, कस्मिन्देशे ३ क्षीण ४ नित्यादित्यादर्शनोदकसेचनेन ५ पक्वेष्टिका.

Let people call, as they will, this a vile trade, which thrives well when people are asleep, and that getting the better of people by cheating them when they are unsuspicious, is mere thieving, and by no means a brave deed Still, even a condemnable position of independence is preferable to serving others with folded hands And this is the path that was followed of yore by Drona's son ( Asvatthaman) when he assassinated the Kashatriya princes in sleep (11)

So now, in what spot shall I effect a breach ?

What is that spot which is loose (soft) by being sprinkled over with water, so that it would produce no sound (when being bored through) ? Where could be made a hole in the wall, wide but not in sight (of the passers-by) ? What portion of this building is dilapidated, having its masonry worn out by the corroding action of saline exudations ? And where shall I not come upon (*lit* see) women-folk, and still accomplish my purpose ? (12)

( *Touching the wall* ). Here's a spot, worn out by saline action, and weakened by being sprinkled every day with water at the sight of the sun And here's a pile of rubbish excavated by rats ! My purpose in hand here is (as good as) accomplished ! (For ) this is the best (*lit* first) omen of success for us thieves, the followers ( *lit* sons ) of Karttikeya (our patron saint) Now I have to begin my job , what sort of hole shall I make here ? In connexion with this the divine Kanakasakti has laid down four modes of making a breach · they are as follows —to pull out the bricks when they are baked, to chip them off if unbaked, to wet them with water if they are of common clay, and to cut them through if they are of wood Now this is a wall of baked bricks, so I shall have to pull them out Here (seven kinds of holes are possible, *viz* )

---

[ वसन्ततिलक वृत्तम ] ।। १६ ।। **शिखेति** । [ प्रदीपस्य सुवर्णवत् पिञ्जरा पिङ्गलवर्णा महीतले सन्धिद्वारेण निर्गता पर्यन्ते यत्तमस्तेन समावृता वेष्टिता कषे निकषपाषाणे निवेशिता सुवर्णरेखेव विभाति । उपमा । वंशस्थ वृत्तम् ] ।। १७ ।। प्रतिपुरुष कृत्रिमपुरुषाकृतिम् । ] 'प्रतीक्ष्य' इत्यत्र 'प्रतीच्छ्य' इति पाठो दृश्यते । तच्च प्रतीच्छाग्रहण कृत्वेत्यत्रार्थे णिचि समासे क्त्वाप्रत्यये ल्यपि रूपम् । लक्ष्यसुप्त व्याजसुप्तम् । **नि श्वास इति** । [ अस्य पुरुषद्वयस्य नि श्वास शङ्कित सजातशङ्क न । शङ्कितस्य पुरुषस्य इव नेत्यर्थ । यत सुविशद स्फीत ] । तुल्यमविषममन्तरमन्तरालो यथा

'पद्मव्याकोशं भास्करं बालचन्द्रं
वापी विस्तीर्णं स्वस्तिकं पूर्णकुम्भम् ।
तत्कस्मिन्देशे दर्शयाम्यात्मशिल्पं
दृष्ट्वा श्वो यं यद्विस्मयं यान्ति पौराः ॥ १३ ॥

तदत्र पक्वेष्टके पूर्णकुम्भ एव शोभते । तमुत्पादयामि ।

अन्यासु भित्तिषु मया निशि पाटितासु
क्षारक्षतासु विषमासु च कल्पनासु ।
दृष्ट्वा प्रभातसमये प्रतिवेशिवर्गो
दोषांश्च मे वदति कर्मणि कौशलं च ॥ १४ ॥

नमो वरदाय कुमारकार्त्तिकेयाय नमः कनकशक्तये ब्रह्मण्यदेवाय देवव्रताय नमो भास्करनन्दिने नमो योगाचार्याय यस्याहं प्रथमः[1] शिष्यः । तेन च परितुष्टेन योगरोचना[3] मे दत्ता ।

अनया हि समालब्धं न मां द्रक्ष्यन्ति रक्षिणः ।
शस्त्रं च पतितं गात्रे रुजं नोत्पादयिष्यति ॥ १५ ॥

(तथा करोति ।) धिक्कष्टम् । प्रमाणसूत्रं मे विस्मृतम् । (विचिन्त्य ।) आ इदं यज्ञोपवीतं[4] प्रमाणसूत्रं भविष्यति । यज्ञोपवीतं हि नाम ब्राह्मणस्य महदुपकरणद्रव्यं[5] विशेषतोऽस्मद्विधस्य[6] । कुतः ।

एतेन मापयति भित्तिषु कर्ममार्ग-
मेतेन मोचयति भूषणसंप्रयोगान् ।
उद्घाटको भवति यन्त्रदृढे कपाटे
दष्टस्य कीटभुजगैः परिवेष्टनं च ॥ १६ ॥

---

स्यादेव वर्तते । कपटसुप्तस्य विषमान्तरालवत्त्वात् । [ दृष्टिः गाढं दृढं यथा तथा निमीलिता न विकला विश्लिष्टा अभ्यन्तरे व्याजसुप्तस्य इव न चञ्चला । गात्रं स्रस्ताश्च ते शरीरसंधयश्च तैः शिथिलं विश्लथम् । शय्यायाः प्रमाणं तस्मादधिकं हस्तपादस्य स्वैरप्रसरणात् । व्याजसुप्तो हि न तथा कुर्यात् । तथा च यदि लक्ष्यसुप्तः स्यादभिमुखं दीपं न मर्षयेत्सहेत । तत्प्रकाशमित्यर्थः । अतः परमार्थसुप्तमिदमिति निश्चयः । अत्रोक्तार्थस्य समर्थनाय कारणसमुदायस्योपादानात्समुच्चयालंकारः । शार्दूलविक्रीडितं छन्दः ]॥ १८ ॥ [ दर्दुरपणवौ वाद्यभेदौ । ] स्फारीभवति । अभिमन्त्रितो बीजविशेषो घनसहितभूतले क्षिप्तो बहुलीभवतीति प्रसिद्धिः । लघुत्वाच्चपलत्वात् । [ लघुः नीचः खलु उत्स्वप्नायते न तु महाशयः इति भावः । गोकाम्या गवेच्छा ब्राह्मणकाम्या ब्राह्मणेच्छा । ताभ्यां शापितः शपथं प्रापितः । सति संभवे गोब्राह्मण-

---

१ पद्म २ आद्य. ३ रचना. ४ मे यज्ञो०. ५ उपकरणम् ६ ह्यस्म०.

Padmavyakosa, Bhaskara, Balachandra, Vapi, Vistirna, Svastika and Purnakumbha,* So in what spot shall I exhibit my skill, seeing which to morrow the citizens would be filled with astonishment? (13)

Well, in this (particular case of a) baked-brick wall, the *Purnakumbha* breach alone would look well I will make that

When at night other walls were breached by me, as also hard structures, weakened by the action of saltpetre, the neighbours, seeing them in the morning, have condemned my crime, and praised my skill of handiwork as well (14)

My bow to Kumara Karttikeya, the bestower of boons! Reverence to Kanakasakti, the deserving of praise, whose law is divine! Salutation to Bhaskaranandin! And reverence to Yogacharya, whose first pupil I am Highly pleased with me, he gave me magic ointment

When I am besmeared with it, the watchmen will be unable to see me, nor will any weapon striking my body, produce pain (15)

(*He does accordingly*) Ah! Alas! I have forgotten my measuring tape! (*Reflecting*) Well, this sacred thread will serve as the measuring tape! Indeed, the sacred thread is a very important serviceable article to a Brahmana, particularly to one of my profession! For—

With this, one measures the passage to be made in the wall with this one breaks off the fastenings (*e g* hooks &c) of ornaments, this serves as a key when a door is securely locked, and it also serves as a ligature when one is bitten by insects or snakes (16)

योरिच्छा पूरणीयैवास्तिकैरिति धर्मदर्शनराद्धान्त । गोब्राह्मणयोरिच्छाया प्रतिघाते महत्पातकमिति निर्णयसिन्धुप्रमुखग्रन्थेषु स्पष्टम् । इति ल दी.] गोकाम्येति । कामयतेर्लिड्सामान्ये अचो यति पश्चात्स्त्रीत्व विवक्षणीयम् । गोब्राह्मणसहिताया भङ्ग त्व करोषि यदीद न गृह्णासीति शपथार्थं । प्रणयोऽभ्यर्थना । खिगिति । [ निर्वेद अस्य सजात इति निर्वेदित न निर्वेदितमनिर्वेदित प्रकृतार्थेऽकृतनिश्चयमित्यर्थ । तथाभूत पौरुष यस्मिन् । ] प्रकरणनिश्चयो निर्वेद तदभावोऽनिर्वेद ॥ १९ ॥ पदशब्द इत्यनेन रदनिकाप्रवेशसूचनम् ।

* These names are significant see Notes for full explanations.

मापयित्वा कर्म समारभे । (तथा कृत्वाऽवलोक्य च ।) एकलोष्टावशेषोऽयं संधिः । धिक्कष्टम्[1] । अहिना दष्टोऽस्मि । यज्ञोपवीतेनाङ्गुलीं बद्ध्वा विषवेगं नाटयति । चिकित्सां कृत्वा । ) स्वस्थोऽस्मि । (पुनः कर्म कृत्वा दृष्ट्वा च ।) अये ज्वलति प्रदीपः । तथा हि ।

**शिखा प्रदीपस्य सुवर्णपिञ्जरा महीतले संधिमुखेन निर्गता ।**
**विभाति पर्यन्ततमः समावृता सुवर्णरेखेव कषे निवेशिता ॥ १७ ॥**

(पुनः कर्म कृत्वा ।) समाप्तोऽयं संधिः । भवतु । प्रविशामि । अथ वा न तावत्प्रविशामि । प्रतिपुरुषं निवेशयामि[2] । (तथा कृत्वा ।) अये न कश्चित् । नमः कार्त्तिकेयाय । (प्रविश्य[3] दृष्ट्वा च ।) अये पुरुषद्वयं सुप्तम् । भवतु । आत्मरक्षार्थं द्वारमुद्घाटयामि । कथं जीर्णत्वाद्गृहस्य विरौति कपाटम्[4] । तद्यावत्सलिलमन्वेषयामि । क्व नु खलु सलिलं भविष्यति । (इतस्ततो दृष्ट्वा सलिलं गृहीत्वा क्षिपन्सशङ्कम् ।) मा तावद्भूमौ पतच्छब्दमुत्पादयेत् । भवतु । एवं तावत् । (पृष्ठेन प्रतीक्ष्य कपाटमुद्घाट्य ।) भवतु । एवं तावत् । इदानीं परीक्षे किं लक्ष्यसुप्तमुत[5] परमार्थसुप्तमिदं द्वयम् । (त्रासयित्वा परीक्ष्य च ।) अये परमार्थसुप्तेनानेन भवितव्यम् । तथा हि ।

**निःश्वासोऽस्य न शङ्कितः सुविशदस्तुल्यान्तरं[6] वर्तते**
**दृष्टिर्गाढनिमीलिता न विकला नाभ्यन्तरे[7] चञ्चला ।**
**गात्रं स्रस्तशरीरसंधिशिथिलं शय्याप्रमाणाधिकं**
**दीपं चापि न मर्षयेदभिमुखं स्याल्लक्ष्यसुप्तं यदि ॥ १८ ॥**

(समन्तादवलोक्य ।) अये कथं मृदङ्गः । अयं दर्दुरः । अयं पणवः । इयमपि वीणा । एते वंशाः । अमी पुस्तकाः । कथं नाट्याचार्यस्य[8] गृहमिदम् । अथ वा भवनप्रत्ययात् प्रविष्टोऽस्मि ।

---

**मार्जार इति ।** [क्रमणे लङ्घने मार्जारः प्रसरणे शीघ्रगमने मृगः । ग्रहेण आक्रमणेन लुञ्चनं लक्ष्यस्य छेदने श्येनः । सुप्तस्यासुप्तस्य च मनुष्यस्य वीर्यस्य शक्तेस्तुलने श्वा । सर्पणे भूमितलवक्रगमने पन्नगः । रूपमाकारः शरीरं पश्वाद्याकृतिर्वेशश्च एतेषां रचने माया । अतिपटुरित्यर्थः । देशभाषान्तरे तत्तद्देशभाषायाः परिज्ञाने भाषणे च वाक् सरस्वती । रात्रिषु दीपः । दीप इव सर्वं निरपेक्षः पश्यामीति भावः । सकटेषु दुर्गमप्रदेशेषु डुडुभः सर्पविशेषः । स्थले वाजी अश्व इव शीघ्रगामी । जले नौरिव प्लवनशीलः । शार्दूलविक्रीडितं वृत्तम् ।] ग्रहणयुक्तमालुञ्चनं ग्रहालुञ्चनम् । श्वा कुक्कुरः । माया शाम्बरी विद्या । रूपमाकारः । वेशोऽलंकारादियोजना ॥२०॥ **भुजग इति ।** [परिसर्पणे सवेगं परिभ्रमणे पतगपतेः गरुडस्य तुल्यः । भुवनस्य

---

१ हा धिक्क० २ प्रवेश०. ३ इति प्र० ४ कपाट ५ लक्ष०. ६ स्वप्नान्तर. ७ नाभ्यन्तर. ८ चार्यगृ०

So, I'll take measurements and start on my work (*Does so, then inspecting*) Only one brick remains (to be taken out) from this breach. Ah! Pity! I am bitten by a cobra! (*He binds up his finger with his sacred thread, and shows that he is affected by the poison, then applying the cure*) I am all right now! (*Again works at the breach, observing*) Ah! A lamp is burning!

For—

This flame of the lamp, yellowish like gold, emerging through the hole and lying across the ground, being surrounded by darkness on all sides, looks like a streak of gold scratched on a touch-stone (17)

(*Again working at the breach*) Here's the hole finished! Well, let me get in Or rather, I won't go in at once, I will first shove in a dummy man (*Does so*) Ah! There's nobody about! Bow to Karttikeya! (*Enters, observing*) Ah! Here are a couple of men asleep! Well, I'll open the door to provide a means of escape for myself How! The house being old, the door creaks! Well, now, I'll first look for water Where indeed might water be? (*Searches here and there, finding water, he sprinkles it about, then with apprehension*) I hope it won't make a noise when being sprinkled on the ground Well, now, I will do this (*Looking behind, he opens the door*) Well, this is all right Now I'll see if these two are feigning sleep or are really asleep (*Frightening them, and observing*) Ah! They must be really asleep For—

Their breathing is free (*lit* unsuspicious), is quite distinct, and occurs at regular intervals. Their eyes are firmly closed, they neither *blink* nor are they unsteady behind the lids Their limbs lie loose, owing to the bodily joints being relaxed, and they stretch beyond the limits of the bed Moreover, if they were shamming sleep, they could not have borne the (gleam of the) lamp held before their face (18)

(*Looking about him*) Ah! How now! Here is a tabour, here a flute, and here a *panava*! Here too is a lute, here are reedpipes and here these puppets! How! This turns out to be the house of a professor of music! Or why, I have entered by trusting to the (external grandeur of the) mansion —

तत्किं परमार्थदरिद्रोऽयमुत राजभयाच्चौरभयाद्वा भूमिष्ठं द्रव्यं धारयति। तन्ममापि नाम शर्विलकस्य भूमिष्ठं द्रव्यम्। भवतु। बीजं प्रक्षिपामि। (तथा कृत्वा।) निक्षिप्तं बीजं न क्वचित्स्फारीभवति। अये परमार्थदरिद्रोऽयम्। भवतु। गच्छामि।

विदूषक—(उत्स्वप्नायते।) भो वयस्य संधिरिव दृश्यते। चौरमिव पश्यामि। तद्गृह्णातु भवानेतत्सुवर्णभाण्डम्। (भो वअस्स संधी[1] विअ दिज्जदि। चोरं विअ पेक्खामि। ता गेण्हदु भवं एदं सुवण्णभण्डअम्।)

शर्विलक—किं न खल्वयमिह मां प्रविष्टं ज्ञात्वा दरिद्रोऽस्मीत्युपहसति। तत्किं व्यापादयामि उत लघुत्वादुत्स्वप्नायते। (दृष्ट्वा।) अये जर्जरस्नानशाटी-निबद्धं दीपप्रभयोद्दीपितं सत्यमेवैतदलंकरणभाण्डम्। भवतु। गृह्णामि। अथ वा न युक्तं तुल्यावस्थं[2] कुलपुत्रजनं पीडयितुम्। तद्गच्छामि।

विदूषक—भो वयस्य शापितोऽसि गोब्राह्मणकाम्यया यद्येतत्सुवर्णभाण्डं न गृह्णासि। (भो वअस्स साविदोसि गोबह्मणकामाए जइ एदं सुवण्णभण्डअं ण गेह्णसि।)

शर्विलक—अनतिक्रमणीया[3] भगवती गोकाम्या ब्राह्मणकाम्या च। तद्गृह्णामि। अथ वा ज्वलति प्रदीप। अस्ति च मया प्रदीपनिर्वापणार्थमाग्नेय कीटो धार्यते। तं तावत्प्रवेशयामि। तस्यायं[4] देशकाल। एष मुक्तो मया कीटो यात्वेवास्य[5] दीपस्योपरि मण्डलैर्विचित्रैर्विचरति। एष पक्षद्वयानिलेन निर्वापितो भद्रपीठेन[6]। धिक्। कृतमन्धकारम्। अथ वा मयाऽप्यस्मद्ब्राह्मणकुले धिक् कृतमन्धकारम्। अहं हि चतुर्वेदविदोऽप्रतिग्राहकस्य पुत्र शर्विलको नाम ब्राह्मणो गणिकामदनिकार्थमकार्यमनुतिष्ठामि। इदानीं करोमि ब्राह्मणस्य प्रणयम्। (इति जिघृक्षति।)

विदूषक—भो वयस्य शीतलस्तेऽग्रहस्त। (भो वअस्स सीदलो दे अग्गहत्थो।)

---

निलयस्थानस्यावलोकने शश इव। भिन्नसाधारणधर्मा मालोपमाऽलंकार। पुष्पिताग्रा छन्द।] वृक इति हुण्डार इति प्रसिद्ध ॥२१॥ कल्पिअ कल्पयित्वा। निर्मायेत्यर्थ। उपरीति। उपरिभागे तलभागे च [उपरितलादूर्ध्वप्रदेशात्] निपातिता आकृष्टा इष्टका यत्र। 'उपरितन-' इति पाठे उपरितनी उपरिभवा। शेषं तुल्यम्। [शिरसि उपरिभागे तनु अल्पविस्तार मध्यदेशे मध्यभागे विपुल विस्तृत। कुम्भाकार इति भाव। असदृशजनस्य चौरादे संप्रयोग आत्मनि व्यापार तस्माद्भीरो महागृहस्य स्फुटितं हृदयमिव स्थित। उत्प्रेक्षालंकार। पुष्पिताग्रा वृत्तम्]॥२२॥ वैदेश्येनेति। [विदेशे भव वैदेश्य तेन। व्यापारं संधिकरणमभ्यस्यता मम गृहे संधि कृतो भवेत्। अत असौ नर धनैर्विरहितमत विस्रब्ध

---

१ सधी विअ दि० सन्धी विअ दि० २ तुल्यावस्थकु० ३ ०क्रमणी मम. ४ तथा कृत्वा। अये निर्वापित प्रदीप. ५ यात्येवास्य, यात्वेवास्य ..रितुम् ६ कीटेन.

Now, is he really a poor man, or does he keep his money underground, from fear of the king or of thieves ? Ah, can there be a treasure buried to Sarvilaka ? Well, I'll scatter the (magical) seeds ( *Does so* ) The seeds, when scattered, nowhere multiply (or expand) Oh! He must really be a poor man! Well, I'll depart

VID —(*Talking in his sleep*) Friend, I see something like a hole! I see someone like a thief! So take hold of this casket containing gold ornaments

SAR —What! Can it be that he, knowing that I entered here, is mocking me that he is poor! Shall I then kill him ?— Or is he talking in sleep owing to lightheadedness ? ( *Seeing* ) Ha! This thing, wrapped up in a worn out bathing-garment, is really a casket of gold ornaments, as it gleams in the light of the lamp All right, I'll take it — Or rather, it is not proper to injure (*i e* rob) a person of high birth similarly situated with myself ( *i e* poor ) So I'll go away

VID —Frind, I adjure you by the wishes of cows and Brahmanas, do take this gold casket

SAR —The (adjuration by the) saintly wishes of cows and Brahmanas must not be transgressed So I'll take it But no! Here's a lamp burning! I carry with me a fire insect (*i e* a moth) for extinguishing lamps So I'll let it loose, this is the (proper) place and time for it Here this insect, set free by me, flies straightway and whirls over the lamp, describing wonderful circles Here is the lamp extinguished by Bhadrapitha with the flutter ( *lit* breeze) of its wings! Oh! It has caused darkness! Or rather, fie on me, who too have caused darkness in (*i e* brought ignominy upon) our Brahmana family! For here am I, a Brahmana, Sarvilaka by name, the son of one who knew (by heart) all the four Vedas and who never accepted any gifts, doing this foul deed for the sake of the courtesan Madanika! Now I will grant the Brahmana's request ( *Proceeds to take the casket* )

VID —Friend, your fingers are cold!

---

यथा तथा सुप्त जन न वेदितवान् । असौ अस्माक महती निवासरचना दृष्ट्वा प्राग् आशान्वित सुचिर सधिच्छेदनखिन्न पश्चाद् द्रव्यालाभे निराश एव गत । [ शार्दूलविक्रीडित वृत्तम् ] ॥ २३ ॥ निष्क्रामयिष्यामि बहि करिष्यामीति दिष्ट्या हर्षे ।

**शर्विलक**—धिक्प्रमाद । सलिलसपर्काच्छीतलो मेऽग्रहस्त । भवतु । कक्षयोर्हस्त[1] प्रक्षिपामि । (नाटचेन[2] सन्यहस्तमुष्णीकृत्य[3] गृह्णाति ।)

**विदूषक**—गृहीतम् । (गहिदम् ।)

**शर्विलक**—अनतिक्रमणीयोऽय ब्राह्मणप्रणय । तद्गृहीतम् ।

**विदूषक**—इदानी विक्रीतपण्य इव वणिगह सुख स्वप्स्यामि । (दाणि विक्किणिदपण्णो विअ वाणिओ अह सुह सुविस्सम् ।)

**शर्विलक**—महाब्राह्मण स्वपिहि वर्षशतम् । कष्टमेव मदनिकागणिकार्थे ब्राह्मणकुल[4] तमसि पातितम् । अथ वाऽऽत्मा[5] पातित ।

**धिगस्तु खलु दारिद्रचमनिर्वेदितपौरुषम्[6] ।**
**यदेतद्गर्हित कर्म निन्दामि च करोमि च ।। १९ ।**

तद्यावन्मदनिकाया निष्क्रयणार्थं वसन्तसेनागृह गच्छामि । (परिक्रम्यावलोक्य च ।) अये पदशब्द इव । मा नाम रक्षिण । भवतु । स्तम्भीभूत्वा तिष्ठामि । अथ वा ममापि नाम शर्विलकस्य रक्षिण । योऽह

**मार्जार क्रमणे मृग प्रसरणे श्येनो ग्रहालुञ्चने[7]**
**सुप्तासुप्तमनुष्यवीर्यतुलने श्वा सर्पणे पन्नग ।**
**माया रूपशरीरवेशरचने वाग्देशभाषान्तरे**
**दीपो रात्रिषु सकटेषु डुडुभो वाजी स्थले नौर्जले ।। २० ।।**

अपि च ।

**भुजग इव गतौ गिरि स्थिरत्वे पतगपते परिसर्पणे च तुल्य ।**
**शश इव भुवनावलोकनेऽह वृक इव च ग्रहणे बले च सिह ।। २१ ।।**

(प्रविश्य)

**रदनिका**—हा धिक् हा धिक् बहिर्द्वारशालाया प्रसुप्तो वर्धमानक सोऽप्यत्र न दृश्यते । भवतु । आर्यमैत्रेयमाह्वयामि । ( इति परिक्रामति । ) ( हद्धी हद्धी बाहिरदुआरसालाए पसुत्तो वड्ढमाणओ सोवि एत्थ ण दीसइ । भोदु । अज्जमित्तेअ सद्दावेमि ।)

---

क इति । [ भूतार्थं यथावृत्तमर्थं चौरेणापहृत रत्नभाण्डमिति । तुलयिष्यति लघूकरिष्यति । ] निष्प्रतापा निष्पौरुषा । [ अर्थान्तरन्यासोऽलकार. ] ।। २४ ।। **यदीति** । [ कृतान्तेन दैवेन ] । प्रणयोऽर्थित्वम् । [ दूषित मलिनीकृतम् । लोकै । ममैवापहारकत्वेनावस्थापनात इति भाव ] ।। २५ ।। **भैक्षेणेति** । [ न्यासस्य प्रतिक्रिया तन्निष्क्रयद्रव्यमित्यर्थं । भैक्षेण भिक्षालब्धद्रव्यसघातेन अर्जयिष्यामि ] ।।२६।। अव-

---

१ कक्षाया २ इति नाटचेन ३ स्वहस्त ४ ब्रह्मकुल ५ आत्माऽपि ६ निवेदित ७ गृहा०

SAR —Oh ! What carelessness (on my part) ! My fingers are cold owing to their (recent) contact with water Well, I'll hold my hand (for a while) inside my arm pit. (*He acts warming his right hand, and then takes the casket*)

VID —Have you got it ?

SAR —Of course, I couldn't say 'no' to this request of a Brahmana, so I've accepted it

VID —Now I can sleep soundly, like a merchant that has sold off his goods

SAR —Worthy Brahmana, you may sleep for a hundred years ! Alas ! For the sake of the courtesan Madanika, I have thus brought degradation upon (*lit* cast into darkness) my Brahmana family, or why, I have degraded my own soul ?

Fie upon poverty, on account of which one's manly nature ceases to feel disgust (for unworthy acts) ! For instance, here I am censuring this ignoble deed, but am doing it all the same ! (19)

Well now let me repair to Vasantsena's mansion to buy Madanika's freedom (*Walking about and observing*) Ah ! It sounds like somebody's footsteps ! I hope they are not policemen ! Never mind—I'll become (rigid like) a pillar and stand (here) Or rather—Are the police of any accout to me Sarvilaka ?—I, who

Am a (veritable) cat in leaping, a deer in bounding off, a hawk in seizing prey and tearing it to pieces, a dog in judging of the strength of a man according as he is asleep or awake, a snake in crawling, magic (personified) in assuming different characters, postures and dresses the goddess of speech in (talking in) the various dialects of different countries, a lamp during nights, a dudubha in (slipping away from) intricate places, a horse on land, and a boat on water ! (20)

Moreover—

In movement I am (quick) like a snake, in steadiness, like a mountain, in flying, I resemble the lord of birds (the eagle) In surveying the whole country, I am like a hare, in effecting a capture, like a wolf, and in strength, a lion (21)

(*Entering*)

RADANIKA—Oh ! Alas ! How now ! Vardhamanaka was sleeping in the room adjoining the outer gate, he, too, is not to be seen here ! Well, I'll call out to the worthy Maitreya. (*Walks about*).

शर्विलक —(रदनिका हन्तुमिच्छति। निरूप्य।) कथं स्त्री। भवतु। गच्छामि। (इति निष्क्रान्तः।)

रदनिका—(गत्वा सत्रासम्।) हा धिक् हा धिक् अस्माकं गृहे सधिं कर्तयित्वा[1] चौरो निष्क्रामति। भवतु। मैत्रेयं गत्वा प्रबोधयामि। (विदूषकमुपगम्य।) आर्य मैत्रेय उत्तिष्ठोत्तिष्ठ। अस्माकं गेहे सधिं कर्तयित्वा चौरो निष्क्रान्तः। (हद्धी हद्धी अम्हाण गेहे सधिं कप्पिअ चोरो णिक्कमति। भोदु। मित्तेअं गदुअ पबोधेमि। अज्ज मित्तेअ उठ्ठेहि उठ्ठेहि। अम्हाण गेहे सधिं कप्पिअ चोरो णिक्कन्तो।)

विदूषक —(उत्थाय।) आः दास्याः पुत्रिके किं भणसि। चौरं कर्तयित्वा सधिर्निष्क्रान्तः। (आः दासीएधीए किं भणासि। चोरं[2] कप्पिअ सधी णिक्कन्तो।)

रदनिका—हताश अलं परिहासेन। किं न प्रेक्षसे एतद्। (हदास अलं परिहासेण। किं ण पेक्खसि एणम्।)

विदूषक —आः दास्याः पुत्रिके किं भणसि द्वितीयमिव द्वारमुद्घाटितमिति। भो वयस्य चारुदत्त उत्तिष्ठोत्तिष्ठ। अस्माकं गेहे सधिं दत्त्वा चौरो निष्क्रान्तः। (आः दासीएधीए किं भणासि दुदिअं विअ दुआरअं उग्घाडिदं त्ति। भो वअस्स चारुदत्त उठ्ठेहि उठ्ठेहि। अम्हाण गेहे सधिं दइअ चोरो णिक्कन्तो।)

चारुदत्त —भवतु। भो अलं परिहासेन।

विदूषक —भो न परिहासः। प्रेक्षतां भवान्। (भो ण परिहासो। पेक्खदु भवम्।)

चारुदत्त - कस्मिन्नुद्देशे।

विदूषक - भो एष। (भो एसो।)

चारुदत्त —(विलोक्य।) अहो दर्शनीयोऽयं सधिः।

[3]उपरितलनिपातितेष्टकोऽयं शिरसि तनुर्विपुलश्च मध्यदेशे।
असदृशजनसंप्रयोगभीरोर्हृदयमिव स्फुटितं महागृहस्य॥ २२॥

कथमस्मिन्नपि कर्मणि कुशलता।

विदूषक —भो वयस्य अयं सधिर्द्वाभ्यामेव दत्तो भवेत्। अथ वाऽऽगन्तुकेन शिक्षितुकामेन वा। अन्यथाऽत्रोज्जयिन्यां कोऽस्माकं गृहविभवं न जानाति। (भो वअस्स अअं सधी दुवेहिं ज्जेव्व दिण्णो भवे। आदु आगन्तुएण सिक्खिदुकामेण वा। अण्णधा इध उज्जइणीए को अम्हाण घरविहवं ण जाणादि।)

चारुदत्त —

वैदेश्येन कृतो भवेन्मम गृहे व्यापारमभ्यस्यता
नासौ वेदितवान्धनैर्विरहितं विस्रब्धसुप्तं[4] जनम्।
दृष्ट्वा प्राङ्महतीं निवासरचनामस्माकमाशान्वितः
सधिच्छेदनखिन्न एव सुचिरं पश्चान्निराशो गतः॥ २३॥

ततः सुहृद्भ्यः किमसौ कथयिष्यति तपस्वी। सार्थवाहसुतस्य गृहं प्रविश्य न किंचिन्मया[5] समासादितमिति।

---

१ कल्पयित्वा २ चोरो कप्पिदो ३ उपरितन. ४ विश्रब्ध ५ मयाऽऽसादितम्.

SAR.—(*Prepares to strike down Radanika, but observing*) Ah! She is a woman! Never mind, then, I am going (*Exit*).

RAD.—(*Moving on, with fear*) Ha! What's that! A thief has burgled our house and is escaping! Well, I'll go and rouse Maitreya. (*Approaching Vid.*) Sir Maitreya, get up, get up, in our house a thief has cut a hole and escaped!

VID.—(*Getting up*) Ah! What do you say, you slave-born wench? A hole has cut a thief and escaped?

RAD.—You silly fellow, don't you be joking, can't you see this hole?

VID.—Ah! What do you say, you slave-born wench? That he has cut open a second door as it were? Here, friend Charudatta, get up, get up, a chief has cut a hole in our house and escaped!

CHAR.—Enough, don't you be joking.

VID.—My dear friend, this is no joke, you should see for yourself.

CHAR.—In what place (is it),

VID.—Here it is.

CHAR.—(*Observing*) Ah! It is a fine looking hole!

This breach, formed with the bricks pulled out from the upper part (downwards), which is narrow at the top and wide in the central part, looks as if it were the heart of our stately mansion, burst in fear at coming in contact with an unworthy person (*i. e.* the thief) (22)

How! There is a certain skill even in such kind of work!

VID.—Friend, this hole could have been made only by two sorts of persons, either by a stranger, or by one who wished to try his hand, for otherwise, who is there in this Ujjayini that does not know the wealth of our house!

CHAR.—

This (hole) in our house must have been made by a foreigner who wanted to practise his art, he did not know that people here were sleeping soundly because they were moneyless! At first, on seeing the magnificent structure of our house, he was filled with hopes (and entered), but he must have afterwards gone disappointed, being just fatigued, having long toiled at boring thathole (23)

So what will that poor fellow say to his friends?—that he entered the house of a leading merchant's son (Char.) but got nothing?

**विदूषक**—भो कथ तमेव चौरहतकमनुशोचसि। तेन चिन्तित महदेतद्गृहम्। इतो रत्नभाण्ड सुवर्णभाण्ड वा निष्क्रामयिष्यामि। (स्मृत्वा। सविषादमात्मगतम्।) कुत्र तत्सुवर्णभाण्डम्। (पुनरनुस्मृत्य। प्रकाशम्।) भो वयस्य त्व सर्वकाल भणसि। मूर्खो मैत्रेयोऽपण्डितो मैत्रेय इति। सुष्ठु मया कृत तत्सुवर्णभाण्ड भवतो हस्ते समर्पयता। अन्यथा दास्या पुत्रेणापहृत भवेत्। (भो कध त ज्जेव्व चोरहदअ अणुसोचसि। तेण चिन्तिद महन्त एद गेहम्। इदो रअणभण्डअ सुवण्णभण्डअं वा णिक्कामइस्सामि। कहिं त सुवण्णभण्डअम्। भो वअस्स तुम सव्वकाल[1] भणासि। मुक्खो मित्तेअओ अपण्डिदो मित्तेअओ त्ति। सुट्ठु[2] मए किद त सुवण्णभण्डअ भवदो हत्थे समप्पअन्तेण। अण्णधा दासीएपुत्तेण अवहृद भवे।)

**चारुदत्त**—अल परिहासेन।

**विदूषक**—भो यथा नामाह मूर्खस्तत्किं परिहासस्यापि देशकाल न जानामि। (भो जह णाम अह मुक्खो ता किं परिहासस्स वि देसआल ण जाणामि।

**चारुदत्त**—कस्या वेलायाम्।

**विदूषक**—भो यदा त्व मया भणितोऽसि शीतलस्तेऽग्रहस्त। (भो जदा तुम मए भणिदो सि शीदलो दे अग्गहत्थो।)

**चारुदत्त**—कदाचिदेवमपि स्यात्। (सर्वतो निरूप्य। सहर्षम्।) वयस्य दिष्ट्या ते प्रिय निवेदयामि।

**विदूषक**—किं नापहृतम्। (किं ण अवहृदम्।)

**चारुदत्त**—हृतम्।

**विदूषक**—तथाऽपि किं प्रियम। (तधा वि किं पिअम्।)

**चारुदत्त**—यदसौ कृतार्थो गत।

**विदूषक**—न्यास खलु स। (णासो क्खु सो।)

**चारुदत्त**—कथ न्यास। (मोहमुपगत[3]।)

**विदूषक**—समाश्वसितु भवान्। यदि न्यासश्चौरेणापहृतस्त्व किं मोहमुपगत। (समस्ससदु भवम्। जइ णासो चोरेण अवहदो तुम किं मोह उवगदो।)

**चारुदत्त**—(समाश्वस्य।) वयस्य।

> क श्रद्धास्यति भूतार्थं सर्वो मा तुलयिष्यति।
> शङ्कनीया हि लोकेऽस्मिन्निष्प्रतापा दरिद्रता॥ २४॥

भो कष्टम्।

> यदि तावत्कृतान्तेन प्रणयोऽर्थेषु मे कृत।
> किमिदानीं नृशसेन चारित्रमपि[4] दूषितम्॥ २५॥

---

१ सव्व २ सुट्ठु क्खु ३ उपागत ४ चरि०.

VID.—Sir, how is it that you feel sorry for that rascally thief? He must have thought: Here is a big mansion; from here I shall carry off a casket of jewels or of gold.—(*Remembering: sorrowfully, to himself*) Ah! Where's that golden casket?—(*Again remembering, aloud*) Friend, you are always saying that Maitreya is a fool, that Maitreya is a blockhead. But I acted wisely in that I delivered over that golden casket into your hands! Otherwise that son-of-a-slave (thief) would have taken it away.

CHAR.—Enough of joking.

VID.—Sir, though I may be a fool, still do I not know even the time and place for joking?

CHAR.—At what time (did you give it to me)?

VID.—Sir, just when I said to you that your fingers were cold.

CHAR.—Perhaps it might have been even as you say.—(*Looking everywhere, joyfully*). Friend, good luck! I'll tell you something pleasant!

VID.—What, it is not stolen?

CHAR.—It is.

VID.—Then what is it that is pleasant?

CHAR.—That he went away satisfied.

VID.—But it was a deposit!

CHAR.—Ah! A deposit? (*Faints.*)

VID.—Come to yourself, Sir. If a thief has stolen the deposit, why should you faint (for that)?

CHAR.—(*Recovering*) Friend,

Who will believe the real fact? Everyone will think lightly of me. For, in this world, inglorious poverty is always prone to be suspected. (24)

Ah! Bad luck!

If, indeed, Fate did desire my riches,—why did now the cruel one spoil my character also? (25)

---

रक्खणजणस्य अपगत रक्षण यस्यासौ अपरक्षणो जन । [ पुष्करपत्र कमलपत्र तत्पतिता जलबिन्दवस्तद्वच्चञ्चलै । अतिशौण्डीरतया अत्युन्नतचित्ततया । पुरस्तान्मुख. प्राचीमुख । प्रतिग्रहे तस्यावश्यकत्वात् । ] पौरत्थिआहिमुहो पौरस्त्याभिमुख । पूर्वदिगवलम्बितमुख इत्यर्थ । रअणसट्ठि रत्नषष्ठिकाभिध व्रतम् । ‘अरण्य-

विदूषक —अहं खल्वपलपिष्यामि केन दत्तं केन गृहीतं को वा साक्षीति। ( अहं क्खु अवलविस्सं केण दिण्णं केण गहिदं को वा सक्खि त्ति। )

चारुदत्त —अहमिदानीमनृतमभिधास्ये।

> भैक्षेणाप्यर्जयिष्यामि[1] पुनर्न्यासप्रतिक्रियाम्।
> अनृतं नाभिधास्यामि चारित्रभ्रंशकारणम् ॥ २६ ॥

रदनिका —तद्यावदार्याधूतायै गत्वा निवेदयामि। ( इति निष्क्रान्ता। ) ( ता जाव अज्जाधूदाए[2] गदुअ णिवेदेमि। )

( ततः[3] प्रविशति चेटया सह चारुदत्तवधू। )

वधू—( ससम्भ्रमम्। ) अयि सत्यमपरिक्षतशरीर आर्यपुत्र आर्यमैत्रेयेण सह। ( अइ सच्चं अवरिक्खदसरीरो अज्जउत्तो अज्जमित्तेएण सह। )

चेटी—भर्त्रि सत्यम्। किं तु य स वेश्याजनस्यालंकारः सोऽपहृतः। (भट्टिणि सच्चम्। किं तु जो सो वेस्साजणकेरको अलंकारओ सो अवहृदो।)

वधू —( मोहं नाटयति। )

चेटी—समाश्वसित्वार्या धूता। ( समस्ससदु[4] अज्जा धूदा।)

वधू—( समाश्वस्य। ) चेटि किं भणसि अपरिक्षतशरीर आर्यपुत्र इति। वरमिदानीं स शरीरेण परिक्षतः न पुनश्चारित्रेण। साम्प्रतमुज्जयिन्यां जन एवं मन्त्रयिष्यति दरिद्रतयाऽऽर्यपुत्रेणैवेदृशमकार्यमनुष्ठितमिति। ( ऊर्ध्वमवलोक्य निःश्वस्य च। ) भगवन्कृतान्त पुष्करपत्रपतितजलबिन्दुचञ्चलैः क्रीडसि दरिद्र-पुरुषभागधेयैः। इयं च मे एका मातृगृहलब्धा रत्नावली तिष्ठति। एतामप्यति-शौण्डीरतयाऽऽर्यपुत्रो न ग्रहीष्यति। चेटि आर्यमैत्रेयं तावच्छब्दापय। ( हञ्जे किं भणासि अवरिक्खदसरीरो अज्जउत्तो त्ति। वरं दाणिं सो सरीरेण परिक्खदो ण उण चारित्तेण। संपदं उज्जइणीए जणो एव्वं मन्तइस्सदि दलिद्ददाए अज्जउत्तेण ज्जेव्व ईदिसं अकज्जं अणुचिट्ठिदं त्ति। भअवं कअन्त पोक्खरवत्तपडिदजलबिन्दु-चञ्चलेहिं कीलसि दलिद्दपुरिसभाअधेएहिं। इअं च मे एक्का मादुघरलद्धा रअणा-वली चिठ्ठदि। एदं पि अदिसोण्डीरदाए अज्जउत्तो[5] ण गेण्हिस्सादि। हञ्जे अज्ज-मित्तेअं दाव सद्दावेहि। )

चेटी—यदार्या धूताऽऽज्ञापयति। ( विदूषकमुपगम्य। ) आर्य मैत्रेय धूता त्वामाह्वयति। ( जं अज्जा धूदा आणवेदि। अज्ज मित्तेअ धूदा दे सद्दावेदि। )

विदूषक —कुत्र सा। ( कहिं सा। )

चेटी—एषा तिष्ठति। उपसर्प। ( एसा चिठ्ठदि। उवसप्प। )

विदूषक —( उपसृत्य। ) स्वस्ति भवत्यै। (सोत्थि भोदीए।)

---

१ भैक्ष्येण. २ अज्जाए. ३ प्रविश्य चेटया ४ समस्स० समस्स० ५ एसो अज्ज०.

VID —I would, indeed deny it ( and say )—Who made the deposit ? Who accepted it ? Who was the witness ?

CHAR —Am I now to tell a lie ? ( No )

I'll again acquire the means of returning the deposit, even by begging ( if necessary ), but I'll never utter a falsehood, which would lead to loss of character ( 26 )

RAD —Well, then, let me go and tell ( all this ) to the worthy Dhuta ( *Exit* )

( *Then enter* Charudatta's wife, *accompanied by the* Maid ).

Wife—( *Excitedly* ) Well, is my lord ( i e husband ) really safe ( *lit* uninjured ) in body, along with the worthy Maitreya ?

THE MAID—Mistress, he is really safe But that ornament belonging to the courtesan,—that is stolen

Wife—( *Acts swooning* )

THE MAID—Worthy Dhuta, is compose yourself !

WIFE—( *Recovering* ) Girl, What did you say ?—that my lord was safe in body ? It were now far better that he was injured in body, than in charactor ( For ) now in Ujjayini people will ( everywhere ) say that my husband himself, being poor, committed such a vile deed ( *Looking upwards and sighing* ) O mighty Fate ! You do, indeed, play with the fortunes of poor people, unstable as the drops of water fallen on lotus-leaves !— Now, I have only a jewel-necklace left, come from my mother's family. But even this, my husband would refuse to accept, on account of his extreme pride ! Girl, just call the worthy Maitreya here

THE MAID—As the noble Dhuta orders ( *Approaching the* Vid ) Sir Maitreya, Dhuta is calling you

VID —Where is she ?

THE MAID—Here is she , go to her

VID —( *Approaching* ) My blessings to your ladyship

---

षष्ठिका नाम ग्रीष्मव्रतम् ' इत्येके । [ प्रतिग्राहयितव्य यतो दक्षिणया व्रत सुसिद्ध भवति । ] [ वैक्लव्यात् चित्तस्य दौस्थित्यात् । अकार्यमात्मघातादि । आत्मेति । आत्मभाग्येन स्वस्य दुर्दैवेन क्षत द्रव्य यस्य स. । अर्थत धनाद्धतो । द्रव्याभावादित्यर्थ । [ अर्थत अर्थसबन्धेन ] ॥ २७ ॥ **विभवेति** । [ विभवमनुगतो विभवानुरूप

**वधू**—आर्य वन्दे । आर्य पुरस्तान्मुखो भव । (अज्ज वन्दामि । अज्ज पुरत्थिआमुहो[1] होहि ।)

**विदूषक**—एष भवति पुरस्तान्मुख संवृत्तोऽस्मि। (एसो भोदि पुरत्थिआमुहो सवुत्तो म्हि। )

**वधू**—आर्य प्रतीच्छेमाम्। (अज्ज पडिच्छ इमम्।)

**विदूषक**—कि न्विदम् । (किं ण्णेदम् ।)

**वधू**—अह खलु रत्नषष्ठीमुपोषिताऽऽसम्। तत्र यथाविभवानुसारेण ब्राह्मण प्रतिग्राहयितव्य । स च न प्रतिग्राहित । तत्तस्य कृते प्रतीच्छेमा रत्नमालिकाम् । (अह[2] क्खु रअणसट्ठि उववसिदा आसि । तहिं जधाविहवाणुसारेण बम्हणो पडिग्गाहिदव्वो[3]। सो अ ण पडिग्गाहिदो । ता तस्स किदे पडिच्छ इम रअणमालिअ ।)

**विदूषक**—(गृहीत्वा ।) स्वस्ति । गमिष्यामि । प्रियवयस्याय निवेदयामि । (सोत्थि । गमिस्सम् । पिअवअस्सस्स णिवेदेमि ।)

**वधू**—आर्य मैत्रेय मा खलु मा लज्जिता कुरु । (इति निष्क्रान्ता ।) (अज्ज मित्तेअ मा क्खु म लज्जावेहि ।)

**विदूषक**—(सविस्मयम् ।) अहो अस्या महानुभावता। (अहो से महाणुभावदा ।)

**चारुदत्त**—अये चिरयति मैत्रेय । मा नाम वैक्लव्यादकार्यं कुर्यात् । मैत्रेय मैत्रेय ।

**विदूषक**—(उपसृत्य ।) एषोऽस्मि । गृहाणैताम् । (रत्नावली दर्शयति ।) (एसो म्हि। गेण्ह एदम्।)

**चारुदत्त**—किमेतत् ।

**विदूषक**—भो यत्ते सदृशदारसग्रहस्य फलम् । (भो ज दे सरिसदारसगहस्स फलम् ।)

**चारुदत्त**—कथ ब्राह्मणी मामनुकम्पते । कष्टम् । इदानीमस्मि दरिद्र ।

> **आत्मभाग्यक्षतद्रव्य स्त्रीद्रव्येणानुकम्पित ।**
> **अर्थत पुरुषो नारी या नारी साऽर्थत पुमान् ॥ २७ ॥**

अथ वा । नाह दरिद्र । यस्य मम

> **विभवानुगता भार्या सुखदु खसुहृद्भवान् ।**
> **सत्य च न परिभ्रष्ट यद्दरिद्रेषु दुर्लभम् ॥ २८ ॥**

मैत्रेय गच्छ रत्नावलीमादाय वसन्तसेनाया[4] सकाशम् । वक्तव्या च सा मद्वचनात् । यत्खल्वस्माभि सुवर्णभाण्डमात्मीयमिति[5] कृत्वा विस्रम्भाद्द्यूते हारितम् । तस्य कृते गृह्यतामिय रत्नावलीति ।

---

१ पौरत्थिआहि० (पौरस्त्याभि०) २ अज्ज अह ३ गहि०
४ सेनागृहम्. ५ अस्मदीय

WIFE—Sir, my bow to you! Sir, just turn your face towards the east

VID —Lady, here I have turned my face towards the east

WIFE—Sir, take this

VID —What may this be ?

WIFE—I had observed a fast on Ratnashashthi day For that I had to bestow a gift on a Brahmana, in accordance with my position ( *lit* riches ) But no Brahmana was yet given a gift, so you should accept this jewel necklace ( from me ) on his account

VID —( *Receiving* ) God bless you! (Now) I will go and tell (this) to my dear friend ( Charudatta )

WIFE—Sir Maitreya, but ( take care ) you do not put me to shame thereby! ( *Exit* )

VID —(*With wonder*) Oh! What a nobility of mind she shows!

CHAR —How now! Maitreya yet tarries I hope he won't do anything rash in his (present) distracted condition Maitreya! Maitreya!

VID —( *Approaching* ) Here I am. Take this (*Shows the jewel necklace* )

CHAR —What's this ?

VID —Sir, this is (what I would describe as) the fruit of your having married a worthy wife!

CHAR —Alas! Even my wife takes pity on me! Ah! Now I am truly a poor man!

I, having lost my money through my own (bad) luck, am now shown pity by my wife's ( *i e* my wife has given me ) money! Through (the absence of) money, a man becomes a woman, and she who is a woman becomes a man, also through (the possession of) money! (27)

Or rather, I am not a poor man, I whose

Wife follows me through (the turns of) my fortune, who have a friend in you, (unchanged) in happiness as well as in sorrow, and who have not swerved from truth (*i e* honesty), which is rarely to be found in the poor (28)

Maitreya, go with that jewel necklace to Vasantasena and say to her at my instance—"Kindly accept this jewel necklace in exchange for that golden casket of yours, which we thought to be our own and in that belief lost at gambling."

**विदूषकः**—मा तावदखादितस्याभुक्तस्याल्पमूल्यस्य चौरैरपहृतस्य कारणाच्चतुःसमुद्रसारभूता रत्नावली दीयते। (मा दाव अक्खाइदस्स अभुत्तस्स अप्पमूल्लस्स चोरेहिं अवहृदस्स कारणादो चदुस्समुद्दसारभूदा रअणावली दीअदि।)

**चारुदत्तः**—वयस्य मा मैवम्।

> यं समालम्ब्य विश्वासं न्यासोऽस्मासु तया कृतः।
> तस्यैतन्महतो मूल्यं प्रत्ययस्यैव दीयते॥ २९॥

तद्वयस्य अस्मच्छरीरस्पृष्टिकया शापितोऽसि नैनामग्राहयित्वाऽत्रागन्तव्यम्। वर्धमानक[1]।

> एताभिरिष्टकाभिः संधिः क्रियतां सुसंहतः शीघ्रम्।
> परिवादबहुल[2]दोषान्न यस्य[3] रक्षां परिहरामि॥ ३०॥

वयस्य मैत्रेय भवताऽप्यकृपणशौण्डीर्यमभिधातव्यम्।

**विदूषकः**—भो दरिद्रः किमकृपणं मन्त्रयते। (भो दलिद्दो किं अकिवणं मन्तेदि।)

**चारुदत्तः**—अदरिद्रोऽस्मि सखे यस्य मम ('विभवानुगता भार्या' (३।२८) इत्यादि पुनः पठति।) तद्गच्छतु भवान्। अहमपि कृतशौचः संध्यामुपासे।

(इति निष्क्रान्ताः सर्वे।)

इति संधिच्छेदो[4] नाम तृतीयोऽङ्कः।

---

वर्तमाना। यद् एतत्त्रितयम्।]॥ २८॥ चतुःसमुद्रेति। चतुःसमुद्राणां रत्नाकराणां सारभूता। यमिति। [यं विश्वासं समालम्ब्य तयाऽस्मासु न्यासः कृतः तस्य महतः प्रत्ययस्य विश्वासस्यैवैतन्मूल्यं दीयते]॥२९॥ [स्पृष्टिकया स्पर्शेन।] एताभिरिति। [संधिः शीघ्रं सुसंहतः सुपूर्णः क्रियताम्। यतः परिवादस्य लोकनिन्दायाः यः बहलः दोषः तस्माद्यस्य रक्षां न परिहरामि उपेक्षे]॥ ३०॥ [अकृपणममन्दं शौण्डीर्यमौदार्यं यत्र तद्यथा तथा।]

इति संधिच्छेदो नाम तृतीयोऽङ्कः।

---

१ वध० वर्ध० २ बहुल. ३ नयस्य, नृपस्य ४ मृच्छकटिकाया स०.

VID.—Don't you give away this jewel-necklace, which is (as it were) the best produce of the four oceans, for the sake of that thing of (comparatively) little value, which was neither swallowed nor enjoyed but was stolen by thieves !

CHAR —Nay, friend, say not so

This price is being paid, (not for that ornament, but) for that high trust, by relying on which she kept that deposit with us (29)

So friend, I adjure you by the touch of my body,—you must not return here without inducing her to accept it. Vardhamanaka !

Quickly fill up the opening wall with these bricks, I do not wish it to remain, for scandal has many evils (30)

Friend Maitreya, you should also address her with (due) dignity and nobility of mind

VID —Friend, can one talk ignobly, even though one may be poor ?

CHAR —Friend, I am not indeed poor, I whose (*—Repeats again the verse, "Wife follows me" &c* ) So you may go now I too will purify myself and attend to morning prayers
(Exeunt all )

*Thus ends Act III-, styled*
'The Making of a Breach '

## चतुर्थोऽङ्कः ।

( तत प्रविशति चेटी । )

**चेटी**—आज्ञप्ताऽस्मि मात्राऽऽर्याया सकाश गन्तुम् । एषाऽऽर्या चित्रफलकनिषण्णदृष्टिमदनिकया सह किमपि मन्त्रयमाणा तिष्ठति । तद्यावदुपसर्पामि । ( इति परिक्रामति । ) ( आणत्तम्हि अत्ताए अज्जआए[१] सआस गन्तुम् । एसा अज्जआ चित्तफलअणिसण्णदिट्ठी मदणिआए सह किपि मन्तअन्तो चिठ्ठदि । ता जाव उवसप्पामि । )

( तत प्रविशति यथानिर्दिष्टा वसन्तसेना मदनिका च । )

**वसन्तसेना**—हञ्जे मदनिके अपि सुसदृशीय चित्राकृतिरार्यचारुदत्तस्य । ( हञ्जे मदणिए अवि सुसदिसी इअ चित्ताकिदी अज्जचारुदत्तस्स । )

**मदनिका**—सुसदृशी । ( सुसदिसी । )

**वसन्तसेना**—कथ त्व जानासि । ( कध तुम जाणासि । )

**मदनिका**—येनार्याया सुस्निग्धा दृष्टिरनुलग्ना । ( जेण अज्जआए सुसिणिद्धा दिट्ठी अनुलग्गा । )

**वसन्तसेना**—हञ्जे कि वेशवासदाक्षिण्येन मदनिके एव भणसि । ( हञ्जे किं वेसवासदाक्खिण्णेण मदणिए एव्व भणासि । )

**मदनिका**—आर्ये कि य एव जनो वेशे प्रतिवसति स एवालीकदक्षिणो भवति । ( अज्जए किं जो ज्जेव जणो वेसे पडिवसदि सो ज्जेव अलीअदक्खिणो भोदि । )

**वसन्तसेना**—हञ्जे नानापुरुषसङ्गेन वेश्याजनोऽलीकदक्षिणो भवति । ( हञ्जे णाणापुरिससङ्गेण वेस्साजणो अलीअदक्खिणो भोदि । )

**मदनिका**—यतस्तावदार्याया दृष्टिरिहाभिरमते हृदय च तस्य कारण कि पृच्छ्यते । ( जदो दाव अज्जआए दिट्ठी इध अभिरमदि हिअअ च तस्स कारण किं पुच्छीअदि । )

---

अथोत्कण्ठिताया प्रियस्य चित्रदर्शनेन विरह विनोदयन्त्या वसन्तसेनाया प्रवेशसूचनार्थमादौ चेटीप्रवेश । वसन्तसेनामात्रा माधवसेनया । चित्रफलके निषण्णा ससक्ता दृष्टिर्यस्या । प्रियप्रतिकृतिदर्शन हि उत्कण्ठिताना विरहविनोदनोपाय । तदुक्तम्—'वियोगावस्थासु प्रियजनसदृक्षानुभवन ततश्चित्र कर्म स्वपनसमये दर्शनमपि ।

---

१ अज्जुआस०.

## ACT IV

( *Then enter a* Maid ).

THE MAID—The mother has asked me to be in attendance upon her ladyship (Vasantasena) Here she is, talking about something with Madanika, her eyes fixed on a painting-board. Well, then, I'll approach her ( *Walks about* )

( *Then enter* Vas , *as described, and* Mad )

VAS —Girl, Madanika, is this portrait a most faithful representation of the worthy Charudatta ?

MAD —It is a most faithful one

VAS —How do you know ?

MAD — Because your eyes are gazing upon it with great fondness

VAS —Girl, Madanika, do you speak thus because of the courtesy bred in you by your residence in the courteans' quarter ?

MAD —My lady, is it (a fact) that every person who lives in the courtesans' quarter is falsely courteous ?

VAS —Girl, courtesans *are* false in their courtesy on account of their coming in contact with various sorts of men

MAD —Since in the first place your ladyship's eyes as well as heart take delight in this (picture), where is the need to ask the reason ?

---

तदङ्गस्पृष्टानामुपगतवता स्पशनमपि प्रतीकार कामव्यथितमनसा कोऽपि कथित ।।' इति । चित्रे निवेशिता आकृति चित्राकृति । वेशो वेश्यावसति तत्र यो वास तेन यद्दाक्षिण्य परच्छन्दानुवृत्तिचातुर्य तेन । 'वेशवासदाक्षिण्येन' इति पाठे वेशाना वेश्याश्रिताना यो वासस्तस्य दाक्षिण्यमिति ल दी । स सर्व एवालीकदक्षिणो मिथ्याप्रियवादी भवति । किमिति शेष ।] यत्र चक्षुर्हृदये लग्ने तत्र कारण किं पर्यालोच्यते । अतिप्रियनामासावल विलम्बेनेत्याशय । [ गृहीतावगुण्ठनमाच्छ दन-महापटाच्छादितम् । 'कर्णीरथ प्रवहणम्' इति कोश । स्त्रीणा स्थितियाग्योऽभित समाछन्नो रथ प्रवहणम् । इति ल० दी० । सुवर्ण दशमासिक तेषां दश-सहस्र तेन लभ्य सुवर्णदशसाहस्रिक ।] सदेशेनेति । मया सदेश कथितो नात्र

वसन्तसेना—हञ्जे[1] सखीजनादुपहसनीयता रक्षामि। ( हञ्जे सहीजणादो उवहसणीअदा रक्खामि। )

मदनिका—आर्ये एव नेदम्। सखीजनचित्तानुवर्त्यबलाजनो भवति। ( अज्जए एव्व णेदम्। सहीजणचित्ताणुवत्ती अबलाजणो ओदि। )

प्रथमा चेटी—( उपसृत्य। ) आर्ये माताऽऽज्ञापयति—'गृहीतावगुण्ठन पक्षद्वारे सज्ज प्रवहणम। तद्गच्छ' इति। (अज्जए अत्ता आणवेदि—'गहिदावगुण्ठण पक्खदुआरए सज्ज पवहणम्। ता गच्छ' त्ति। )

वसन्तसेना—हञ्जे[1] किमार्यचारुदत्तो मा नेष्यति। ( हञ्जे किं अज्जचारुदत्तो म णइस्सदि। )

चेटी—आर्य येन प्रवहणेन सह सुवर्णदशसाहस्रिकोऽलकारोऽनुप्रेषित। (अज्जए जेण पवहणेण सह सुवण्णदससाहस्सिओ अलकारओ अणुप्पेसिदो। )

वसन्तसेना—क पुन स। ( को उण सो। )

चेटी—एष एव राजश्याल सस्थानक। (एसो ज्जेव राअसालो सठाणओ।)

वसन्तसेना—(सक्रोधम्।) अपेहि। मा पुनरेव भणिष्यसि। (अवेहि। मा पुणो एव्व भणिस्ससि।)

चेटी—प्रसीदतु प्रसीदत्वार्या। सदेशेनास्मि प्रेषिता। (पसीददु पसीददु अज्जआ। सन्देसेण म्हि पेसिदा।)

वसन्तसेना—अह सदेशायैव कुप्यामि। (अह सदेसस्स ज्जेव कुप्पामि।)

चेटी—तत्किमिति मातर विज्ञापयिष्यामि। ( ता किंति[2] अत्त विण्णविस्सम्। )

वसन्तसेना—एव विज्ञापयितव्या—यदि मा जीवन्तीमिच्छसि तदेव न पुनरह मात्राऽऽज्ञापयितव्या। ( एव्व विण्णाविदव्वा[3]-जइ म जीअन्ती इच्छसि ता एव्व ण पुणो अह अत्ताए आणविदव्वा। )

चेटी—यथा ते रोचते। ( इति निष्क्रान्ता। ) ( जधा दे रोअदि। )

( प्रविश्य। )

शर्विलक—

दत्त्वा निशाया[4] वचनीयदोष निद्रा च जित्वा नृपतेश्च रक्षान्[5]।
स एष सूर्योदयमन्दरश्मि क्षपाक्षयाच्चन्द्र इवास्मि जात ॥ १ ॥

---

मम दोष इति भाव.। दत्त्वेति। [ निशाया वचनीयदोष चौर्यादिक स्याच्चेन्निशाया एव दोष इत्येवरूप दत्त्वा निद्रा जित्वा अवधय नृपते रक्षान् रक्षापुरुषाश्च जित्वा तद्दृष्टि परिहृत्येत्यर्थः। स एवाह क्षपाक्षयान्निशावसानात् सूर्योदयेन मन्दा रश्मय तेज पराक्रमश्च यस्य स सूर्योदयविगतप्रभ चन्द्र इव जातोऽस्मि।

---

१ चेटि २ किं अत्तअ ३ विण्णवि० ४ निशाया ५ रक्ष्यान्

VAS.—Girl, I wish to avoid incurring the ridicule of my ends

MAD.—It couldn't be so, my lady, for we women always act in accordance with the wishes of our friends' hearts

THE FIRST MAID.—(*Approaching*) Mistress, the mother says—"A veiled (i e closed) carriage is ready (waiting) at the side door, so you should go"

VAS.—Wench, has the noble Charudatta sent for me ?

THE MAID.—Mistress, (it is one) who has sent, along with the carriage, an ornament worth ten thousand gold-pieces

VAS.—But *who* is he ?

THE MAID.—He is the self same King's brother-in law, Samsthanaka

VAS.—(*Angrily*) Get away ! Don't you talk like that again !

THE MAID.—Pardon, mistress, pardon ! I was sent with (such) a message

VAS.—It is the message itself that I am angry with !

THE MAID.—Then what shall I say to the mother ?

VAS.—Say this—"If you wish that I should live, I should never again be asked to do such a thing by mother"

THE MAID.—As you wish (*Exit*)

(*Entering*)

SARVILAKA—

Having cast on the night the slur of censure, having conquered sleep, and having got the better of the King's watchmen, here have I become devoid of lustre (i e power) at sunrise, like the moon at the close of the night (1)

---

उपजातिश्छन्द ]॥ १ ॥ य इति । [य कश्चित् त्वरितगति त्वरया गच्छन्त मा निरीक्षते । तथा च सम्भ्रान्त चकित यथा तथा स्थित द्रुतमुपसर्पति । त सर्वं अन्तरात्मा दूषित सजातशङ्क तुलयति मद्दोषशङ्कितमिव सभावयतीत्यर्थ । मनुष्यो हि स्वदोषै शङ्कितो भवति । अर्थान्तरन्यासोऽलङ्कार । प्रहर्षिणी वृत्तम् ] ॥ २ ॥ परिजनेति । [परिजनकथायामासक्त कश्चिन्नर समुपेक्षित । तस्य गृह न प्रविष्टमित्यर्थ । नारी नाथ यस्य नार्याधिष्ठित पुरुषाभावात् । तद्विवर्जित त्यक्तम् । नरपतिबले नगररक्षिबले समीपमागते । गृहदारुवन्निश्चल स्थितम् । एवप्रायै व्यवसितशतैः निशा दिवसीकृता जाग्रता एव नीता । हरिणी वृत्तम् ]॥ ३ ॥ भवनमिति ।

अपि च ।

यः कश्चिच्चत्वरितगतिं[1] निरीक्षते मां
सम्भ्रान्तं द्रुतमुपसर्पति स्थितं वा ।
तं सर्वं तुलयति दूषितोऽन्तरात्मा[2]
स्वैर्दोषैर्भवति हि शङ्कितो मनुष्यः ॥ २ ॥

मया खलु मदनिकायाः कृते साहसमनुष्ठितम् ।

परिजनकथासक्तः कश्चिन्नरः समुपेक्षितः
क्वचिदपि गृहं नारीनाथं निरीक्ष्य विवर्जितम् ।
नरपतिबले पार्श्वायाते स्थितं गृहदारुव-
द्व्यवसितशतैरेवंप्रायैर्निशा दिवसीकृता ॥ ३ ॥

( इति परिक्रामति )

**वसन्तसेना**—चेटि इमं तावच्चित्रफलकं मम शयनीये स्थापयित्वा तालवृन्तं गृहीत्वा लघ्वागच्छ । (हञ्जे इमं दाव चित्तफलअं मम सअणीए ठाविअ तालवेण्टअं गेण्हिअ लहुं आअच्छ ।)

**मदनिका**—यदार्याऽऽज्ञापयति । (इति फलकं गृहीत्वा निष्क्रान्ता ।) (जं अज्जआ आणवेदि ।)

**शर्विलकः**—इदं वसन्तसेनाया गृहम् । तद्यावत्प्रविशामि । ( प्रविश्य ) क्व नु मया मदनिका द्रष्टव्या ।

( ततः प्रविशति तालवृन्तहस्ता मदनिका । )

**शर्विलकः**—(दृष्ट्वा ।) अये इयं मदनिका ।

मदनमपि गुणैर्विशेषयन्ती रतिरिव मूर्तिमती विभाति येयम् ।
मम हृदयमनङ्गवह्नितप्तं भृशमिव चन्दनशीतलं करोति ॥ ४ ॥

मदनिके ।

**मदनिका**—( दृष्ट्वा । ) आश्चर्यम् । कथं शर्विलकः । शर्विलक स्वागतं ते । कुत्र त्वम् । ( अम्मो । कधं सव्विलओ । सव्विलअ साअदं दे । कहिं तुमम् । )

**शर्विलकः**—कथयिष्यामि ।

( इति सानुरागमन्योन्यं पश्यतः ।)

---

[ गुणैः सौन्दर्यादिभिर्मदनमपि विशेषयन्ती सातिशयं कुर्वती । येयमनङ्गवह्नितप्तं कामानलसंतप्तं मे हृदयं भृशं चन्दनशीतलमिव करोति । पुष्पिताग्रा छन्दः ] ॥ ४ ॥
[ अभुजिष्यामन्येन केनाप्यभोग्याम् । कलत्रवत्स्वगृहस्थां स्वाधीनामित्यर्थः । यद्वा

---

१ गति २ तान्तरात्मा. ३ मदनिके मद०

Moreover—

Whoever stares closely at me as I walk rapidly, or approaches me quickly as I stand in a state of distraction,—my suspicious mind internally treats all such persons equally, for it is one's own faults that fill a man with apprehension (2)

It was, indeed, for Madanika's sake that I undertook a risky adventure

In some place I had to let go a man who was busy talking to his servants, in another I passed by a house seeing that it was inhabited by women (only), and (sometimes) I had to stand like a wooden pillar of a house when a posse of the King's watchmen came near me By hundreds of acts, mostly like these, I turned the night into day (3)

( *Walks about* )

VAS —Girl, just take this painting-board and place it on my bed, then come back here quickly with a fan

MAD —As the mistress commands. ( *Exit with the board* )

SAR —Here's Vasantasena's house. Well, then, let me go in ( *Entering* ) Where, possibly, can I find Madanika ?

( *Then enter* MAD *with a fan in her hand* )

SAR —( *Seeing* ) Ah ! Here's Madanika !—

—This is she, who, excelling even Madana by the excellence ( of her charms ), looks as if she were Rati herself in bodily form She renders my heart, heated by the fire of Love, exceedingly cooled as it were with sandal paste (4)

O Madanika !

MAD —( *Seeing* ) Ah ! What ! Here's Sarvilaka ! You are welcome, Sarvilaka ! What brings you here ?

SAR —I'll just tell you

( *They lovingly cast glances at each other* )

---

अकिंकरीम् । स्वतन्त्रामित्यर्थः । ] स्वाधीनामिति यावत । मम छन्दो ममाभिलाष । **दारिद्र्येणेति।** दारिद्र्योपहतेन तथाऽपि त्वयि स्नेहस्त्वत्स्नेहस्तेनानुगतेन । अनुरागवतेत्यर्थः । साहस चौर्यरूपम् ॥ ५ ॥ साहसे जीवितानपेक्षकर्मणि । न खल्वाचरितम् । अपि त्वाचरितमेव । **नो मुष्णामीति** । [ धनार्थी अहं विप्रस्व ब्राह्मणस्य स्वस्वामिक द्रव्यम् । अथो अथ वा यज्ञार्थमभ्युद्धृत पृथङ्निहित काञ्चन

**वसन्तसेना**— चिरयति मदनिका । तत्कुत्र नु खलु सा । (गवाक्षकेन दृष्ट्वा ।) कथमेषा केनापि पुरुषकेण सह मन्त्रयमाणा तिष्ठति । यथाऽतिस्निग्धया निश्चल-दृष्ट्याऽऽपिबन्तीवैत निध्यायति तथा तर्कयामि एष स जन एतामिच्छत्यभुजिष्यां कर्तुम् । तद्रमतां रमताम् । मा कस्यापि प्रीतिच्छेदो भवतु । न खल्वाकारयिष्यामि । (चिरअदि मदणिआ । ता कहिं णु क्खु सा । कध एसा केनावि पुरिसकेण सह मन्तअन्ती चिट्ठदि । जधा अदिसिणिद्धाए णिच्चलदिट्ठीए आपिबन्ती विअ एदं निज्झाअदि तधा तक्केमि एसो सो जणो एदं इच्छदि अभुजिस्सं कादुम् । ता रमदु रमदु । मा कस्सावि पीदिच्छेदो भोदु । ण क्खु सद्दाविस्सम् ।)

**मदनिका**—शर्विलक कथय । (सव्विलअ कधेहि ।)

**शर्विलकः**— (साशङ्कं[1] दिशोऽवलोकयति ।)

**मदनिका**—शर्विलक किं न्विन्दम् । सशङ्क इव लक्ष्यसे । (सव्विअल किं ण्णेदम् । ससङ्को विअ लक्खीअसि ।)

**शर्विलकः**—वक्ष्य त्वां किंचिद्रहस्यम् । तद्विविक्तमिदम् ।

**मदनिका**—अथ किम् । (अध इ ।)

**वसन्तसेना**—कथं परमरहस्यम् । तन्न श्रोष्यामि । (कधं परमरहस्सम् । ता ण सुणिस्सम् ।)

**शर्विलकः**—मदनिके किं वसन्तसेना मोक्ष्यति त्वां निष्क्रयेण ।

**वसन्तसेना**—कथं मम सम्बन्धिनी कथा । तच्छ्रोष्याम्यनेन गवाक्षेणापवारित-शरीरा । (कधं मम सम्बन्धिणी कधा । ता सुणिस्सं इमिणा गवक्खेण ओवारिदसरीरा ।)

**मदनिका**—शर्विलक भणिता मयाऽऽर्या । तदा भणति—यदि मम च्छन्द-स्तदा विनाऽर्थं सर्वं परिजनमभुजिष्यं करिष्यामि । अथ शर्विलक कुतस्त एतावा-न्विभवः येन मामार्यासकाशान्मोचयिष्यसि । (सव्विलअ भणिदा मए अज्जआ । तदो भणादि –जइ मम छन्दो तदा विणा अत्थं सव्वं परिजणं अभुजिस्सं करइस्सम् । अध सव्विलअ कुदो दे एत्तिओ विहवो जेण मं अज्जआसआसादो मोआइस्ससि ।)

**शर्विलकः**—

> **दारिद्र्येणाभिभूतेन त्वत्स्नेहानुगतेन च ।**
> **अद्य रात्रौ मया भीरु त्वदर्थे साहसं कृतम् ॥ ५ ॥**

**वसन्तसेना**—प्रसन्नाऽस्याकृतिः । साहसकर्मतया पुनरुद्वेजनीया । (पसण्णा से आकिदी । साहसकम्मदाए उण उव्वेअणीआ ।)

---

[1] सशङ्कम्.

**मदनिका**—शर्विलक स्त्रीकल्यवर्तस्य कारणनोभयमपि सशये विनिक्षिप्तम ।
(सव्विलअ इत्थीकल्लवत्तस्स कारणेण उहअ पि ससए विणिक्खित्तम् ।)

**शर्विलक**—किं किम् ।

**मदनिका**—शरीर चारित्र च । (सरीर चारित्त च ।)

**शर्विलक** —अपण्डिते, साहसे श्री प्रतिवसति ।

**मदनिका**—शर्विलक अखण्डितचारित्रोऽसि । तन्न खलु त्वया मम कारणात्साहस कुर्वताऽत्यन्तविरुद्धमाचरितम् । ( सव्विलअ अखण्डितचारित्तो सि । ता ण खु ते मम कारणादो साहस करन्तेण अच्चन्तविरुद्ध आचरिदम् ।)

**शर्विलक** —

**नो मुष्णाम्यबला विभूषणवतीं फुल्लामिवाहृ लतां**
**विप्रस्व न हरामि काञ्चनमथो यज्ञार्थमभ्युद्धृतम् ।**
**धात्र्युत्सङ्गगत हरामि न तथा बाल धनार्थी क्वचि-**
**त्कार्याकार्यविचारिणी मम मतिश्चौर्येऽपि नित्य स्थिता ॥ ६ ॥**

तद्विज्ञाप्यता वसन्तसेना—

**अय तव शरीरस्य प्रमाणादिव निर्मित ।**
**अप्रकाशो[1] ह्यलकारो मत्स्नेहाद्धार्यतामिति ॥ ७ ॥**

**मदनिका**—शर्विलक अप्रकाशोऽलकार । अय च जन इति द्वयमपि न युज्यते । तदुपनय तावत् । पश्याम्येनमलंकारम् । (सव्विलअ अप्पकाशो अलकारओ[2] । अअ च जणो त्ति दुवेवि ण जुज्जदि । ता उवणेहि दाव । पेक्खामि एद अलकारअम् ।

**शर्विलक** —इदमलकरणम् । (इति साशङ्क समर्पयति ।)

**मदनिका**—( निरूप्य । ) दृष्टपूर्व इवायमलकार । तद्भण कुतस्त एष । ( दिट्ठपुरुव्वो विअ अअ अलकारओ । ता भणेहि कुदो दे एसो ।

**शर्विलक** —मदनिके किं तवानेन । गृह्यताम् ।

**मदनिका**—( सरोषम् । ) यदि मे प्रत्ययं न गच्छसि तत्किंनिमित्त मा निष्क्रीणासि । (जइ मे पच्चअ ण गच्छसि ता किंणिमित्त म णिक्किणासि ।)

**शर्विलक** —अयि प्रभाते मया श्रुत श्रेष्ठिचत्वरे यथा सार्थवाहस्य चारुदत्तस्येति ।

(वसन्तसेना मदनिका च मूर्छां नाटयत ।)

---

मलकारधारणमसभाव्यमिति भाव । ‘ सप्रमाणव्यवहारकारिजनशिरोमणि ’ इति ल दी ] । अपिरनुनये । ‘अय जन शर्विलक ’ इति प्राचीनटीका । तन्न युद्ध्यते । वेश्यात्वे वसन्तसेनाया निभृत सगतमित्यभिप्राय । **विषादेति** । [ विषादेन खेदेन स्रस्त

---

१ अप्रकाश्य २ कारओ च त्ति दुवे

MAD —Sarvilaka, for the sake of the trifling thing (called) woman, you have (now) placed both these in jeopardy—

SAR —What two things ?

MAD —Your body ( *i e* life), and your character

SAR —You ignorant girl, fortune abides in adventure (favours the brave)

MAD —Sarvilaka, you have hitherto been of blameless (*i e* uninjured) character So (may I hope that) when for my sake you committed that crime, you did nothing which was very objectionable ?

SAR —

I do not rob a woman with ornaments on, looking like a creeper in blossom, I do not steal a Brahmana's wealth, nor gold collected for the purpose of a sacrifice, so, too, I never, during my search after money, rob a child lying on a nurse's lap (Thus) my mind has always been given to the discrimination of what is right and wrong, even in the act of committing a theft (6)

So please request Vasantasena (in these words) —

" Please wear in secret, out of love for me, this ornament which looks as if it had been ( specially ) manufactured to the (exact) measure of your body " (7)

MAD —Sarvilaka, an ornament (to be worn) in secret, and this person (i e the courtesan Vasantasena to wear it)—both these are inconsistent. So bring it to me, please, I shall have a look at the ornament

SAR —Here's the ornament (*Gives it to her, hesitatingly*),

MAD —( *Inspecting it* ) This ornament looks like one seen before. So tell me where you got it from ?

SAR —Madanika, what have you to do with it ? Take it.

MAD —( *Angrily* ) If you don't trust me, then why do you want to ransom me ?

SAR —Well, I heard it in the morning in the merchants' square that it belonged to the merchant Charudatta

( *Both* Vas *and* Mad *act swooning* )

शर्विलक —मदनिके समाश्वसिहि[1] । किमिदानीं त्वं

विषादत्रस्तसर्वाङ्गी सम्भ्रमभ्रान्तलोचना ।
नीयमानाऽभुजिष्यात्वं[2] कम्पसे नानुकम्पसे ॥ ८ ॥

मदनिका—(समाश्वस्य ।) साहसिक न खलु त्वया मम कारणादिदमकार्यं कुर्वता तस्मिन्गेहे कोऽपि व्यापादित परिक्षतो वा । (साहसिअ ण क्खु तुए मम कारणादो इमं अकज्जं करन्तेण तस्सिं गेहे कोवि वावादिदो परिक्खदो वा । )

शर्विलक —मदनिके भीते सुप्ते न शर्विलक प्रहरति । तन्मया न कश्चिद् व्यापादितो नापि परिक्षत ।

मदनिका—सत्यम् । (सच्चम् ।)

शर्विलक —सत्यम् ।

वसन्तसेना—(संज्ञां लब्ध्वा ।) आश्चर्यम् । प्रत्युपजीविताऽस्मि । (अम्महे । पच्चुवजीविदम्हि ।)

मदनिका—प्रियम् । (पिअम् ।)

शर्विलक —(सेर्ष्यम् ।) मदनिके किं नाम प्रियमिति ।

त्वत्स्नेहबद्धहृदयो हि करोम्यकार्यं
सद्वृत्तपूर्वपुरुषेऽपि कुले प्रसूत ।
रक्षामि[3] मन्मथविपन्नगुणोऽपि[4] मान
मित्रं च मां व्यपदिशस्यपरं च यासि ॥ ९ ॥

(साकूतम् ।)

इह सर्वस्वफलिन कुलपुत्रमहाद्रुमा ।
निष्फलत्वमलं यान्ति वेश्याविहगभक्षिता ॥ १० ॥

अयं च सुरतज्वाल कामाग्नि प्रणयेन्धन ।
नराणां यत्र हूयन्ते यौवनानि धनानि च ॥ ११ ॥

वसन्तसेना—( सस्मितम् । ) अहो अस्यास्थान आवेग । (अहो से अत्थाणे आवेओ । )

शर्विलक —सर्वथा—

अपण्डितास्ते पुरुषा मता मे ये स्त्रीषु च श्रीषु च विश्वसन्ति ।
श्रियो हि कुर्वन्ति तथैव नार्यो भुजङ्गकन्यापरिसर्पणानि ॥ १२ ॥

---

गलितं सर्वमङ्गं यस्य सा । सम्भ्रमेण भयेन चित्तवृत्त्यनवस्थानेन वा भ्रान्ते लोचने यस्या सा । अभुजिष्यात्वमदासीत्वम् । नीयमाना भुजिष्यात्वमिति वा पदच्छेद । ]

---

१ समा० समा०, २ माना भुजि०, भुजिष्या त्वं ३ वक्ष्यामि ४ अद्य.

SAR —Madanika, compose yourself! Why do you now,

Quake and do not show compassion to me, when you are being freed from bondage, (you), with all your limbs drooping in despair, and your eyes rolling in agitation!

MAD —(*Recovering*) You rash fellow, I hope you didn't kill or wound anybody in that house, when you committed this foul deed for my sake?

SAR —O Madanika, Sarvilaka strikes not a person who is afraid, nor one who is asleep. So (you may rest assured that) I neither killed nor wounded anybody.

MAD —Really

SAR —Really

VAS —(*Regaining consciousness*) Wonderful! I am (now) restored to life again!

MAD.—It is pleasant news to me!

SAR —(*Jealously*) Madanika, what do you mean by saying it is pleasant news?

Although born in a family with its ancestors all men of righteous conduct, still I committed a sinful deed, my heart being dominated by love for you. But, although my virtues have perished through my passion, still I do preserve my (sense of) honour. You call me a friend, and yet at the same time you run after another (lover)! (9)

(*Significantly*)

In this world, the fine trees in the form of nobly-born youths having their whole wealth for their fruit, are completely divested of their fruit when devoured by the birds in the form of courtesans (10)

And this fire of Love has amorous sports for its flames and affection for its fuel, wherein are offered as oblations men's youths and riches (11)

VAS —(*smilingly*) Oh! His excitement is quite out of place (ungrounded)

SAR —In every way,

Senseless are those men, I esteem, who trust in women or in riches, for riches as well as women move about as tortuously as female snakes (12)

स्त्रीषु न राग कार्यो रक्त पुरुष स्त्रिय परिभवन्ति ।
रक्तैव हि रन्तव्या विरक्तभावा तु[1] हातव्या ॥ १३ ॥

सुष्ठु खल्विदमुच्यते—

एता हसन्ति च रुदन्ति च वित्तहेतो-
र्विश्वासयन्ति पुरुष न तु[2] विश्वसन्ति ।
तस्मान्नरेण कुलशीलसमन्वितेन ।
वेश्या श्मशानसुमना[3] इव वर्जनीया ॥ १४ ॥

अपि च ।

समुद्रवीचीव चलस्वभावा सध्याभ्रलेखेव मुहूर्तरागा ।
स्त्रियो हृतार्था[4] पुरुष निरर्थं [5]निष्पीडितालक्तकवत्त्यजन्ति ॥ १५ ॥

स्त्रियो नाम चपला —

अन्य मनुष्य हृदयेन कृत्वा [6]अन्य ततो दृष्टिभिराह्वयन्ति[7] ।
अन्यत्र मुञ्चन्ति मदप्रसेकमन्य शरीरेण च कामयन्ते ॥ १६ ॥

सूक्त खलु कस्यापि —

न पर्वताग्रे नलिनी प्ररोहृति न गर्दभा वाजिधुर वहन्ति ।
यवा प्रकीर्णा न भवन्ति शालयो न वेशजाता[8] शुचयस्तथाऽङ्गना ॥ १७ ॥

आ दुरात्मन् चारुदत्तहतक अय न भवसि । (इति कतिचित्पदानि गच्छति[9] । )

**मदनिका**—( अञ्चले गृहीत्वा । ) अयि असबद्धभाषक असभावनीये कुप्यसि । (अइ असबद्धभासअ असभावणीए कुप्पसि । )

**शर्विलक** —कथमसभावनीय नाम ।

**मदनिका**—एष खल्वलकार आर्यासबन्धी । ( एसो क्खु अलकारओ अज्ज-आकेरओ । )

**शर्विलक** —तत किम् ।

**मदनिका**—स च तस्यार्यस्य हस्ते विनिक्षिप्त । ( स च तस्स अज्जस्स हत्थे विणिक्खित्तो[10] । )

**शर्विलक** — किमर्थम् ।

**मदनिका**—( कर्णे । ) एवमिव । ( एव्व विअ । )

---

॥ ८ ॥ स्वविति । [ सदवृत्त येषा ते सद्वृत्ता । सद्वत्ता पूर्वपुरुषा यस्मिस्तस्मिन्कुले प्रसूतोऽप्यह त्वत्स्नेहबद्धहृदयोऽकार्यं करोमि । कामातुरोऽन्यस्य मान न रक्षति । अह तु कामातुरोऽपि रक्षामीत्याह । व्यपदिशसि बाह्यतो दर्शयसि । ] मन्मथेन विपन्नो गुणो

---

१ नु २ च ३ स्मशान ४ हितार्था ५ निपी० ६ त्वन्य ७ आह्वयन्त्य . ८ याता ९ ददाति १० णिक्खित्तो

( Undue ) love should not be shown to women, women disrespect a man who is (over–) attached to them Only that woman should be loved who is herself in love, but one whose heart is cold should be let alone (13)

It is indeed truly observed

" These women ( harlots ) laugh, and weep too, for money, they make a man confide in them, but themselves never trust him Therefore, a man of high birth and good character should avoid courtesans, like, flowers (*Or*, jasmines ) in cremation-grounds " (14)

" Of an unstable nature like the waves of the ocean, and exhibiting *raga* ( passion—redness ) for a short time like the ridges of clouds in the evening, women, having taken a man's money, abandon him, when he is penniless, like ( a ball of ) *alaktaka* ( red lac, ) with all its colour squeezed out " ( 15 )

Indeed women, who are fickle,

Having fixed upon one man in their heart, invite another by their glances, they pour an effusion of joy ( *or*, intoxicating caresses ) on a third one, while they carnally desire quite another still ( 16 )

Indeed, it has been truly said by some one that—

" The lotus-plant grows not on mountain-top, asses bear not the yoke of horses, nor do grains of barley, when sown, yield a crop of rice, ( and ) similarly, women born in the courtesans' quarter can never be pure " (17)

O you villain, accursed Charudatta ! Here you cease to exist ! —( *Walks a few steps* )

MAD —( *Catching him by the hem of his cloak* ) You utterer of nonsense, you have got angry at what is inconceivable

SAR —How inconceivable, pray ?

MAD —This ornament, indeed, belongs to her ladyship

SAR —What of that ?

MAD —And it was kept as a deposit with that gentleman.

SAR – For what purpose ?

MAD —( *In his ear* ) It was like this

---

यस्य । ईदृशोऽपि देह रक्षामि । मदनिकार्थचौर्याहरणेन हीनगुणत्व व्यक्तम् । [" मन्मथेत्यादिना देहमिति पाठे ध्वनि । देह स्वीय रक्षामि कामपीडितोऽप्यहमिति

**शर्विलक**—( सवैलक्ष्यम् । ) भो कष्टम् ।

> **छायार्थं[1] ग्रीष्मसतप्तो यानेवाह समाश्रित ।**
> **अजानता मया सैव पत्रै शाखा वियोजिता ॥ १८ ॥**

**वसन्तसेना**—कथमेषोऽपि सतप्यत एव । तदजानतैतेनैवमनुष्ठितम् । (कधं एसो वि सतप्पदि ज्जेव । ता अजाणन्तेण एदिणा एव्व अणुचिट्ठिदम् ।)

**शर्विलक**—मदनिके किमिदानी युक्तम् ।

**मदनिका**—अत्र त्वमेव पण्डित । (इत्थ तुम ज्जेव पण्डिओ ।)

**शर्विलक**—नैवम् । पश्य ।

> **स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिता ।**
> **पुरुषाणा तु पाण्डित्य [2]शास्त्रैरेवोपदिश्यते ॥ १९ ॥**

**मदनिका**—शर्विलक यदि मम वचन श्रूयते तदा तस्यैव महानुभावस्य प्रतिनिर्यातय । (सव्विलअ जइ मम वअण सुणीअदि ता तस्स ज्जेव महाणुभावस्स पडिणिज्जादेहि ।)

**शर्विलक**—मदनिके यद्यसौ राजकुले मा कथयति[3] ।

**मदनिका**—न चन्द्रादातपो भवनि । (ण चन्दादो आदवो होदि ।)

**वसन्तसेना**—साधु मदनिके साधु । (साहु मदणिए साहु ।)

**शर्विलक**—मदनिके ।

> **न खलु मम विषाद साहसेऽस्मिन्भय वा**
> **कथयसि हि किमर्थं तस्य साधोर्गुणास्त्वम् ।**
> **जनयति मम वेद[4] कुत्सित कर्म लज्जा**
> **नृपतिरिह शठाना मादृशा किं नु[5] कुर्यात् ॥ २० ॥**

तथाऽपि नीतिविरुद्धमेतत् । अन्य उपायश्चिन्त्यताम् ।

---

वाच्यार्थ । परकीयमपि देह रक्षामि नो चेत्प्रहरेयमिति व्यङ्ग्यम् " इति ल दी ]॥ ९ ॥ [परपुरुषानुरक्ता मदनिकेति शङ्कमान शर्विलक वेश्याजन निन्दति- **इहेति** । इह अस्मिञ्जगति सर्वाणि स्वानि धनान्येव फलानि सन्त्येषा ते सर्वस्व- **फलिन** । 'अत इनिठनौ' इति मत्वर्थे इनि । कुलपुत्रा एव महाद्रुमास्ते वेश्या एव विहगास्तैर्भक्षिता अल निष्फलत्व यान्ति । हृतसर्वस्वा भवन्तीति भाव । समस्तवस्तु- विषय सावयव रूपकमलकार ] ॥ १० ॥ **अयमिति** । [ अय कामरूपाग्नि सुरतमेव ज्वाला यस्य तथा । प्रणयोऽनुराग एव इन्धन यस्य तादृश अस्ति । यत्र यस्मिन्नराणा यौवनानि धनानि च हूयन्ते । 'अत्र विशेषणयो समस्त व्यस्त विशेषे सावयवरूप- मलकार ' इति ल० दी० ] ॥ ११ ॥ [ अस्थाने अयुक्ते अकारणे इति यावत् ।

---

१ छायार्थी २ शास्त्रेणैव ३ कथयिष्यति. ४ चेद ५ न.

SAR —( *With shame* ) Ah ! Alas !

That branch ( of a tree ), to which I had resorted for shade when suffering from summer's heat,—that very branch has been despoiled of its foliage by me, in my ignorance ( 18 )

VAS —How now ! Even he is pained ! So he must have done it in ignorance

SAR —O Madanika, what is now proper ( to be done ) ?

MAD —As to that matter you yourself are clever enough ( to know )

SAR —Nay, say not so See

These women, as is well known, are forsooth clever by their very nature, while cleverness has to be taught to men by means of the Sastras ( 19 )

MAD —Sarvilaka, if you will listen to ( *i e* follow ) my advice, then restore this to that same high personage

SAR —Madanika, what if he were to inform against me at the royal palace ?

MAD – Heat comes not from the Moon

VAS —Well said, Madanika, well said !

SAR —O Madanika,

For this my adventure I do not indeed feel sorrow nor fear — Why do you then narrate to me that good man's virtues ?—Does this ignoble deed produce any shame in me ?— And what can the king do to rogues like me ? ( 20 )

Still, this is against policy ( So ) think of ( some ) other way

---

कामप्रतिघाते क्रोध शक्तस्याशक्तस्य तु विषाद इति शास्त्रात्क्रुद्ध शर्विलको वेश्याजन निर्भर्त्स्य स्त्रीमात्रमिदानी निर्भर्त्सयति । इति ल० दी० । ] अपण्डिता इति । [ भुजङ्गकन्या भुजङ्गयस्तासामिव परिसर्पणानि वक्राणि त्वरितानि च चलनानि । उपजाति छन्द ॥ १२ ॥ स्त्रीष्विति । राग प्रीति । परिभवन्ति विगणयन्ति । विरक्तभावा स्नेहशून्यान्त करणवृत्ति । हातव्या त्याज्या । आर्या छन्द ॥ १३ ॥ स्त्रीजन निन्दन्नेव विशेषेण वेश्या निन्दति ] एता इति । [—श्मशाने सुमना पुष्पाणि । जात्यैकवचनम् । ] सुमनस पुष्पवृत्तेरेकवचनान्ततापि । यथा–'अप्रत्याख्येये दधिसुमनसी' इति [ प्राचीनप्रयोगात् । अथ वा ] 'सुमना मालती लता' 'सुमना मालतीजाति' इत्यमरोक्ते । ता यथा श्मशानवर्तिनी न कोऽपि स्पृशति तद्वत् । वर्जनीया । क्रियादीपकोपमयो ससृष्टि । ] वचनभेदेऽपि सतामनुद्वेजकत्वाददुष्टत्वमुपमाया ।

**मदनिका**—सोऽयमपर उपाय । (सो अअ अवरो उवाओ ।)

**वसन्तसेना**—क खल्वपर उपायो भविष्यति । (को क्खु अवरो उवाओ हुविस्सदि ।)

**मदनिका**—तस्यैवार्यस्य सबन्धी भूत्वैतमलकारमार्याया उपनय । (तस्स ज्जेव अज्जस्स केरओ भविअ एद अलकारअ अज्जआए उवणेहि ।)

**शर्विलक**—एव कृते किं भवति ।

**मदनिका**—त्व तावदचौर सोऽप्यार्योऽनृण । आर्यया स्वकोऽलकार उपगतो भवति । (तुम दाव अचोरो सो वि अज्जो अरिणो । अज्जआए सक अलकारअ उवगद भोदि ।)

**शर्विलक**—नन्वतिसाहसमेतत् ।

**मदनिका**—अयि उपनय । अन्यथाऽतिसाहसम् । ( अइ उवणेहि । अण्णधा अदिसाहसम् । )

**वसन्तसेना**—साधु मदनिके साधु । अभुजिष्ययेव मन्त्रितम् । (साहु मदणिए साहु । अभुजिस्साए विअ मन्तिदम् ।)

**शर्विलक**—

> **मयाऽऽप्ता महती बुद्धिर्भवतीमनुगच्छता ।**
> **निशाया नष्टचन्द्रायां दुर्लभो मार्गदर्शक** ।। २१ ।।

**मदनिका**—तेन हि त्वमस्मिन्कामदेवगेहे मुहूर्तक तिष्ठ यावदार्यायै तवागमन निवेदयामि । ( तेण[1] हि तुम इमस्सि कामदेवगेहे मुहुत्तअ चिट्ठ जाव अज्जआए तुह आगमण णिवेदेमि ।)

**शर्विलक**—एव भवतु ।

**मदनिका**—(उपसृत्य ।) आर्ये एष खलु चारुदत्तस्य सकाशाद्ब्राह्मण आगत । (अज्जए एसो क्खु चारुदत्तस्स सआसादो बम्हणो आअदो ।)

**वसन्तसेना**—हञ्जे तस्य सबन्धीति कथ त्व जानासि । (हञ्जे तस्स केरअ त्ति कध तुम जाणासि ।)

**मदनिका**—आर्ये आत्मसबन्धिनमपि न जानामि । (अज्जए अत्तणकेरअ वि ण जाणामि ।)

**वसन्तसेना**—( स्वगत सशिरकम्प विहस्य । ) युज्यते । ( प्रकाशम् । ) प्रविशतु । (जुज्जदि । पविसदु ।)

**मदनिका**—यदार्याऽऽज्ञापयति । ( उपगम्य । ) प्रविशतु शर्विलक । ( ज अज्जआ आणवेदि । पविसदु सव्विलओ ।)

---

१ तेण तुम

MAD —Then here's another way—

VAS —What may that other way possibly be ?

MAD —Be a person connected with that same gentleman, and take this ornament to her ladyship

SAR —If I do so, what would come of it ?

MAD —In the first place, you will be no thief, while that gentleman, too, will be out of debt, and her ladyship would get back her own ornament

SAR —Why, this is very risky !

MAD —My dear fellow, take it to her, if you don't, *that* would be very risky !

VAS —Noble, Madanika, noble ! You have spoken like a gentlewoman ( *lit* one who is not a slave ) !

SAR —

By following you, I have obtained excellent wisdom When at night the moon is not visible, it is hard to find a guide ( who would point out the way ) (21)

MAD —Then please wait for a short while in this Cupid's temple, while I shall announce your arrival to her ladyship

SAR —So be it !

MAD —( *Approaching* ) Lady, here has come a Brahmana from Charudatta

VAS --Girl, how do you know that he belongs to Charudatta ?

MAD —Lady, do I not know my own connexions ?

VAS —( *To herself, shaking her head and smiling* ) Properly said ! ( *Aloud* ) Let him come in

MAD —As your ladyship commands ( *Approaching* ) Sarvilaka, you may come in

---

वसन्ततिलक वृत्तम् ।। १४ ।। [ समुद्रवीचीवेति । वीची तरङ्ग । मुहूर्त राग अनुराग रक्तिमा च यासा यस्या च । निरर्थ निर्द्रव्यम् । उपजातिर्वृत्तम् ।। १५ ।। चपला चञ्चला । चपला विद्युत एवेति रूपकध्वनि । अन्यमिति । हृदयेन कृत्वा अभिसधाय। तस्मिन्मनो निवेशयेति यावत् । मदप्रसेक आनन्दसदोह वीर्यसिञ्चन च । क्रियादीपकम् । इन्द्रवज्रा वृत्तम् ।। १६ ।। न पर्वतेति । नलिनी गभीरनीरोद्भवा कमलिनी । वाजिन धुर वाजिधुरमश्ववाह्या धुरमित्यर्थ । अत्र ल० दी०–पद्य प्राचीनम् । अत एवोक्त सूक्त कस्यापीति । विलक्षणमिद छन्द । प्रथमपादे द्वादशा-

**शर्विलक**—(उपसृत्य । सवैलक्ष्यम् ।) स्वस्ति भवत्यै ।

**वसन्तसेना**—आर्य वन्दे । उपविशत्वार्य । (अज्ज वन्दामि । उवविसदु अज्जो ।)

**शर्विलक**—सार्थवाहस्त्वा विज्ञापयति—जर्जरत्वाद्गृहस्य दूरक्ष्यमिद भाण्डम् । तद्गृह्यताम् । (इति मदनिकाया समर्प्य प्रस्थित ।)

**वसन्तसेना**—आर्य ममापि तावत्प्रतिसदेश तत्रार्यो नयतु । (अज्ज ममावि दाव पडिसदेस तहिं अज्जो णेदु ।)

**शर्विलक**—(स्वगतम् ।) कस्तत्र यास्यति । (प्रकाशम् ।) क प्रतिसदेश ।

**वसन्तसेना**—प्रतीच्छत्वार्यो मदनिकाम् । (पडिच्छदु अज्जो मदणिअम् ।)

**शर्विलक**—भवति न खल्ववगच्छामि ।

**वसन्तसेना**—अहमवगच्छामि । (अह अवगच्छामि ।)

**शर्विलक**—कथमिव ।

**वसन्तसेना**—अहमार्यचारुदत्तेन भणिता—य इममलकारक समर्पयिष्यति तस्य त्वया मदनिका दातव्या । तत्स एवैता ते ददातीत्येवमार्येणावगन्तव्यम् । (अहं अज्जचारुदत्तेण भणिदा—जो इम अलकारअ समप्पइस्सदि तस्स तुए मदणिआ दादव्वा । ता सो ज्जेव एद दे देदित्ति एव्व अज्जेण अवगच्छिदव्वम् ।)

**शर्विलक**—(स्वगतम् ।) अये विज्ञातोऽहमनया । (प्रकाशम् ।) साधु आर्यचारुदत्त साधु ।

> **गुणेष्वेव हि कर्तव्य प्रयत्न पुरुषै सदा ।**
> **[1]गुणैर्युक्तो दरिद्रोऽपि नेश्वरैरगुणै सम ॥ २२ ॥**

अपि च ।

> **गुणेषु यत्न पुरुषेण कार्यो न किञ्चिदप्राप्यतम गुणानाम् ।**
> **गुणप्रकर्षादुडुपेन [2]शभोरलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥ २३ ॥**

**वसन्तसेना**—कोऽत्र प्रवहणिक । (को एत्थ पवहणिओ ।)

(प्रविश्य सप्रवहण ।)

**चेट**—आर्ये सज्ज प्रवहणम् । (अज्जए सज्ज पवहणम् ।)

**वसन्तसेना**—हञ्जे मदनिके सुदृष्टा मा कुरु । दत्ताऽसि । आरोह प्रवहणम् । स्मरसि माम् । (हञ्जे मअणिए सुदिट्ठ म करेहि । दिण्णासि । आरुह पवहणम् । सुमरेसि मम् ।)

**मदनिका**—(रुदती ।) परित्यक्ताऽस्म्यार्यया । (इति पादयो पतति ।) (परिच्चत्तेम्हि[3] अज्जआए ।)

---

१ गुणयुक्त २ रलङ्घित ३ परिच्चअम्हि (परिच्युताऽस्मि).

SAR —( *Approaches, with embarrassment* ) Hail to your ladyship! !

VAS —Sir, I salute you Please be seated

SAR —The merchant ( Charudatta ) sends this message — " On account of the dilapidated state of my house, it is difficult to guard this casket So please take it back " ( *He gives it to* Madanika, *and starts to go* )

VAS —Sir, you should carry back to him a counter-message from me, too

SAR —( *To himself* ) Who is going there ? ( *Aloud* ) What is the counter-message ?

VAS —Your honour should take Madanika ( with you )

SAR —Lady, I do not understand ( this )

VAS —But I do

SAS —What do you mean ?

VAS —I was told by noble Charudatta that I was to give Madanika to him who would hand over to me that ornament So you may understand that he himself is bestowing her on you

SAR —( *To himself* ) Ah ! I have been found out by her ! ( *Aloud* ) Excellent, noble Charudatta, excellent !

Men should always make an effort to acquire virtues A virtuous person, poor though he may be, cannot be the equal of ( i e is superior to ) persons who are rich, but not virtuous (22)

Moreover—

An effort should be made by man to acquire virtues, for there is nothing that is exceedingly unattainable by means of them ( Thus ) the Moon, on account of the excellence of his merits, came to occupy Siva's head which is ( otherwise ) inaccessible (23)

VAS —Is there any driver here ?

( *Entering with a carriage* )

A SERVAT—Your ladyship, the carriage is ready !

VAS —Girl Madanika, look at me very well You are given away Mount the carriage, and remember me

MAD —( *Weeping* ) Your ladyship has abandoned me ! ( *She falls at her feet* )

**वसन्तसेना**—साम्प्रत त्वमेव वन्दनीया सवृत्ता । तद्गच्छ । आरोह प्रवहणम् । स्मरसि माम् । (सपद तुम ज्जेव वन्दणीआ सवुत्ता । ता गच्छ । आरुह पवहणम् । सुमरेसि मम् ।)

**शर्विलक**—स्वस्ति भवत्यै । मदनिके ।

> **सुदृष्ट क्रियतामेष शिरसा वन्द्यता जन ।**
> **यत्र ते दुर्लभ प्राप्त वधूशब्दावगुण्ठनम् ॥ २४ ॥**

( इति मदनिकया सह प्रवहणमारुह्य गन्तु प्रवृत्त । )

(नेपथ्ये ।)

क कोऽत्र भो । राष्ट्रिय समाज्ञापयति—एष खल्वार्यको गोपालदारको राजा भविष्यतीति सिद्धादेशप्रत्ययपरित्रस्तेन पालकेन राज्ञा घोषादानीय[1] घोरे बन्धनागारे बद्ध । तत स्वेषु स्वेषु स्थानेष्वप्रमत्तैर्भवितव्यम् ।

**शर्विलक**—( आकर्ण्य । ) कथ राज्ञा पालकेन प्रियसुहृदार्यको मे बद्ध । कलत्रवाश्चास्मि सवृत्त । आ. कष्टम् । अथ वा ।

> **द्वयमिदमतीव लोके प्रिय नराणा सुहृच्च वनिता च ।**
> **सप्रति तु सुन्दरीणा शतादपि सुहृद्विशिष्टतम ॥ २५ ॥**

भवतु अवतरामि । (इत्यवतरति ।)

**मदनिका**—(सास्रमञ्जलिं बद्ध्वा ।) एव न्विदम् । तत्पर नयतु मामार्यपुत्र समीप गुरुजनानान् । (एव्व ण्णेदम् । ता पर णेदु म अज्जउत्तो समीव गुरुअआणम् ।)

**शर्विलक**—साधु प्रिये साधु अस्मच्चित्तसदृशमभिहितम्[2] । (चेटमुद्दिश्य )। भद्र[3] जानीषे रेभिलस्य सार्थवाहस्योदवसितम् ।

**चेट**—अथ किम् । (अध इ ।)

**शर्विलक**—तत्र प्रापय प्रियाम्[4] ।

**चेट**—यदार्य आज्ञापयति । (ज अज्जो आणवेदि ।)

**मदनिका**—यथाऽऽर्यपुत्रो भणति । अप्रमत्तेन तावदार्यपुत्रेण भवितव्यम् । ( इति निष्क्रान्ता । ) (जधा अज्जउत्तो भणादि । अप्पमत्तण दाव अज्जउत्तेण होदव्वम् ।)

**शर्विलक**—अहमिदानी ।

> **ज्ञातीन्विटान्स्वभुजविक्रमलब्धवर्णा[5]**
> **न्राजापमानकुपिताश्च नरेन्द्रभृत्यान् ।**
> **उत्तेजयामि सुहृद परिमोक्षणाय**
> **यौगधरायण इवोदयनस्य राज्ञ ॥ २६ ॥**

---

१ आनीय चोर इव २ समभिहितम् ३ अयि ४ प्रियतमाम् ५ शब्दान्

VAS —Now you yourself have become worthy of salutation ( by others ) So go and ascend the car And remember me

SAR —Good bye, madam ! O Madanika,

Take a good view of her ladyship and bow to her with (bent) head, from whom you have obtained the addition ( *lit* the veil ) of the title of ' a bride ' which is hard to obtain (24)

( *Mounts the caarriage along with* Madanika, *and starts to go* )

( *Behind the scenes* )

Who is there ? ( Listen ) The chief of the police orders : "King Palaka, alarmed on account of his belief in the prophecy of a seer ( Siddha ) that Aryaka, a cowherd's son, would be the king, has now brought him from his hamlet and confined him in a dreadful dungeon So you should all watch carefully at your respective stations "

SAR —( *Listening* ) What ! King Palaka has arrested my dear friend Aryaka, and here I have just got a wife ! Oh ! Bad. luck ! Or rather—

In this world, these two things are exceedingly dear to men, *viz* a friend and a wife, but now ( the circumstances are such that ) the friend has become more important than even a hundred fair wives. (25)

All right I'll get down ( *Gets down* )

MAD —( *Tearfully, folding her hands* ) It is just so Well, then let my lord send me now to my elders

SAR —Good, my dear, well said ! You have spoken just what is in accord with my mind ! ( *To the servant* ) My good fellow, do you know the house of Rebhila, the merchant ?

THE SERVANT—Yes

SAR —Take my wife there.

THE SERVANT—As your honour orders

MAD —As my lord says But my lord should be careful ( *Exit* )

SAR —Now I will—

Incite ( to rebellion ) kinsmen ( mine and Aryaka's ), the city rakes, men that have won fame through the valour of their own arms ( *i e* free lances ), and such servants of the King as have been alienated through being insulted by him,—( all ) for the release of my friend ( Aryaka ), just as Yaugandharayana did ( incite people ) for the release of king Udayana (26)

अपि च ।

प्रियसुहृदमकारणे गृहीत
रिपुभिरसाधुभिराहितात्मशङ्कै ।
सरभसमभिपत्य मोचयामि
स्थितमिव राहुमुखे शशाङ्कबिम्बम् ॥ २७ ॥

(इति निष्क्रान्त ।)

(प्रविश्य ।)

**चेट** – आर्ये दिष्टचा वर्धसे । आर्यचारुदत्तस्य सकाशाद्ब्राह्मण आगत । (अज्जए दिट्ठिआ वड्ढसि । अज्जचारुदत्तस्स सआसादो बम्हणो आअदो ।)

**वसन्तसेना**—अहो रमणीयताऽद्य दिवसस्य । तद्धञ्जे सादरं बन्धुलेन सम प्रवेशयैनम् । (अहो रमणीअदा अज्ज दिवसस्स । ता हञ्जे सादर बन्धुलेण सम पवेसेहि णम् ।)

**चेटी**—यदार्याऽऽज्ञापयति । (इति निष्क्रान्ता ।) (ज अज्जआ आणवेदि ।)

(विदूषको बन्धुलेन सह प्रविशति[1] ।)

**विदूषक**—आश्चर्य भो । तपश्चरणक्लेशविनिर्जितेन राक्षसराजो रावण पुष्पकेण विमानेन गच्छति । अह पुनर्ब्राह्मणोऽकृततपश्चरणक्लेशोऽपि नरनारीजनेन गच्छामि । (ही ही भो तवच्चरणकिलेसविणिज्जिदेण रक्खसराओ रावणो पुप्फकेण विमाणेण गच्छदि । अह उण बह्मणो अकिदतवच्चरणकिलेसो वि णरणारीजणेण[2] गच्छामि ।)

**चेटी**--प्रेक्षतामार्योऽस्मदीय गेहद्वारम् । ( पेक्खदु अज्जो अम्हकेरक गेह-दुआरम् ।)

---

क्षराणि द्वितीये एकादशाक्षराणि च सन्ति । प्रथमपादे जतजभ एते गणा लभ्यन्ते द्वितीये तु जतजगल इति । उत्तरार्ध तु वशस्थ छन्द । ] ॥ १७ ॥ [ एवमिव चारुदत्त-स्याकिंचनतया भोगस्य भूरिधनसाध्यत्वादयमलकारो न्यासमिषेण तस्य हस्ते विनि-क्षिप्त इति सकेतार्थं । अप्रस्तुतवृत्तान्तेन प्रस्तुतवृत्तान्तमुपपादयन्नाह—इति ल०दी०] **छायार्थमिति** । [ग्रीष्मसतप्तोऽह यामेव शाखा छायार्थं समाश्रित सैव । पत्रै छायाहेतुभि । अप्रस्तुतप्रशसालकार ] ॥ १८ ॥ **स्त्रियो हीति** । निसर्गादशिक्षयैव । शास्त्रैरेवोपदिश्यते शास्त्राध्ययनादेव जायते ॥ १९ ॥ **नेति** । [ अस्मिन्साहसे चौर्यरूपे । तस्य साधोर्गुणान्किमर्थ कथयसि येनाह प्रतिनिवृत्यालकार तस्मै प्रत्यर्पयिष्यामि । इद कुत्सित कर्म मम लज्जा जनयति वा । मादृशाना शठाना सर्वा युक्तीर्जानतामित्यर्थ । किं नु कुर्यात् । न किमपि । मालिनी वृत्तम् ] ॥ २० ॥ **अथ** निजपतित्वेनैवमाह—तुम दावेति । इदानी ब्राह्मणभार्यात्वेनेति भाव. ।

---

१ प्रविष्ट , प्रविश्य २ णअर

Moreover—

My dear friend, who has been arrested causelessly by the wicked enemies, feeling alarmed in their minds, I will release by a sndden onset, as if he were the lunar orb lying in the jaws of Rahu. (27) (*Exit*)

(*Entering*)

A SERVANT—Lady, fortune smiles on you! A Brahmana has come from the noble Charudatta

VAS—Oh! How charming is this day! So, girl, bring him in with (due) respect, attended by one of the bastard pages

THE MAID—As your ladyship commands (*Exit*)

(*Enter* Vidushaka, *attended by a bastard-page*)

VID—Oh! Wonder! Ravana, the king of the Rakshasas, used to travel by the aerial car, Pushpaka, which he had conquered by means of (the merit born of) the pain he suffered in practising penance But here I, a Brahmana, am moving about, attended by a number of men and women, although I have suffered no pain due to the practice of penance.

THE MAID—Sir, please look at this entrance to our abode

---

[अभुजिष्ययेव यथा कलत्र मन्त्रयति तथा मन्त्रितमित्यर्थं । ल० दी० ] **मयेति** । भवतीमनुगच्छताऽनुवर्तमानेन । नष्टचन्द्राया तिमिराच्छादिनायामित्यर्थं । कार्याकार्यपर्याकुलत्वे सतीति यावत् ॥ २१ ॥ अत्तणकेरअ वोति चारुदत्तस्यानुचरत्व स्वीकृत्य ब्रूते । दूरक्ष्य रक्षितु दु शकम् । **गुणेष्वेवेति** । गुणेषु गुणोपार्जने । गुणयुक्तो नर दरिद्राऽपि अगणै ईश्वरै धनिकै न सम । ततोऽप्यधिक इति भाव ॥ २२ ॥ **गुणेष्विति** । गुणानामप्राप्यतममत्यन्तमलभ्यम् । गुणवद्भि सर्वमेव सुखेन लभ्यते इत्यर्थं । [गुणप्रकर्षाद्गुणाधिक्यात् । उडूनि पातीति उडुप चन्द्र तेन अलङ्घ्य केनापि लङ्घयितुमशक्य शभो उत्तमाङ्ग शिर लङ्घितमाक्रान्तम् । अत्र गुणप्रकर्षादुडुपकृत-शिवशिरोलङ्घनरूपेण विशेषेण सामान्यस्य समर्थनादर्थान्तरन्यासोऽलकार । उपेन्द्र-वज्रा वृत्तम् ] ॥ २३ ॥ [त्वमेव वन्दनीयेति—तवेदानीमभुजिष्यात्वेन वधूत्व प्राप्तम् । अस्माक तु कोटिपति त्वेऽपि एकपतित्वेऽपि वेश्यापदवाच्यतैवेति भाव । इति ल० दी० । ] **सुदृष्ट इति** । [एष जन वसन्तसेना । यत्र यस्या सकाशात् । वधूशब्दावगुण्ठन वधू-शब्दरूपमवगुण्ठनमावरणम् । केनाप्यनवलोकनत्वरूपमित्यर्थं । ] यत्र ते इति । हेता-वाधारविवक्षया 'यत्र' इति सप्तमी । कर्तु शेषत्वविवक्षया 'ते' इति षष्ठी ॥२४॥ [राष्ट्रे अधिकृतो राष्ट्रिय । 'राष्ट्रावारपाराद्घखौ' इति घ । सिद्ध त्रकालिक-यथार्थज्ञानवान् । तस्यादेशे प्रत्ययो विश्वासस्तेन परित्रस्त तेन । घोषाद्व्रजात् । ]

**विदूषक**—( अवलोक्य[1] । सविस्मयम् । ) अहो सलिलसिक्तमार्जितकृत-हरितोपलेपनस्य विविधसुगन्धिकुसुमोपहारचित्रलिखितभूमिभागस्य गगनतलावलोकनकौतूहलदूरोन्नामितशीर्षस्य दोलायमानावलम्बितैरावणहस्तभ्रमायितमल्लिकादामगुणालङ्कृतस्य समुच्छ्रितदन्तिदन्ततोरणावभासितस्य महारत्नोपरागोपशोभिना पवनबलान्दोलनाललच्चञ्चलाग्रहस्तेन 'इत एहि' इति व्याहरतेव मा सौभाग्यपताकानिवहेनोपशोभितस्य तोरणधरणस्तम्भवेदिकानिक्षिप्तसमुल्लसद्धरितचूतपल्लवललामस्फटिकमङ्गलकलशाभिरामोभयपार्श्वस्य महासुरवक्षःस्थलदुर्भेद्यवज्रनिरन्तरप्रतिबद्धकनककपाटस्य दुर्गतजनमनोरथायासकरस्य वसन्तसेनाभवनद्वारस्य सश्रीकता । यत्सत्य मध्यस्थस्यापि जनस्य बलाद्दृष्टिमाकारयति । (अहो सलिलसित्तमज्जिदकिदहरिदोवलेवणस्स विविहसुअन्धिकुसुमोवहारचित्तलिहिदभूमिभाअस्स[2][3] गअणतलाअलोअणकोदूहलदूरुण्णामिदसीसस्स[4][5] दोलाअमाणावलम्बिदैरावणहत्थब्भमाइदमल्लिआदामगुणालकिदस्स समुच्छिददन्तिदन्ततोरणावभासिदस्स[6] महारअणोवराओवसोहिणा पवणबलन्दोलणाललन्तचञ्चलग्गहत्थेण 'इदो एहि' त्ति वाहरन्तेण विअ म सोहग्गपडाआणिवहेणोवसोहिदस्स तोरणधरणत्थम्भवेदिआणिक्खित्तसमुल्लसन्तहरिदचूदपल्लवललामफटिहमङ्गलकलसाभिरामोहअपासस्स महासुरवक्खत्थलदुब्भेज्जवज्जणिरन्तरपडिबद्धकणअकवाडस्स[7] दुग्गदजणमणोरहाआसकरस्स वसन्तसेणाभवणदुआरस्स सस्सिरीअदा । ज सच्च मज्झत्थस्स वि जणस्स बलादिट्ठिं आआरेदि ।)

---

**द्वयमिति** । [ सप्रति सुहृदा विपत्ते कार्यकाले समुपस्थिते । विशिष्टतमस्यैव रक्षणस्यात्यावश्यकत्वादिति भाव । आर्या छन्द ]॥ २५ ॥ उदवसित गृहम् । **ज्ञातीनिति** । [ **यौगधरायण** तन्नामक प्रधानसचिव उदयनस्य राज्ञ वत्सराजस्य इव सुहृद आर्यकस्य परिमोक्षणाय बन्धनागारान्मुक्त्यर्थं ज्ञातीन् बन्धून् विटान् स्वभुजविक्रमेण लब्धो वर्ण यश यैस्तादृशान्वीरपुरुषान् । तथा राज्ञा पालकेन कृतापमानेन कुपितान् । विरक्तानिति यावत् । नरेन्द्रभृत्यानुत्तेजयामि राज्ञ पालकस्योच्छेदार्थं प्रोत्साहयिष्यामि । पुरा किल कौशाम्बीनृपो वत्सराज उज्जयिनीपतिना चण्डसेनेन केनापि मिषेण गृहीत्वा कारागारे निक्षिप्तस्तत्सचिवेन यौगधरायेण प्रकृतिकोपमुत्पाद्य बन्धनान्मोचित इति कथासरित्सागरकथाऽत्रानुसन्धेया । उपमापरिकरावलकारौ । वसन्ततिलक वृत्तम् ]॥ २६ ॥ **प्रियेति** । [ अकारण कारणाभावेऽपि असाधुभि आहिता आत्मनि शङ्का आर्यको राजा भविष्यतीति यैस्तै । स्वयमेव भीतै गृहीत प्रियसुहृद आर्यक सरभस सवेग समभिपत्य शत्रूनभियात्य मोचयामि राहुमुखे स्थित

---

१ विलोक्य २ सुअन्ध कुसुमचित्त. ३ चित्तलिदभूमिआ० (चित्रितभूमिका० ) ४ तलालोअण (तलालोकन) ५ ण्णमिद ६ समुद्धद ७ णिब्भेज्ज

VID —( *Looks, admiringly* ) Oh ! How beautiful is this gate of Vasantasena's mansion ! It is besprinkled with waters swept, and then besmeared with greenish cow-dung Its floor space is attractively (*lit* diversely ) decorated with the offerings of various kinds of sweet-smelling flowers It has raised its top to a great height, as if out of curiosity to have a sight of the celestial regions It is adorned with a string of a (huge) garland of jasmine flowers which is tossing about and hanging down from it, making one mistake it for the trunk of ( Indra s elephant ) Airavata It is splendidly decked with a lofty arch of ivory It is decorated with a number of auspicious banners, which look lovely with the lustre of costly jewels, whose finger-like tips are tremulously shaking as they are tossed about by the force of the wind, and which thus seem to be as it were beckoning me to get in Both its sides are rendered attractive by auspicious crystal-jars which are kept on the pedestals of the pillars supporting the archway, and which are charming on account of the green mango-leaves placed gracefully therein Its golden panels are thickly set with diamonds, and are as hard to break open as the chest of a big demon It tortures the desires of indigent persons To tell the truth, it forcibly arrests the eye even of an indifferent looker-on ( like me)

---

शशिबिम्बमिव । पुष्पिताग्रा छन्द ] ।। २७ ।। बन्धुलेन । [ बन्धुलस्त्वसतीसुत ' इत्यमर ] अत्रैवाङ्के पञ्चमप्रकोष्ठके [पञ्चमप्रकोष्ठकवर्णने] ' परगृहललिता '(४।२८) इत्यादि बन्धुललक्षण करिष्यते । ही ही भो इति विस्मये । तपश्चरणक्लेशविनिर्जितेन स्वाधीनेन । पुष्पकेण विमानविशेषेण । अकृततपश्चरणक्लेश । नरयुक्ता नारी नरनारी सोद्वाहिका यस्य । पुष्पकमपि सा नरनारी सीतारूपा उद्वहनीया यस्ये- दृशम् । शब्दच्छलेन साम्यम् । अहो वसन्तसेनाभवनद्वारस्य सश्रीकता । किभूतस्य । [ आदौ सलिलेन सिक्त पश्चान्मार्जित च कृत हरितोपलेपन यस्य तस्य । [ कृत- हरितोपलेपनस्य । कृतगोमयोपलेपनस्येत्यर्थात् । [ विविधानि च तानि सुगन्धीनि कुसुमानि च तेषामपहारै चित्र यथा तथा लिखित भूमिभागो यस्य । ०लोकने कौतूहल तेन दूरोन्नामित शीर्ष येन तस्य । ] उच्छ्रायप्रकर्षपरमेतत् । [ दोलाय- मान य अवलम्बित ऐरावण ऐरावनस्तस्य हस्त शुण्डा तस्य भ्रमायित भ्रम- मागत मल्लिकादामगुण मल्लिकाकुसुममाला तेनालकृतस्य । महारजनोपरागेति पाठे महारजन कुसुम्भ तस्योपराग रञ्जन तैरुपशोभते इति तेन । पवनबलेन या आन्दोलना तया ललत् चलदत एव चञ्चल अग्र एव हस्तो यस्य तेन । सौभाग्याय सौभाग्यलक्षणा वा याः पताकास्तासा निवहेन । तोरणस्य धरण धारण तदर्थं

**चेटी**—एत्वेतु । इम प्रथम प्रकाष्ठ पविशत्वार्य (एदु एदु । इम पढम पओट्ठ पविसदु अज्जो ।)

**विदूषक**—(प्रविश्यावलोक्य[1] च ।) आश्चर्य भो । इहापि प्रथमे पकोष्ठे शशिशङखमृणालसच्छाया विनिहितचूणमुष्टिपाण्डुरा विविधरत्नप्रतिबद्धकाञ्चन-सोपानशोभिता प्रासादपङ्क्तयोऽवरुम्बिनमक्तादामभि स्फटिकवातायनमुखचन्द्रै-निर्ध्यायन्तीवोज्जयिनीम् । श्रोत्रिय इव सुखोपविष्टो निद्राति दौवारिक । सदध्ना कलमौदनेन प्रलोभिता न भक्षयन्ति वायसा बलि सुधामवर्णतया । आदिशतु भवती । (ही ही भो । इध वि पढमे पओट्ठे ससिसङ्खमुणालसच्छाहाओ विणिहिद-चुण्णमुट्ठिपाण्डुराओ विविहरअणरडिबद्धकञ्चगसोवाणसोहिदाओ पासादपन्तिओ[2] ओलम्बिदमुत्तादामेहि फटिहवादाअणमुहचन्देहि णिज्झाअन्ती विअ उज्जइणिम् । सोत्तिओ विअ सुहावविट्ठो णिद्दाअदि दोवारिओ । सदहिणा कलमोदणेण पलाहिदा ण भक्खन्ति वायसा बलि सुधासवण्णादाए । आदिसदु भोदी ।)

**चेटी**—एत्वेत्वार्य । इम द्वितीय प्रकोष्ठ प्रविशत्वार्य (एदु एदु अज्जो । इम दुदिअ पओट्ठ पविसदु अज्जो ।)

**विदूषक**—(प्रविश्यावलोक्य च ।) आश्चर्य भो । इहापि द्वितीये प्रकाष्ठे पर्यन्तोपनीतयवसबुसकवलसुपुष्टास्तैलाभ्यक्तविषाणा बद्धा प्रवहणबलीवर्दा । अय-मन्यतरोऽवमानित इव कुलीनो दीर्घ निश्वसिति सैरिभ । इतश्चापनीतयुद्धस्य मल्लस्येव मर्द्यते ग्रीवा मेषस्य । इत इतोऽपरेषामश्वाना केशकल्पना क्रियते । अयमपर पाटच्चर इव दृढबद्धो मन्दुराया शाखामृग । (अन्यतोऽवलोक्य ।) इतश्च कुच्युततैलमिश्र पिण्ड हस्ती प्रतिग्राह्यते मात्रपुरुषै । आदिशतु भवती । (ही ही भो । इध वि दुदिए पओट्ठे पज्जन्तोवणीदजवसबुसकवलसुपुट्ठा तेल्ल-ब्भङ्गिदविसाणा[3] बद्धा पवहणबइल्ला । अअ अण्णदरो अवमाणिदो विअ कुलीणो दीह णीससदि सेरिहो । इदो अ अवणीदजुज्झस्स मल्लस्स विअ मद्दीअदि गीवा मेसस्स । इदो इदो अवराण अस्साण केसकप्पणा करीअदि । अअ अवरो पाडच्चरो विअ दढबद्धो मन्दुराए साहामिओ । इदो अ कूरच्चुअतेल्लमिस्स पिण्ड हत्थी पडिच्छावीअदि मेत्थपुरिसेहिं । आदिसदु[4] भोदी ।)

---

स्तम्भौ तयो वेदिका तस्या निक्षिप्तौ निहितौ च तौ । समुल्लसन्त च ते हरिताश्च चूतपल्लवा आम्रपल्लवास्तै ललामौ स्फटिकनिर्मितौ मङ्गलकलशौ ताभ्यामभिरामौ उभयपार्श्वौ यस्य । महासुरवक्ष स्थलवद् दुर्भेद्य वज्रै हीरकै निरन्तर प्रतिबद्ध प्रत्युप्त कनककपाट यस्य तस्य । दुर्गत दरिद्र जन । आयासकरस्य द्रव्याभावाद-लभ्यत्वात् । आकारयत्याकर्षति ।] प्रथमप्रकोष्ठवर्णनम—[ शशिशङखमृणाल-सच्छाया शशिशङखमृणालै समाना छाया कान्तिर्येषा ते । विविधै रत्नै प्रतिबद्धानि

---

१ दृष्ट्वा च २ वन्तिओ ३ विसाणबद्ध ४ आदेसेदु

THE MAID—Come, come (this way) please enter this first quadrangle

VID —( *Entering and looking about* ) Oh ! Wonderful ! Here, too, in this first quadrangle, are rows of balconies resembling in colour the moon, or conches, or lotus-stalks, which are whitened with handfuls of chunam powder laid over them (as paint), which are adorned with golden stairs inlaid with various kinds of gems, and which seem to be, as it were, gazing down fixedly on Ujjayini with their moon-like faces in the form of the crystal windows from which pearlstrings ore dangling Here the door-keeper is comfortably sleeping, lying at ease like a learned Brahmana ! The crows, though enticed by means of *Kalama* rice mixed with curds, do not eat the oblations, they being of the same colour as chunam-paint ( and therefore indistinguishable from it )—Please direct me ( further ), madam

THE MAID—Come, sir, come (this way), please enter this second quadrangle

VID —( *Entering and looking about* ) Oh ! Wonderful , Here, too, in this second quadrangle, there are tied the carriage oxen, fattened on the mouthfuls of grass and corn husks that are placed before them, and having their horns anointed with oil Here's one buffalo, snorting ( *lit* emitting deep sighs ) like a high-born man when slighted Here they are rubbing the neck of a ram as if he were a wrestler, after the fight is over And here in this direction they are dressing the hair of some horses Here's a monkey, fastened in its stable securely like a thief ( *Looking in another direction* ) And here an elephant is being fed by the keepers with balls of boiled rice mixed with ghee —Please direct me (further), madam

---

खचितानि काञ्चनस्य सोपानानि तै शोभिता । अवलम्बितानि मुक्तादामानि येषु तै स्फटिकवानायनान्येत्र मुखचन्द्रारतै । निध्यायिन्तीव पश्यन्तीव । कलमोदनेन शाल्योदनेन । ] [ पयन्तेषु उपनीतानि यवसानि तृणानि बुसानि धान्यत्वचश्च तेषा कवलै सुपुष्टा ।] इह सैरिभो महिष । [ केशकल्पना केशसज्जना । केशाना सस्कार इत्यर्थ । "कूरेति भक्तेत्यर्थ । तल्लेति घृतेत्यर्थ । मात्रेति महामात्रेत्यर्थ ।" इति ल० दी० ।] पाटच्चर इव चौर इव । इतोऽपि भक्ततैलघृतमिश्रपिण्ड ग्राह्यते हस्ती हस्तिपकपुरुषै । [ कुलपुत्रा. गर्भेश्वरा । पाशकपीठे मञ्चे इति ल० दी० । यद्वा शारीपटे । ] पुस्तक कामशास्त्रम्येत्यर्थात् । स्वाधीनम । 'सारितम्' इति पाठे प्रसारित-

**चेटी**—एत्वेत्वार्य । इम तृतीय प्रकोष्ठ प्रविशत्वार्य । एदु एदु अज्जो। इम तइअ पओट्ठ पविसदु अज्जो ।)

**विदूषक** —( प्रविश्य दृष्ट्वा च । ) आश्चर्य भो । इहापि तृतीये प्रकोष्ठे इमानि तावत्कुलपुत्रजनोपवेशननिमित्त विरचितान्यासनानि । अर्धवाचित पाशकपीठे तिष्ठति पुस्तकम् । एतच्च मणिमयसारिकासहित पाशकपीठम् । इमे चापरे मदनसधिविग्रहचतुरा विविधवर्णिकाविलिप्तचित्रफलकाग्रहस्ता इतस्तत परिभ्रमन्ति गणिका वृद्धविटाश्च । आदिशतु भवती । ( ही ही भो । इध वि तइए पओट्ठे इमाइ दाव कुलउत्तजणोववेसणणिमित्त विरचिदाइ आसणाइ । अद्धवाचिदो [1]पासअपीठे चिट्ठइ पोत्थओ । एसो अ [2]मणिमअसारिआसहिदो पासअपीठो । इमे अ अवरे मअणसधिविग्गहचदुरा विविहवण्णिआविलित्तचित्तफलहअग्गहत्था इदो तदो परिब्भमन्ति गणिआ वुड्ढविडा अ । आदिसदु भोदी ।)

**चेटी**—एत्वेत्वार्य । इम चतुर्थं प्रकोष्ठ प्रविशत्वार्य (एदु एदु अज्जो। इम चउठ्ठ पओठ्ठ पविसदु अज्जो । )

**विदूषक** —( प्रविश्यावलोक्य च । ) आश्चर्यं भो । इहापि चतुर्थे प्रकोष्ठे युवतिकरताडिता जलधरा इव गम्भीर नन्दन्ति मृदङ्गा।क्षीणपुण्या इव गगनात्तारका निपतन्ति कास्यताला।मधुकरविरुतमिव मधुर वाद्यते वश । इयमपरेर्ष्याप्रणयकुपितकामिनीवाङ्कारोपिता कररुहपरामर्शेन सार्यते वीणा । इमा अपरा कुसुमरसमत्ता इव मधुकर्योऽतिमधुर प्रगीता गणिकादारिका नर्त्यन्ते नाटच पाठचन्ते सश्रृङ्गारम् । अपवर्गिता गवाक्षेषु वात गृह्णन्ति सलिलगर्गर्य । आदिशतु भवती । (ही ही भो । इध वि चउट्ठे पओट्ठे जुवदिकरताडिदा जलधरा विअ गम्भीर णदन्ति मुदङ्गा[3] ह्रीणपुण्णाओ[4] विअ गअणादो तारआओ णिवडन्ति कमतालआ। महुअरविरुअ[5] विअ महुर वज्जदि वसो । इअ अवरा ईसाप्पणअकुविदकामिणी विअ अङ्कारोविदा कररुहपरामरिसेण सारिज्जदि वीणा । इमाओ अवराओ कुसुमरसमत्ताओ विअ महुअरिओ अदिमहुर पगीदाओ गणिआदारिआओ णच्चीअन्ति णट्ठअ पठीअन्ति ससिङ्गारओ । ओवग्गिदा गवक्खेसु वाद गेण्हन्ति सलिलगग्गरीओ । आदिसदु भोदी । )

---

मित्यर्थ । 'स्वाधीनमकृत्रिमम्' इति प्राचीनटीका । [ मदनसबन्धी य सधि परस्परानुनयन विग्रह प्रणयकलहश्च तत्र चतुरा । विविधा वर्णिका नीलपीतादयो वर्णास्तै विलिप्ता कृतालेख्या चित्रफलका अग्रहस्ते येषा ते । ] विविधवर्णिकावलिप्त

---

१ वासपीठे ( व्यासपीठे ). २ साहीणमणि० ( स्वाधीनमणि० ) ३ मुरआ (मुरजा ) ४ झीण ५ विरुअमहुर ( विरुतमधुर)

THE MAID—Come, sir, come (this way), please enter this third quadrangle

VID —(*Entering and looking about*) Oh! Wonderful! Here, too, in this third quadrangle, are these seats, duly arranged, for the use of well born youths There is a half read volume lying on a gaming-table Here's this gaming table with chessmen made of precious stones And here are these courtesans and aged gallants, wandering in all directions, who are skilled in managing love unions and love quarrels, carrying in their hands (*lit* fingers) picture-boards covered with paintings in various colours —Please direct me (further), madam

THE MAID—Come, sir, come (this way), please enter this fourth quadrangle

VID —(*Entering and looking about*) Oh! wonderful! Here, too, in this fourth quadrangle, the tabors struck by the hands of ladies are sounding deeply like clouds, cymbals of bell metal beating time are falling (with a flash), like the stars from heaven when their merit is exhausted, and bamboo-pipes are being sweetly played upon, (sounding) like the hum of bees Here's a lute which, after being placed on the lap like a maiden angered in jealous love, is being played upon (stroked) with the touch of the nails (fingers) Here are some courtesan-girls singing very sweetly, like female bees intoxicated with the honey of flowers, who are being taught to dance and made to learn a drama full of erotic sentiment And water jars, turned upside down, are kept suspended in the windows to receive the (cooling) breeze —Please direct me (further), madam

---

चित्रफलक वहमाना । गम्भीर घोरम् । निपतन्ति वैदग्ध्यवादनादेव निपात । मधु-कराभिरुतमिव । [ अपरस्या ईर्ष्यया अनुरागासहिष्णुतया प्रणयकुपिता कामिनीव । कररुहपरामर्शेन नखाग्राघातेन । कामिनीपक्षे स्पर्शनेन ] । ' गणिकादारिका वेश्या-विशेषा ' इतिगुणपताकायामुक्तम् । [ नर्त्यन्ते नृत्य शिक्ष्यन्ते । ] नाटयन्ते नाटयम् । पाठ्यन्ते सशृङ्गार । अपवतिगता अवलम्बिता । सलिलगर्गर्य [पात्रविशेषा ] । एतच्च जनाना पानार्थम् । हिङ्गुतैलगन्ध आ समन्ताद्धरति । [ महानस पाकस्थानम् । ] अधिक रोमाञ्चयति [ उ सुकयतीति वाऽर्थं । भुज्यते अनेनेति भोजनम् । करणे ल्युट् । व्यञ्जनमिति व्युत्पत्ते । अतो न पौनरुक्त्यमिति ध्येयम् । इति ल० दी० भोजन करणे ल्युटि व्यञ्जनादिवचन । पटच्चरमिव जीर्णवस्त्रमिव [ पेशी मास-पिण्डीम् । ] छेद्यपट्टमनेकाधारशोणिताभ्यामुपहतत्वात् । रूपिदारओ । रूपशब्द-

**चेटी**—एत्वेत्वार्यः । इमं पञ्चमं प्रकोष्ठं प्रविशत्वार्यः । (एदु एदु अज्जो । इमं पञ्चमं पओट्ठं पविसदु अज्जो ।)

**विदूषकः**—( प्रविश्य दृष्ट्वा च । ) आश्चर्यं भोः । इहापि पञ्चमे प्रकोष्ठेऽयं दरिद्रजनलोभोत्पादनकर आहरत्युपचितो हिङ्गुतैलगन्धः । विविधसुरभिधूमोद्गारैर्नित्यं सताप्यमानं निश्वसितीव महानसं द्वारमुखैः । अधिकमुत्सुकायते मां साध्यमानबहुविधभक्ष्यभोजनगन्धः । अयमपरः पटच्चरमिव हतपशूदरपेशिं धावति रूपिदारकः । बहुविधाहारविकारमुपसाधयति सूपकारः । बध्यन्ते मोदकाः पच्यन्तेऽपूपकाः । (आत्मगतम् ।) अपीदानीमिह वर्धितं भुङ्क्ष्वेति पादोदकं लप्स्ये । (अन्यतोऽवलोक्य । ) इतो गन्धर्वाप्सरोगणैरिव विविधालकारशोभितैर्गणिकाजनैर्बन्धुलैश्च यत्सत्यं स्वर्गायत एतद्गेहम् । भो के यूयं बन्धुला नाम । (ही ही भो । इध वि पञ्चमे पओट्ठे अअं दलिद्दजणलोहुप्पादणअरो आहरइ उवचिदो हिङ्गुतेल्लगन्धो । विविहसुरहिधूमुग्गारेहिं णिच्चं सताविज्जमाणं णीससदि विअ महाणसं दुवारमुहेहिं । अधिअं उसुसावेदि[1] मं साहिज्जमाणबहुविहभक्खभोअणगन्धो । अअं अवरो पडच्चरं विअ पोट्टिं धोअदि रूपिदारओ । बहुविहाहारविआरं उवसाहेदि सूवआरो । बज्झन्ति मोदआ पच्चन्ति अपूवआ । अवि दाणिं इह वड्ढिअं भुञ्जसु त्ति पादोदअं लहिस्सम् । इदो[2] गन्धव्वच्छरगणेहिं[3] विअ विविहालकारसोहिदेहिं गणिआजणेहिं बन्धुलेहिं अ जं सच्चं सग्गीअदि[4] एदं गेहम् । भो के तुम्हे बन्धुला णाम ।)

**बन्धुला**—वयं खलु

> **परगृहललिताः परान्नपुष्टाः परपुरुषैर्जनिताः पराङ्गनासु ।**
> **परधननिरता गुणेष्ववाच्या गजकलभा इव बन्धुला ललामः[5] ॥ २८ ॥**

**विदूषकः**—आदिशतु भवती । (आदिसदु भोदी ।)

**चेटी**—एत्वेत्वार्यः । इमं षष्ठं प्रकोष्ठं प्रविशत्वार्यः । ( एदु एदु अज्जो । इमं[6] छट्ठं पओट्ठं पविसदु अज्जो ।)

---

पशुवचनस्तद्योगाद्रूपी खट्टिकस्तस्य दारकः पुत्रः । यद्वा रूपी रूपसघस्तस्य दारकश्छेदकः । खट्टिक एव । यत्र मांसं छिद्यते तं पदं धावति प्रक्षालयति । अपीदानीमहं भोक्तुं पादोदकं लप्स्ये । 'वर्धितम्' इति पाठे 'व्यञ्जनादिसामग्र्योपचितं वर्धितकम्' इति पूर्वटीका । **परगृहेति** । [ परगृहे ललिताः पालिताः । ] गुणेष्ववाच्याः । अनभिधानीयगुणा इत्यर्थः । 'ऋणेषु' इति पाठे ऋणेष्ववाच्या ऋणमेत्रावसीय सर्वैरभिमुह्यामह इत्यर्थः । ललामो विलसामः । 'लल विलासे' भौवादिकः । अनुप्रासानुरोधेनानयोरैक्यम् । 'ललामा' इति पाठे श्रेष्ठा इत्यर्थः ॥ २ ॥ [ कर्मणा कार्येण चित्रघटनयेत्यर्थः । निर्मितानि तोरणानि । ] वस्तुविशेषे निक्षिप्तानि प्रसा-

---

१ ओआसावेदि २ इदो अ ३ सुर ४ सग्गाअदि ५ ललामा. ६ एदं

THE MAID—Come sir, come ( this way ), please enter this fifth quadrangle

VID —( *Entering and looking about*) Oh ! Wonderful ! Here, too, in this fifth quadrangle, there pervades an over powering odour of asafoetida and oil, exciting the appetite of a poor person The kitchen, being always heated ( pained ) is sighing, as it were, through its mouths in the shape of its doors, sending forth effusions of fragrant smoke of different kinds The smell of the many varieties of edibles and condiments that are being prepared is exciting me (*i e* ) my appetite ) very much Here is this butcher's boy washing the entrails of a killed animal, looking like ( a piece ) of an old garment The cook is preparing various kinds of different eatables *modakas* are being made and *apoopas* fried (*To himself*) Oh, how I long I should be offered here water for my feet, with a request to eat to my heart's content ! ( *Looking in another direction* ) To tell the truth, this mansion in this spot, with its bastards and courtesan folk adorned with different kinds of ornaments, looks as if it were heaven itself, with its crowds of Gandharvas and Apsarasas —Sirs, who are you that go by the name of ' *Bandhulas* ' ?

THE BASTARDS—We are, indeed,

*Bandhulas* ( bastards ), that sport about like the cubs of elephants, being reared in other people's houses, fed on others' food, begotten by other men upon stranger-women, enjoying others' riches, and possessing no ( particular ) merits to speak of (28)

VID —Please direct me ( further ), madam,

THE MAID—Come, sir, come ( this way ), please enter this sixth quadrangle

---

रितानीन्द्रायुधस्थानकमिव दर्शयन्ति । नीलरत्नेष्वारोपितानीन्द्रायुधमिव दृश्यन्त इत्याशय । प्रवालककर्कतरौ मणिविशेषौ । जातरूपं सुवर्णं । लोहितसूत्रैर्ग्रथ्यन्ते मौक्तिकाभरणानि । शाणे घृष्यन्ते प्रवालानि । शोष्यन्ते ओल्लविदमवतारिता आर्दिता वा कुङ्कुमप्रस्तरा । 'प्रस्तर कुङ्कुमाधारश्चर्मपुट ' इत्याहु । सालीअदि आर्द्रीक्रियते । सेलज्जअ कस्तूरिका । शल्यवद्वेधकत्वात् । आज्यमिव मृगमद वात् । इमेऽन्येऽवज्ञातपुत्रदारवित्ता मनुष्या [ आसवकरकैश्चषकै आपीना मदिरा यै ] आसवकरकेणापीतमदिरा गणिकाजनैर्ये मुक्तास्ते वाट पिबन्ति । अयमर्थ — मद्यपानभाण्डेनापीतमद्या अनादृतनिजपरिवारास्त्यक्तान्यकर्तव्या अत एव तत्रै-

**विदूषक**—(प्रविश्यावलोक्य च ।) आश्चर्य भो । इहापि षष्ठे प्रकोष्ठेऽमूनि तावत्सुवर्णरत्नाना कर्मतोरणानि नीलरत्नविनिक्षिप्तानीन्द्रायुधस्थानमिव दर्शयन्ति। वैदूर्यमौक्तिकप्रवालकपुष्परागेन्द्रनीलकर्केतरकपद्मरागमरकतप्रभृतीन्रत्नविशेषानन्योन्य विचारयन्ति शिल्पिन । बध्यन्ते जातरूपैर्माणिक्यानि । घटचन्ते सुवर्णालकारा । रक्तसूत्रेण ग्रथ्यन्ते मौक्तिकाभरणानि । घृष्यन्ते धीर वैदूर्याणि । छिद्यन्ते शङखा । शार्णैर्घृष्यन्ते प्रवालका । शोष्यन्त आर्द्रकुङ्कुमप्रस्तरा । सार्यते[1] कस्तूरिका । विशेषेण घृष्यते चन्दनरस । सयोज्यन्ते गन्धयुक्तय । दीयते गणिकाकामुकाना[2] सकर्पूर ताम्बूलम् । अवलोक्यते सकटाक्षम् । प्रवर्तते हास । पीयते चानवरत ससीत्कार मदिरा । इमे चेटा इमाश्चेटिका इमेऽपरेऽवधीरितपुत्रदारवित्ता मनुष्या आसवकरकापीतमदिरैर्गणिकाजनैर्ये मुक्तास्ते पिबन्ति । आदिशतु भवति । (ही ही भो । इध वि छट्ठे पओट्ठे अमु दाव सुवण्णरअणाण कम्मतोरणाइ णीरलअणविणिक्खिताइ इन्दाउहट्ठाण विअ दरिसअन्ति । वेदुरिअमोत्तिअपवालअपुप्फराअइन्दणीलकक्केतरअपउमराअमरगअपहुदिआइ रअणविसेसाइ अण्णोण्ण विचारेन्ति सिप्पिणो । बज्झन्ति जादरूवेहिं मणिक्काइ । घडिज्जन्ति सुवण्णालकारा । रत्तसुत्तेण गत्थीअन्ति मोत्तिआभरणाइ । घसीअन्ति धीर वेदुरिआइ । छेदीअन्ति सङ्खआ । साणिज्जन्ति पवालआ । सुक्खविअन्ति ओल्लविदकुङ्कुमपत्थरा । सालीअदि सेलज्जअम् । विस्साणीअदि चन्दणरसो । सजोईअन्ति गधजुत्तीओ । दीअदि गणिआकामुकाण सकप्पूर तम्बोलम् । अवलोईअदि सकडक्खअम् । पअट्टदि हासो । पिबीअदि अ अणवरअ ससिक्कार मइरा । इमे चेडा इमा चेडिआओ इमे अवरे अवधीरिदपुत्तदारवित्ता मणुस्सा आसवकरआपीदमदिरेहि गणिआजणेहिं जे मुक्का ते पिअन्ति । आदिसदु भोदी ।)

**चेटी**—एत्वेत्वार्य । इम सप्तम प्रकोष्ठ प्रविशत्वार्य । (एदु एदु अज्जो । इम सत्तम पओट्ठ पविसदु अज्जो ।)

**विदूषक**—( प्रविश्यावलोक्य च । ) आश्चर्य भो । इहापि सप्तमे प्रकोष्ठे सुश्लिष्टविहगवाटीसुखनिषण्णान्यन्योन्यचुम्बनपराणि सुखमनुभवन्ति पारावतमिथुनानि । दधिभक्तपूरितोदरो ब्राह्मण इव सूक्त पठति पञ्जरशुक । इयमपरा

---

वात्यन्तमवस्थाना गणिकाभिर्ये मुक्ता नि सारिता इत्युक्त ते पुरुषा वारवार पुन पुनर्मद्यमेव पिबन्ति । मदिराया अवारितसत्रत्वमुक्तम् । इह सप्तमे प्रकोष्ठे सुश्लिष्टाया विहङ्गपाल्या (–वाटचा) कपोतपालिकायाम् । सूक्तमृक्समुदायम् । शोभनोक्त च यथा स्यादेवम् । [कुम्भदासीव कुट्टिनीव ।] परपुष्टा कोकिला । आलम्बिता नागदन्तेषु गृहभित्तिस्थदारुविशेषेषु । नागदन्तका इति प्रकृष्टौ क ।

---

१ क्षाल्यते २ कामुकयो

VID —( *Entering and looking about* ) Oh ! Wonderful ! Here, too, in this sixth quadrangle, these architectural arches, made of jewels set in gold, and embossed on ( a background of ) blue gems ( sapphires ), exhibit as it were a spot full of rain bows Goldsmiths are consulting one another as regards various kinds of jewels, such as lapis lazuli, pearls, corals, topazes, sapphires, cat's-eyes, rubies, emeralds, etc Rubies are being set in gold , golden ornaments are being manufactured , pearl-ornaments are being strung on threads of red silk , lapis lazuli are being gently polished , conches are being cut , and corals are being ground on whetting stones Layers of wet saffron-paint are exposed for drying , musk is being moistened , sandal-juice is being made up Betel-rolls with camphor are being offered to the lovers of the courtesans , side glances are being cast, laughter is going on , and wine is being incessantly drunk with sounds of merriment Here are drinking these men servants, these maid-servants, and also these men who have forsaken their children, wives and property, and are left ( to themselves ) by the courteans who have ( gone away, having ) drunk wine from liquor cups —Please direct me (further) madam

THE MAID—Come, sir, come ( this way ), please enter this seventh quadrangle

VID —( *Entering and looking about* ) Oh ! Wonderful ! Here, too, in this seventh quadrangle, pairs of pigeons are enjoying happiness, perched comfortably in snug dove-cots and busy in kissing each other The parrot in its cage, fed on curds and rice, is reciting a Vedic hymn, like a Brahmana whose belly is filled with rice and curds

---

कपिञ्जला गौरास्तित्तिरय । प्रेष्यन्ते पञ्जरकपोता । योद्धुमित्यर्थात् । इतस्ततो विविधमणिविचित्रित इवाय सहचरीसहित सहर्ष नृत्यन्नविकिरणसतप्त पक्षोत्क्षेपै-र्वीजयतीव प्रासाद गृहमयूर । चन्द्रपादाश्चन्द्रकिरणा । [ वृद्धमहल्लका वृद्धश्रेष्ठा इत्यर्थ । इति ल दी ] प्रसारणक दत्त गणिकाभिर्नानापक्षिसमूहे । [ एत्वार्य । अत्र एत्वेत्विति न वीप्सा । प्रकोष्ठमर्यादासमाप्तेरभ्यन्तरगृहस्यागतत्वेन गन्तव्यस्य प्रकोष्ठान्तरस्य विरहाच्चेति ध्येयम् । इति ल० दी० ] पट्टप्रच्छदप्रावृतोऽधिकतर-मत्यद्भुतपुनरुक्तालकारालकृत । मा तावदिति । आर्या । विततायामिव अमेध्य इवेति पाठान्तरे इत्यर्थ । अनभिगम्योऽनभिगमनीय ॥ २९ ॥ पुष्पप्रावारकप्रावृता [ सूक्ष्मसूत्रपुष्पाणि कृत्रिमाणि यत्र भवन्ति स पुष्पपट इति प्रसिद्ध । इति ल० दी० ]

समानगालब्धप्रसरेव गृहदासी अधिक कुरकुरायते मदनसारिका । अनेकफलरसास्वादप्रहृष्टकण्ठा कुम्भदासीव कूजति परपुष्टा । आलम्बिता नागदन्तेषु पञ्जरपरपरा । योध्यन्ते लावका । आलाप्यन्ते कपिञ्जला । प्रेष्यन्ते पञ्जरकपोता । इतस्ततो विविधमणिचित्रित इवाय सहर्ष नृत्यन्रविकिरणसतप्त पक्षोत्क्षेपैर्विधुनतीव प्रासाद गृहमयूर । (अन्यतोऽवलोक्य ।) इत पिण्डीकृता इव चन्द्रपादा पदगति शिक्षमाणानीव कामिनीना पश्चात्परिभ्रमन्ति राजहसमिथुनानि । एतेऽपर वृद्धमहल्लका इवेतस्तत सचरन्ति गृहसारसा । आश्चर्य भो । प्रसारण कृत गणिकाया नानापक्षिसमूहै । यत्सत्य खलु नन्दनवनमिव मे गणिकागृह प्रतिभासते । आदिशतु भवती । (ही ही भो । इध वि सत्तमे पओट्ठे सुमिलिट्ठविहङ्गवाडीसुहणिसण्णाइ अण्णोण्णचुम्बणपराइ सुह अणुभवन्ति पारावदमिहुणाइ । दहिभत्तपूरिदोदरो बम्हणो विअ सुत्त पढदि पञ्जरसुओ । इअ अवरा समाणणालद्धपसरा विअ घरदासी[1] अधिअ कुरकुरायदि मदणसारिआ । अणेअफलरसास्सादपहुट्ठकण्ठा कुम्भदासी विअ कूअदि परपुट्ठा[2] । आलम्बिदा णागदन्तेसु पञ्जरपरम्पराओ । जोधीअन्ति लावआ । आलवीअन्ति कविञ्जला । पेसीअन्ति पञ्जरकवोदा । इदो तदो विविहमणिचित्तलिदो विअ अअ सहरिस णच्चन्तो रविकिरणसतत्त पक्खुक्खेवेहि विधुवेदि विअ पासाद घरमोरो । इदो पिण्डीकिदा विअ चन्दपादा पदगदि सिक्खन्ता[4] विअ कामिणीण पच्छादो परिब्भमन्ति राअहसमिहुणा । एदे अवरे बुड्ढमहल्लका विअ इदो तदो सचरन्ति घरसारसा[5] । ही ही भो । पसारणअ किद गणिआए णाणापक्खिसमूहेहि । ज सच्च क्खु[6] णन्दणवण विअ मे गणिआघर पडिभासदि । आदिसदु[7] भोदी ।)

**चेटी**—एत्वार्य । इममष्टम प्रकोष्ठ प्रविशत्वार्य । (एदु[8] अज्जो । इम अट्टम पओट्ठ पविसदु अज्जो ।)

**विदूषक**—(प्रविश्यावलोक्य च ।) भवति क एष पट्टप्रावारकप्रावृतोऽधिकतरमत्यद्भुतपुनरुक्तालकारालकृतोऽङ्गभङ्गै परिस्खलन्नितस्तत परिभ्रमति । (भोदि को एसो पट्टपावारअपाउदो अधिअदर अच्चब्भुदपुणरुत्तालकारालकिदो अङ्गभङ्गेहि परिक्खलन्तो इदो तदो परिब्भमदि ।)

**चेटी**—आर्य एष आर्याया भ्राता भवति । (अज्ज एसो अज्जआए[9] भादा भोदी ।)

**विदूषक**—कियत्तपश्चरण कृत्वा वसन्तसेनाया भ्राता भवति । अथ वा ।

**मा तावद्यद्यप्येष उज्ज्वल स्निग्धश्च सुगन्धश्च ।**
**तथाऽपि श्मशानवीथ्या जात इव चम्पकवृक्षोऽनभिगमनीयो लोकस्य ॥ २९ ॥**

---

१ गृहदासी. २ पट्ठुट्ट (प्रतुष्ट) ३ परउ–वु–ट्ठा ४ सिक्खन्ति ५ सारसाओ ६ क्खु एद ७ आदेसेदु ८ एदु एदु ९ आए अअ

And this talking thrush is chattering lustily like a house maid that has gained ascendancy on account of the consideration shown to her The cuckoo is cooing like a procuress, with her throat delighted by having tasted the juice of numerous fruits Rows of cages are suspended from pegs Quails are incited to fight, partridges are being made to talk, caged pigeons are being set upon (each other) while this domestic peacock, looking as if decked with various kinds of gems, is, as it were, fanning the (whole) mansion heated with the sun's rays with the flutter of his tail, as he dances about joyfully hither and thither (*Looking in another direction*) Here these pairs of royal swans, looking as if they were the moon's rays rolled up (into that shape), are walking behind lovely damsels, as though learning their gait (*lit* movement of feet) And here these tame cranes are moving here and there, like aged eunuchs Oh! Wonderful! An extensive scene is presented by the courtesan's collection of various kinds of birds! To tell the truth, this mansion of the courtesan appears to me like the Nandana garden (of Indra)!—Please direct me (further), madam

THE MAID—Come, sir, please enter this eighth quadrangle

VID —(*Entering and looking about*) Girl, who is this person clad in a silken cloak and gorgeously decked with a superfluity of very wonderful ornaments, moving about haltingly and with distortions of the body ?

THE MAID—Sir, this is her ladyship's brother

VID —How much penance has a person to practise to become Vasantasena's brother ? Or rather,—

I must not (think highly of him) For, although he is gaily dressed, gentle, and well-perfumed, still he is to be shunned by the people, just like a *Champaka* tree growing in the enclosure of a cremation-ground, although it may be bright (with blossoms), attractive, and sweet-smelling (29)

---

पादाभ्या लक्षिता। 'करट्ट' इति पाठे अशौचाभ्यवहरणप्रयुक्तकरट्टब्राह्मणवत्। तत्किमितीमा प्रवश्येत्यादि। अन्यथा अनेन द्वारेणास्या गृहे न प्रवेश स्यादित्याशय। एषा स्वल्वस्माक माता चातुर्थिकेन ज्वरविशेषेण पीड्यते। तेनेदृशी दशेत्युक्तम्। [चतुर्थे अहनि भव चातुर्थिक। 'कालाट्ठञ्' इत्यनेन ठञ्। 'ठस्येक' इतीकादेश।]

(केत्तिअ तवच्चरण कदुअ वसन्तसेणाए माआदा भोदि । अव वा ।

मा दाव जइ वि एसो उज्जलो सिणिद्धो अ सुअन्धो अ ।
तह वि मसाणवीधीए जादो विअ चम्पअरुक्खो अणहिगमणिओ लोअस्स ॥)

(अन्यतोऽवलोक्य ।) भवति एषा पुन का पुष्पप्रावारकप्रावृतोपानद्युगलनिक्षिप्त-तैलचिक्कणाभ्या पादाभ्यामुच्चासन उपविष्टा तिष्ठति ।
(भोदि एसा उण का फुल्लपावारअपाउदा उवाणहजुअलणिक्खित्ततेल्लचिक्कणेहिं पादेहिं उच्चासणे उवविट्ठा चिट्ठदि ।)

**चेटी**—आर्य एषा खल्वस्माकमार्याया माता । (अज्ज एसा क्खु अम्हाण अज्जआए अत्तिआ ।)

**विदूषक**—अहो अस्या कपर्दकडाकिन्या उदरविस्तार । तत्किमेता प्रवेश्य महादेवमिव द्वारशोभेह गृहे निर्मिता । (अहो से कवट्टडाइणीए[1] पोट्टवित्थारो । ता किं एद पवेसिअ महादेव विअ दुआरसोहा इह घरे णिम्मिदा ।)

**चेटी**—हताश मैवमुपहसास्माक मातरम् । एषा खलु चातुर्थिकेन पीडचते । (हदास मा एव्व उवहस अम्हाण अत्तिअम् । एसा क्खु चाउत्थिएण पीडिअदि ।)

**विदूषक**—(सपरिहासम् ।) भगवश्चातुर्थिक एतेनोपकारेण मामपि ब्राह्मणमालोकय । (भअव चाउत्थिअ एदिणा उवआरेण म पि बम्हण आलोएहि ।)

**चेटी**—हताश मरिष्यसि । (हदास मरिस्ससि ।)

**विदूषक**—(सपरिहासम् ।) दास्या पुत्रि वरमीदृश शूनपीनजठरो मृत एव ।

**सीधुसुरासवमत्ता एतावदवस्था गता हि माता ।**
**यदि म्रियतेऽत्र माता भवति शृगालसहस्रपर्याप्ता ॥ ३० ॥**

भवति किं युष्माक यानपात्राणि वहन्ति । (दासीएधीए[2] वर ईदिसो शूणपीणजठरो मुदो ज्जेव ।

[3]सीहुसुरासवमत्तिआ एआवत्थ गदा हि अत्तिआ ।
जइ मरइ एत्थ अत्तिआ भोदि सिआलसहस्सपज्जत्तिआ ॥[4]

भोदि किं तुम्हाण जाणवत्ता वहन्ति ।)

**चेटी**—आर्य न हि न हि । (अज्ज ण हि ण हि ।)

---

सपरिहासम् । शूणपीणजठरो शूनमुच्छून पीन महाभोग जठर यस्य स । सीधुसुरासवेत्यादि । उपजातिविशेष । सीधुसुरासवा मदिराविशेषा । [ 'सीधुरिक्षुरसैं पक्वैरपक्वैरासव भवेत्' इति माधव ।] एतावदवस्थामापन्नपीनत्वरूपा गता यदि म्रियतेऽत्र मृता भवति शृगालाना पर्याप्तिका सौहित्यम् ॥ ३० ॥ [ युष्माक यान-

---

१ कवट्ट (अपवित्र). २ आ दासी० ३ सोधु ४ ज्जत्तिआ (यात्रा)

( *Looking in another direction* ) Girl, and who is this woman occupying a lofty seat, clad in a garment embroidered with flowers with her oil greasy feet thrust into a pair of shoes ?

THE MAID—Sir, she is the mother of our mistress.

VID—Oh ! How great is the expanse of the belly of this ugly she ghoul ! What, then, was the beautiful entrance of this house constructed after she was set up here, as is done with a ( huge ) idol of Siva ?

THE MAID—You knave, you mustn't jeer at our mother in this fashion She is suffering from a quartan fever

VID—( *With a burst of laughter* ). Holy quartan fever, look thou also upon me, a Brahmana, with such a favour !

THE MAID—You wretch, you will die then !

VID—( *Jestingly* ) Thou slave-born wench, better is a fat and bloated belly like this dead !

The mother has been reduced to such a condition, having intoxicated hereself with spirits, liquors and wines If the mother were now to die, she would provide sufficient food for a thousand jackals ! (30)

Girl, have you any sailing vessels going abroad ( for trade ) ?

THE MAID—Sir, no, not at all

---

पात्राणि पोतादीनि वाणिज्यार्थे वहन्ति किम् । अन्यथा कथमीदृशी सपदिति भाव ।] उद्वाहकेनार्जितविभवस्यैव परमियान्विस्तारो भवतीति प्रष्टुरभिप्राय । [ परिच्छेद एकदेश । 'परिच्छदो विस्तार ' इति ल० टी० ] [ अच्छरीतय सम्यक्प्रकारा कुसुमप्रस्तारा पुष्पोद्गमा येषा ते । निर्गतमन्तर येषा ते निरन्तरा पादपा युवति-जनजघनानुरूपप्रमाणा इत्यर्थं । पट्टनिर्मिता दोला पट्टदोला । सुवर्णानि चम्पकानि हरिचन्दनकुसुमानि वा । यूथिकादय पुष्पविशेषा । ] सर्वकुसुमप्रस्तारा पट्टदोला । लघूकरोतीव नन्दनवनस्य सश्रीकत्वम् । [ सध्यायते सध्यावदाचरति । ] एष इत्यादि । गाथा । [ घना लोहितपङ्कस्य रुधिरकर्दमस्य ] चर्चा यस्य स ॥ ३१ ॥ गुणेति । [ गुणा सगीतज्ञान कलापाटवमित्यादय कृत्रिमा ते एत्र प्रवाला पल्लवा यस्य तम् । विनय एव प्रशाखा मुख्यशाखा यस्य तम् । विश्रम्भ सर्वलोकाना विश्वास एव मूल यस्य तम् । महनीय पूज्यत्व यश इत्यर्थं एव पुष्प यस्य तम् । स्वगुणै सहजै गुणै दयादाक्षिण्यकुलशीलादिभि फलै आढ्य सपन्नम् । एवविधं साधु चारुदत्त एव वृक्षस्त सुहृद एव विहङ्गा पक्षिणस्ते सुखमाश्रयन्ति अपि । भवादृशास्न यथापूर्वं सेवन्ते किमित्यर्थं । रूपकमलकार । उपजातिश्छन्द ]।

**विदूषक**—किं वाऽत्र पृच्छ्यते । युष्माकं खलु प्रेमनिर्मलजले मदनसमुद्रे स्तननितम्बजघनान्येव यानपात्राणि मनोहराणि । एवं वसन्तसेनाया बहुवृत्तान्तमष्ट-प्रकोष्ठं भवनं प्रेक्ष्य यत्सत्यं जानाम्येकस्थमिव त्रिविष्टपं दृष्टम् । प्रशंसितुं नास्ति मे वाग्विभवः । किं तावद्गणिकागृहमथ वा [१]कुबेरभवनपरिच्छेद इति । कुत्र युष्माकमार्या । (किं वा एत्थ पुच्छिअदि । तुम्हाणं क्खु पेम्मणिम्मलजले मअण-समुद्दे त्थणणिअम्बजहणा ज्जेव जाणवत्ता मणहरणा । एव्वं वसन्तसेणाए बहुवुत्तन्त-अट्ठपओट्ठं भवणं पेक्खिअ जं सच्चं जाणामि एकत्थं विअ तिविट्ठअं दिट्ठम् । पसंसिदुं णत्थि मे वाआविहवो । किं दाव गणिआघरं अह वा कुबेरभवणपरिच्छेदो त्ति । कहिं तुम्हाणं अज्जआ ।)

**चेटी**—आर्य एषा वृक्षवाटिकायां तिष्ठति । तत्प्रविशत्वार्यः । (अज्ज एसा रुक्खवाडिआए चिट्ठदि । ता पविसदु अज्जो ।)

**विदूषक**—(प्रविश्य दृष्ट्वा च ।) आश्चर्यं भो । अहो वृक्षवाटिकाया सश्रीकता । अच्छरीतिकुसुमप्रस्तारा रोपिता अनेकपादपा निरन्तरपादपतलनिर्मिता युवतिजनजघनप्रमाणा पट्टदोला सुवर्णयूथिकाशेफालिकामालतीमल्लिकानवमालिका-कुरबकातिमुक्तकप्रभृतिकुसुमैः स्वयं निपतितैर्यत्सत्यं लघूकरोतीव नन्दनवनस्य सश्रीकताम् । (अन्यतोऽवलोक्य ।) इतश्च उदयत्सूर्यसमप्रभैः कमलरक्तोत्पलैः सन्ध्यायत इव दीर्घिका । अपि च ।

> **एषोऽशोकवृक्षो नवनिर्गतकुसुमपल्लवो भाति ।**
> **सुभट इव समरमध्ये घनलोहितपङ्कचर्चिक ॥ ३१ ॥**

भवतु । तत्कुत्र युष्माकमार्या । (ही ही भो । अहो रुक्खवाडिआए सस्सिरीअदा । अच्छरीदिकुसुमपत्थारा[२] रोविदा अणेअपादवा [३]णिरन्तरपादवतलणिम्मिदा जुवदि-जणजहणप्पमाणा[४] पट्टदोला सुवण्णजूधिआसेहालिआमालईमल्लिआणोमालिआ-कुरबआअदिमोत्तअप्पहुदिकुसुमेहिं[५] सअं णिवडिदेहिं जं सच्चं लहुकरेदि विअ णन्दणवणस्स सस्सिरीअदम् । इदो अ उदअन्तसूरसमप्पहेहिं कमलरत्तोप्पलेहिं सज्झाअदि विअ दीहिआ । अवि अ ।

> एसो असोअवुच्छो [६]णवणिग्गअकुसुमपल्लवो भादि ।
> सुभडो व्व समरमज्झे घणलोहिदपङ्कचच्चिक्को ॥

भोदु । ता कहिं तुम्हाणं अज्जआ ।)

**चेटी**—आर्य अवनमय दृष्टिम् । पश्यार्याम् । (अज्ज ओणामेहि दिट्ठिम् । पेक्ख अज्जअम् ।)

**विदूषक**—(दृष्ट्वा उपसृत्य ।) स्वस्ति भवत्यै । (सोत्थि भोदीए ।)

---

१ परिच्छदो २ अच्छरीअकुसुमा जत्थ रोविदा (आश्चर्यकुसुमा यत्र रोपिताः) ३ णिरन्तरम् ४ जव० ५ कुरवआ ६ णिग्गम (निर्गम)।

VID.—Or rather, why ask a question in this matter ? (For ) surely, in this ocean of your passion having affection for its pure waters, your beasts, hips and buttocks are themselves the charming sailing vessels ! To tell the truth, having thus seen this mansion of Vasantasena with its eight quadrangles and its numerous appurtenances, I feel I have, as it were, seen the three worlds brought together in one spot I have not the power of speech to praise it (as it deserves), whether (it should be called) a courtesan's house, or a portion of Kubera's palace Where is your mistress ?

THE MAID—Sir, here she is, in this garden, may your honour enter

VID —( *Entering and looking about* ) Oh ! Wonderful ! How beautiful is this garden ! Numerous trees have been planted here, that have put forth ample blossoms in a very charming manner There is a silken swing, hung, beneath thickly growing trees, and big enough to accommodate ladies' hips To tell the truth, the garden throws into the back ground as it were the beauty of ( Indra's ) Nandana garden, by means of the flowers that have spontaneously dropped down, of the *Champaka*, the *Yuthika*, the *Sephalika*, the *Malati*, the *Mallika*, the *Navamalika*, the *Kurabaka*, the *Atimukta* and other plants ( *Looking in another direction* ) And here this oblong well looks like ( red ) twilight as it were, owing to the lilies and the red lotuses ( blooming therein ), whose lustre resembles that of the rising sun Moreover—

Here this Asoka tree, having recently put forth blossoms and foliage, looks like a brave warrior in the thick of the battle, amply splashed all over with clotted blood (31)

Well, where is your mistress ?

THE MAID—Sir, bring down your eyes, and you'll see her ladyship

VID —( *Seeing her and approaching* ) My greetings, madam !

---

॥ ३२ ॥ अथ किम् अनुमतौ । राअवत्थहारी वार्त्तिक शौण्डीर्यणाशयमहत्त्वेन । [ हीनकुसुमादिति दारिद्र्य गताच्चारुदत्ताद्रत्नावलीरूपस्यालकारस्य प्राप्तिरित्यर्थं । अकाले दुर्दिन मेघध्वान्त सूर्यंकिरणरोधकारि मेघमण्डलमित्यर्थं उन्नमति आविर्भवति । ] उदयन्त्विति । [ वर्षं वृष्टि । अविरतमविश्रान्तम् । दयिताभिमुखेन प्रियगमनोत्सुकेन ॥ ३३ ॥ अत्र चारुदत्तानुराग परमार्थं । अत्र चेटीवचनेन वसन्तसेनावाक्येन च अव्यवहितमेव पञ्चमाङ्कादौ वर्षंतुवर्णनावतार सूच्यते इति ल०दी० । ]

इति मदनिकाप्रदानो नाम चतुर्थोऽङ्क ॥

**वसन्तसेना**—( संस्कृतमाश्रित्य । ) अये मैत्रेयः । ( उत्थाय । ) स्वागतम् । इदमासनम् । अत्रोपविश्यताम् ।

**विदूषक**—उपविशतु भवति । (उपविसदु भोदी ।)

( उभावुपविशत । )

**वसन्तसेना**—अपि कुशल सार्थवाहपुत्रस्य ।

**विदूषक**—भवति कुशलम् । (भोदी कुशलम् ।)

**वसन्तसेना**—आर्य मैत्रेय अपीदानी

गुणप्रवाल विनयप्रशाख विश्रम्भमूल महनीयपुष्पम् ।
त साधुवृक्ष स्वगुणै फलाढ्य सुहृद्विहङ्गा सुखमाश्रयन्ति ।। ३२ ।।

**विदूषक**—(स्वगतम् ।) सुष्ठूपलक्षित दुष्टविलासिन्या । (प्रकाशम् ।) अथ किम् । (सुट्ठु उवलक्खिद दुट्ठविलासिणीए । अध इ ।)

**वसन्तसेना**—अये किमागमनप्रयोजनम् ।

**विदूषक**—श्रृणोतु भवती । तत्रभवाश्चारुदत्त. शीर्षेऽञ्जलिं कृत्वा भवती विज्ञापयति । ( सुणादु भोदी । तत्तभव चारुदत्तो सीसे अञ्जलिं कदुअ भोदिं विण्णवेदि ।)

**वसन्तसेना**—(अञ्जलिं बद्ध्वा ।) किमाज्ञापयति ।

**विदूषक**—मया तत्सुवर्णभाण्ड विश्रम्भादात्मीयमिति कृत्वा द्यूते हारितम् । स च सभिको राजवार्ताहारी न ज्ञायते कुत्र गत इति । ( मए त सुवण्णभण्डअ विस्सम्भादो अत्तणकेरकेत्ति कदुअ जूदे हारिदम् । सो अ सहिओ राअवत्थहारी[1] ण जाणिअदि कहिं गदो त्ति ।)

**चेटी**—आर्ये दिष्टया वर्धसे । आर्यो द्यूतकर सवृत्त ( अज्जए दिट्ठआ वड्ढसि । अज्जो जूदिअरो सवुत्तो ।)

**वसन्तसेना**—(स्वगतम् ।) कथ चौरेणापहृतमपि शौण्डीरतया द्यूते हारितमिति भणति ।अत एव काम्यते । ( कध चोरेण अवहिद पि सोण्डीरदाए जूदे हारिद त्ति भणादि । अदो ज्जेव कामीअदि ।)

**विदूषक**—तत्तस्य कारणाद्गृह्णातु भवतीमा रत्नावलीम् । (ता तस्स कारणादो गेण्हदु भोदी एद[2] रअणावलिम् ।)

**वसन्तसेना**—( आत्मगतम् । ) किं दर्शयामि तमलकारम् । ( विचिन्त्य । ) अथ वा न तावत् । (किं दसेमि त अलकारअम् । अध वा ण दाव ।)

---

१ राआवत्थआरी (राजापथ्यकारी). २ इम (इमा).

VAS.—(*Speaking in Sanskrit*) Oh! Here's Maitreya! (*Getting up*) Welcome sir! Here's a seat, pray be seated here

VID —You (too) may sit down

(*Both sit down*)

VAS —Is the merchant's son (Charudatta) all well?

VID —Madam, he is well

VAS —Sir, Maitrey, do now

The birds in the form of friends happily resort to that tree in the form of a good man?—the tree which has accomplishments for its foliage, modesty for its principal branches, (popular) trust for its root, and fame for its flowers, and which is richly endowed with fruits in the form of merits? (32)

VID (*To himself*). The roguish blonde has observed acutely! (*Aloud*) Yes, (so they do)

VAS —Now, what may be the object of your visit?

VID —May madam listen! His honour Charudatta, placing his folded hands on his head, begs to say—

VAS —(*Folding her hands*) —What does he command?

VID —"I lost that golden casket at gambling, in the confident belief that it belonged to me And I do not know where that gambling-master, the King's emissary, is gone (at present)"

THE MAID—I congratulate you, madam! His honour has turned a gambler!

VAS —(*To herself*) How! Although it was stolen by a thief, still he says, out of his magnanimity, that it was lost at play! Hence it is that I love him!

VID —"—So in exchange for that, your ladyship may kindly accept this jewel necklace"

VAS —(*To herself*) Shall I show him that ornament? (*Considering*) Or rather, not so soon

**विदूषक**—किं तावन्न गृह्णाति भवत्येता रत्नावलीम् । (किं दाव ण गेण्हदि भोदी एद रअणावलीम् ।)

**वसन्तसेना**—(विहस्य[1] सखीमुख पश्यन्ती ।) मैत्रेय कथ न ग्रहीष्यामि रत्नावलीम् । (इति गृहीत्वा पार्श्वे स्थापयति । स्वगतम् ।) कथ हीनकुसुमादपि सहकारपादपान्मकरन्दबिन्दवो निपतन्ति । (प्रकाशम् ।) आर्य विज्ञापय त द्यूतकर मम वचनेनार्यचारुदत्तम्—अहमपि प्रदोष आर्यं प्रेक्षितुमागच्छामीति । (मित्तेअ कध ण गेण्हिस्स रअणावलिम् । कध झीणकुसुमादो वि सहआरपादवादो मअरन्दबिन्दओ णिवडन्ति । अज्ज विण्णवेहि त जूदिअर मम वअणेण अज्जचारुदत्तम्— अह पि पदोसे अज्ज पेक्खिदु आअच्छामि[2] त्ति ।)

**विदूषक**—(स्वगतम् ।) किमन्यत्तत्र गत्वा ग्रहीष्यति । (प्रकाशम् ।) भवति भणामि । (स्वगतम् ।)—निवर्ततामस्माद्गणिकाप्रसङ्गादिति । (इति निष्क्रान्त ।) (कि अण्ण तहि गदुअ गेण्हिस्सदि । भोदि भणामि ।—णिअत्तीअदु इमादो गणिआपसङ्गादो त्ति ।)

**वसन्तसेना**—चेटि गृहाणैतमलकारम् । चारुदत्तमभिरन्तु गच्छाव । (हञ्जे गेण्ह एद अलकारअम् । चारुदत्त अहिरमिदु गच्छम्ह ।)

**चेटी**—आर्ये पश्य पश्य । उन्नमत्यकालदुर्दिनम् । (अज्जए पेक्ख पेक्ख । उण्णमदि अकालदुद्दिणम् ।)

[3]वसन्तसेना—

> **उदयन्तु नाम मेघा भवतु निशा वर्षमविरत पततु ।**
> **गणयामि नैव सर्वं दयिताभिमुखेन हृदयेन ॥ ३३ ॥**

चेटि हार गृहीत्वा लघ्वागच्छ । (हञ्जे हारं गेण्हिअ लहु[4] आअच्छ ।)

(इति निष्क्रान्ता सर्वे ।)

[5]मदनिकाशर्विलको नाम चतुर्थोऽङ्क ।

---

१ इद नास्ति क्वचित् २ आगमिस्समिति ३ अस्मात्पर— सस्कृतमाश्रित्य इत्यधिक क्वचित्. ४ लहु लहु. ५ मृच्छकटिके ०टिकप्रकरणे चतु०.

VID —What then ? Is not your ladyship disposed to accept this jewel-necklace ?

VAS —( *Laughs, looking at the face of her* Maid ) O Maitreya, how shall I not accept the jewel necklace ( *Taking it keeps it by her side, and to herself* ) How ! Even from the mango-tree denuded of all blossoms there still do fall drops of honey ! ( *Aloud* ) Sir, please tell the worthy Charudatta, the gambler, in my name, that I too shall be visiting him this evening

VID —(*To himself*) What other thing will she get by going there ? ( *Aloud* ) Lady, I will tell him ( *To himself* ) —That he should refrain from having anything to do with this courtesan. (*Exit*)

VAS.—Girl, keep this ornament We shall ( now ) go to sport in the company of Charudatta

THE MAID—Lady, look, look here, an untimely storm is gathering ( in the sky )

VAS –

Let clouds gather as they will, let it turn night, ( or ) let rain fall incessantly With my heart yearning for my beloved, I care not for all of them (33)

Girl, take a garland and come quickly

( *Exeunt Omnes* )

*End of the Act IV, Styled*

' Madanika and Sarvilaka '

## पञ्चमोऽङ्कः ।

(तत प्रविशत्यासनस्थ सोत्कण्ठश्चारुदत्त ।)

चारुदत्त —( ऊर्ध्वमवलोक्य । ) उन्नमत्यकालदुर्दिनम् । यदेतत्

आलोकित गृहशिखण्डिभिरुत्कलापै-
हंसैर्यियासुभिरपाकृतमुन्मनस्कै[1] ।
आकालिक सपदि दुर्दिनमन्तरिक्ष-
मुत्कण्ठितस्य हृदय च समं रुणद्धि ॥ १ ॥

अपि च ।

मेघो जलार्द्रमहिषोदरभृङ्गनीलो
विद्युत्प्रभारचितपीतपटोत्तरीय ।
आभाति सहतबलाकगृहीतशङ्ख
ख केशवोऽपर इवाक्रमितु प्रवृत्त ॥ २ ॥

---

पूर्वाङ्केऽङ्कावतारेणैव सूचितस्य प्रकरणनायकस्य प्रवेश । * [ अत्राङ्के तावदासमाप्ति वर्षर्तुवणन चारुदत्तेन वसन्तसेनाया च विटेन च यथायथ क्रियते । तदिद वसन्तसेनाचारुदत्तयोरन्योनानुरागोद्दीपनविभावत्वेनावतरतीति ध्येयम् इति ल० दी० ।] [अधुना पूर्वाङ्कान्ते सूचित वसन्तसेनाया अभिसारिकावेषेण चारुदत्ताभिसरणमुपक्षेप्तु पूर्वाङ्कान्तसूचितस्य नायकस्य प्रवेश निर्दिशति-तत प्रविशतीत्यादिना । सोत्कण्ठ वसन्तसेनाविषयकोत्कण्ठासहित इत्यर्थं । इत आरभ्याङ्कसमाप्ति यावदगर्भसधि ।] आलोकितमिति । [ उद्गत कलापो येषा तै उत्कलापै उन्नमितबर्हे गृहशिखण्डिभि आलोकितम् । उन्मनस्कै उत्कण्ठितै यियासुभि मानस सरो

---

*अस्मात्पर—तथा चोक्तम्—'प्रवेशश्चूलिका चैव तथा विष्कम्भकोऽपर । अङ्कावतारोऽङ्कमुखमर्थोपक्षेपपञ्चकम् ॥' इति । प्रवेशयतीति प्रवेश । पचाद्यच् । प्रवेशको ण्वुलन्त उच्यते । अधमपात्रप्रयोज्य प्रवेशक । तदुक्तम्—'भृत्यवर्गकथावच्च कर्तव्यस्तु प्रवेशक । अन्तर्जवनिकासस्थैस्तथा मागधबन्दिभि ॥ अर्थोपक्षेपण यत्र क्रियते सा हि चूलिका ॥ विष्कम्भस्तु द्विधा सोऽय शुद्ध सकीर्ण एव च । शुद्धो मध्यमपात्रेण सकीर्णो मध्यमाधमै ॥' इति ॥—इत्यधिको ग्रन्थष्टीकायामुपलभ्यमानोऽप्यनुपयोगित्वान्नात्र निवेशित ।

---

१ उपाकृत

अपि च ।

केशवगात्रश्यामः कुटिलबलाकावलीरचितशङ्खः ।
[1]विद्युद्गुणकौशेयश्चक्रधर इवोन्नतो मेघः ॥ ३ ॥

एता निषिक्तरजतद्रवसंनिकाशा
धारा जवेन पतिता जलदोदरेभ्यः ।
विद्युत्प्रदीपशिखया क्षणदृष्टनष्टा-[2]
श्छिन्ना इवाम्बरपटस्य दशाः पतन्ति ॥ ४ ॥

ससक्तैरिव चक्रवाकमिथुनैर्हंसैः प्रडीनैरिव
व्याविद्धैरिव मीनचक्रमकरैर्हर्म्यैरिव प्रोच्छ्रितैः ।
तैस्तैराकृतिविस्तरैरनुगतैर्मेघैः समभ्युन्नतैः
पत्रच्छेद्यमिवेह भाति गगनं [3]विश्लेषितैर्वायुना ॥ ५ ॥

एतत्तद्धृतराष्ट्रवक्त्रसदृशं[4] मेघान्धकारं नभो
हृष्टो गर्जति चातिदर्पितबलो दुर्योधनो वा शिखी ।
अक्षद्यूतजितो युधिष्ठिर इवाध्वानं[5] गतः कोकिलो
हंसाः संप्रति पाण्डवा इव वनादज्ञातचर्यां[6] गताः ॥ ६ ॥

(विचिन्त्य ।) चिरं खलु कालो मैत्रेयस्य वसन्तसेनायाः सकाशं गतस्य । नाद्या-प्यागच्छति ।

छन्दः ॥ ३ ॥ एता इति । निषिक्तं स्रावितं यः रजतद्रवः तस्य सदृश्यः ०द्रव-संनिकाशाः । जलदोदरेभ्यः जवेन वेगेन पतिताः । विद्युदेव प्रदीपशिखा तया क्षणं दृष्टाः पश्चान्नष्टाः । एताः धाराः वर्षोदकस्येति शेषः । छिन्ना अम्बरमेव पटः तस्य दशाः अग्राणीव पतन्ति । वसन्ततिलकं वृत्तम् ॥ ४ ॥ ससक्तैरिति । ससक्तैः अन्योन्यं मिलितैः चक्रवाकमिथुनैः इव । प्रडीनैः उत्पतितैः हंसैः इव । व्याविद्धैः समुद्रक्षोभादितस्ततः उत्क्षिप्तैः मीनचक्रैः मकरैश्च । प्रोच्छ्रितैः ऊर्ध्वं गतैः हर्म्यैः इव । एतादृशैः तैस्तैः बहुविधैः आकृतिविस्तरैः अनुगतैः प्राप्तानेकाकृतिविस्तरैरिति यावत् । समभ्युन्नतैः वायुना विश्लेषितैश्च मेघैः इह एतद्भूतलोर्ध्वभागे गगनं पत्रच्छेद्यमिव पत्रच्छेदैर्घटितं चित्रमालेख्यमिव भाति । उपमालंकारः । शार्दूलविक्रीडितं छन्दः । ] प्रडीनैरिति कर्मणि क्तः । व्याविद्धैर्भ्रान्तैः चक्रं समूहः । पत्रस्य छेदः खण्डनं विचलं यत्र चित्रे तत्पत्रच्छेद्यं चित्रम् । तदिव गगनं शोभते ॥ ५ ॥ एतदिति । [ मेघैरन्धकारो यस्मिन् तद् एतन्नभः । तत्प्रसिद्धं धृतराष्ट्रचक्रं कौरवकटकं तेन सदृशम् । 'सादृश्यं चानयोराभूवियन्मण्डलमन्धकारकारित्वेन विनष्टचन्द्रार्कतया च बोध्यम्' इति ल० दी० । ०वक्त्र० इति पाठे धृतराष्ट्रवक्त्रे दृष्टिशून्यत्वादन्ध-

१ विद्युद्गण २ नष्टदृष्टा.–दष्टा. ३ विश्लेषित. ४ वक्त्र ५ वारण्य. ६ चर्यं.

Moreover—

There rises forth a cloud, dark like the body of Vishnu, forming an appearance of conches by means of the crooked lines of cranes, and having the ( yellow ) siken mantle in the form of the streaks of lightning,—as though it were Vishnu ( *lit* the discus-bearer ) himself, ( who is called Kesava and is dark bodied, who wields a conch white and shaped like a curved line of cranes, and who wears a silken garment made of threads bright like streaks of lightning ) ( 3 )

Here these streams of water, resembling ( downpours of ) molten silver, dropped rapidly from the interiors of clouds, fall, like the rent hems of the garment of the sky, seen for a moment in ( the light of ) the flame of the lamp of lightning, and then lost ( to view ) ( 4 )

This sky looks as if it had been adorned with decorative paintings ( of leafy lines ), owing to the high-soaring clouds, scattered by the wind, and assuming various expansive shapes (some) resembling thronging couples of *Chakravaka* birds, ( some ) flying swans, ( some ) alligators and fish-swarms thrown about pell-mell, and ( some ) lofty mansions ( 5 )

Here is this sky, darkened with clouds, that resembles the army of the Kauravas ( producing a darkness like that of the clouds ) This peacock, greatly flushed with the pride of his vigour, is shouting in glee, like Duryodhana whose army was mightily proud The cuckoo has ceased cooing, like Yudhishthira taking to the path ( of the forest ) when conquered at dice-play And, on account of the ( muddy ) water, the swans have now gone off to dwell in an unknown place, like the Pandavas living incognito after leaving the forest (6)

(*Reflecting*) It is a long time since Maitreya went to Vasantasena How is it that he does not come even now ?

---

कार । नभसि सूर्यचन्द्रमसोरिति सादृश्यम् । अतिदर्पित बल सार यस्य स शिखी मयूर । अतिदर्पित बल सैन्य यस्य स दुर्योधन वा इव । वा शब्द इवार्थे । गर्जति । अक्षद्यूते जित युधिष्ठिर अध्वान वनमार्गमिव कोकिल अध्वान ध्वनिराहित्य गत । सप्रति हसा वनात जलाद्धेतो पाण्डवा वनादरण्यवासादिव अज्ञातचर्यां गता । मानस सरो गता अदृश्या अभवन्नित्यर्थ ।] धृतराष्ट्रवक्त्रसदृश नष्टचन्द्रार्कत्वात् । वा इवार्थे । शिखी मयूर । वनादिति ल्यब्लोपे कर्मणि पञ्चमी ।

(प्रविश्य)

**विदूषक**—अहो गणिकाया लोभोऽदक्षिणता च यतो न कथाऽपि कृताऽन्या। अनेकधा स्नेहानुसार भणित्वा किमप्येवमेव गृहीता रत्नावली। एतावत्या ऋद्धचा न तयाऽह भणित—आर्य मैत्रेय विश्रम्यताम्। मल्लकेन पानीयमपि पीत्वा गम्यतामिति। तन्मा तावद्दास्या पुत्र्या गणिकाया मुखमपि द्रक्ष्यामि। (सनिर्वेदम्।) सुष्ठु खलूच्यते—अकन्दसमुत्थिता पद्मिनी अवञ्चको वणिक् अचौर सुवर्णकार अकलहो ग्रामसमागम अलुब्धा गणिकेति दुष्करमेते सभाव्यन्ते। तत्प्रियवयस्य गत्वाऽस्माद्गणिकाप्रसङ्गान्निवर्तयामि। (परिक्रम्य दृष्ट्वा।) कथ प्रियवयस्यो वृक्षवाटिकायामुपविष्टस्तिष्ठति। तद्यावदुपसर्पामि। (उपसृत्य।) स्वस्ति भवते। वर्धता भवान्। (अहो गणिआए लोभो अदक्खिणदा अ जदो ण कधा वि किदा अण्णा। अणेकहा[1] सिणेहाणुसार भणिअ किं पि एअमेअ गहिदा रअणावली। एत्तिआए ऋद्धीए ण तए अह[2] भणिदो—अज्ज मित्तेअ वीसमीअदु। मल्लकेण[3] पाणीअ पि पिबिअ गच्छीअदुत्ति। ता मा दाव दासीएधीआए गणिआए मुह पि पेक्खिस्सम्। सुट्ठु क्खु वुच्चदि—अकन्दसमुत्थिता पउमिणी अवञ्चओ वाणिओ अचोरो सुवण्णआरो अकलहो गामसमागमो अलुद्धा गणिआ त्ति दुक्कर एदे सभावीअन्ति। ता पिअवअस्स गदुअ इमादो गणिआपसङ्गादो णिवत्तावेमि। कध पिअवअस्सो रुक्खवाडिआए उवविट्टो चिट्ठदि। ता जाव उवसप्पामि। सोत्थि भवदे[4]। वड्ढदु भवम्।)

**चारुदत्त**—(विलोक्य।) अये सुहृन्मे[5] मैत्रेय प्राप्त। वयस्य स्वागतम्। आस्यताम्।

**विदूषक**—उपविष्टोऽस्मि। (उवविट्टो[6] म्हि।)

**चारुदत्त**—वयस्य कथय तत्कार्यम्।

**विदूषक**—तत्खलु कार्यं विनष्टम्। (त क्खु कज्ज विणट्टम्।)

**चारुदत्त**—किं[7] तया न गृहीता रत्नावली।

**विदूषक**—कुतोऽस्माकमेतावद्भागधेयम्। नवनलिनकोमलमञ्जलिं मस्तके कृत्वा प्रतीष्टा। (कुदो अम्हाण एत्तिअ[8] भाअधेअम्[9]। णवणलिणकोमल अञ्जलिं मत्थए कदुअ पडिच्छिआ।)

**चारुदत्त**—तत्किं ब्रवीषि विनष्टमिति।

**विदूषक**—भो कथ न विनष्ट यदभुक्तपीतस्य चौरैरपहृतस्याल्पमूल्यस्य सुवर्णभाण्डस्य कारणाच्चतु समुद्रसारभूता रत्नमाला हारिता। (भो कध ण विणट्ट ज अभुत्तपीदस्स चोरेहिं अवहिदस्स अप्पमुल्लस्स सुअण्णभण्डअस्स कारणादो चदुस्समुद्दसारभूदा रअणमाला हारिदा।)

---

१ अणाअरेण ज्जेव अभणिअ किं मि एअमेअ इ (अनादरेणैवाभणित्वा किमप्येवमेव इ) २ एव पि ३ गल्ल० ४ भो ते. ५ कथ सु० ६ ०विठ्ठोम्हि ७ किं न ८ एत्तिआ. ९ भागधेआ

( *Entering*)

VID —Oh, the greed and the want of courtesy of that courtesan, that she did not even talk about anything else ! She spoke variously about something in a manner befitting her affection and thus accepted the jewel necklace With all that wealth she did not say to me—" Sir Maitreva, rest yourself ( here ), you may depart after you have drunk water at least, in a cup " Never then shall I so much as even look at the face of that slave born harlot ! ( *Sorrowfully* ) Truly do they say " A lotus plant that grows without a root, a tradesman that does not cheat, a goldsmith that doesn't steal, a village meeting that is without a quarrel, and a courtesan that is not avaricious,—these are hard to be found ( or conceived ) " So I'll go to my friend and dissuade him from this his attachment to that courtesan ( *Walking about and observing* ) How ! Here's my dear friend sitting in the garden Well, I'll approach him ( *Approaching* ). My greetings to you ! May you prosper !

CHAR.—( *Seeing* ) Ah ! My friend Maitreya has come ! Welcome, friend ! Pray be seated

VID —I have taken my seat

CHAR —Friend, tell me about that business

VID —Well, that business has failed !

CHAR —What, did she not accept that jewel-necklace ?

VID —Whence could we have so much luck ! She took it, placing on her head her folded hands delicate like fresh waterlilies.

CHAR —Then how do you say that the business failed ?

VID —Friend, how has it not failed, since you have given away the jewel necklace, the very essence ( as it were ) of the four oceans, in exchange for a golden casket of ( comparatively ) little value, that we neither ate nor drank, and that was stolen by thieves ?

---

वन प्राप्येत्यर्थं ॥ ६ ॥ पाठान्तरे–नैव कथा कथ हारितमलकारभाण्डमित्यादिका नैव कथानुसार. कुतोऽस्या रत्नावल्या भाव इत्यादिक । मल्लको भाजनविशेष । तन्मा तावत् । यद्भोजनाद्यर्थमपि न तथा भणितोऽहम् । चोरैरेवापहृतस्य । यमिति । [तु २९ श्लो. द्रष्टव्य ] ॥७॥ बहुप्रत्यवायात् बहव प्रत्यवाया दोषा यत्र तस्मात् ।

**चारुदत्त**—वयस्य मा मैवम्[1] ।

य समालम्ब्य विश्वास न्यासोऽस्मासु तया कृत ।
तस्यैतन्महतो मूल्य[2] प्रत्ययस्यैव दीयते ॥ ७ ॥

**विदूषक**—भो वयस्य एतदपि मे द्वितीय सतापकारण यत्सखीजनदत्तसज्ञया पटान्तापवारित मुख कृत्वाहऽमुपहसित तदह ब्राह्मणो भूत्वेदानी भवन्त शीर्षेण पतित्वा विज्ञापयामि—निवर्त्यतामात्माऽस्माद्बहुप्रत्यवायाद्गणिकाप्रसङ्गात् । गणिका नाम पादुकान्तरप्रविष्टेव लेष्टुका दुखेन पुनर्निराक्रियते । अपि च भो वयस्य गणिका हस्ती कायस्थो भिक्षुश्चाटो रासभश्च यत्रैते निवसन्ति तत्र दुष्टा अपि न जायन्ते । (भो वअस्स एद पि मे दुदिअ[3] सतावकारण ज सहीअणदिण्णसण्णाए पडन्तोवारिद[4] मुह कदुअ अह उवहसिदो[5] । ता अह बम्हणो भविअ दाणि भवन्त सीसेण पडिअ विण्णवेमि—णिवत्तीअदु अप्पा इमादो बहुपच्चवाआदो गणिआपसङ्गादो । गणिआ णाम पादुअन्तरप्पविट्टा विअ लेट्ठुआ दुक्खेण उण णिराकरीअदि । अवि अ भो वअस्स गणिआ हत्थी काअत्थओ भिक्खु चाटो रासहो अ जहि एदे णिवसन्ति तहि दुट्टा वि ण जाअन्ति ।)

**चारुदत्त**—वयस्य अलमिदानी सर्व[6] परिवादमुक्त्वा । अवस्थयैवास्मि निवारित । पश्य ।

वेग करोति तुरगस्त्वरित प्रयातु
प्राणव्ययान्न चरणास्तु तथा वहन्ति ।
सर्वत्र यान्ति पुरुषस्य चला स्वभावा
खिन्नास्ततो[7] हृदयमेव पुनर्विशन्ति ॥ ८ ॥

अपि च वयस्य ।

यस्यार्थास्तस्य सा कान्ता धनहार्यो ह्यसौ जन ।

( स्वगतम् । ) न गुणहार्यो ह्यसौ जन ( प्रकाशम् । )

वयमर्थै परित्यक्ता ननु त्यक्तैव सा मया ॥ ९ ॥

**विदूषक**—(अधोऽवलोक्य । स्वगतम् ।) यथैष ऊर्ध्वं प्रेक्ष्य दीर्घं नि श्वसिति तथा तर्कयामि मया विनिवार्यमाणस्याधिकतर वृद्धाऽस्योत्कण्ठा । तत्सुष्ठु खल्वेवमुच्यते—कामो वाम इति । ( प्रकाशम् । ) भो वयस्य भणित च तया—भण चारुदत्तमद्य प्रदोषे मयाऽत्रागन्तव्यमिति । तत्तर्कयामि रत्नावल्याऽपरितुष्टाऽपर याचितुमागमिष्यतीति । (जधा एसो उद्ध पेक्खिअ दीह णिस्ससदि तधा तक्केमि मए विणिवारिअन्तस्य अधिअदर वड्ढिदा से उक्कण्ठा । ता सुठ्ठु क्खु एव्व वुच्चदि—कामो वामो त्ति । भो वअस्स भणिद अ ताए—भणेहि चारुदत्त अज्ज पओसे मए एत्थ आअन्तव्व त्ति । ता तक्केमि रअणावलीए अपरितुट्ठा अवर मग्गिदु आअमिस्सदि त्ति ।)

---

१ मैवम् पश्य. २ मौल्य. ३ दुदिअस०. ४ पडन्तावबारिद ५ ०सिदोम्हि ६ सर्वपरि०. ७ तदा.

CHAR.—Nay, friend, say not so!

This price is being paid, ( not for that ornament, but ) for that high trust, by relying on which she kept that deposit with us (7)

VID.—O friend, I have this another reason, too, for being angry, inasmuch as she made a sign to her maid, and, veiling her face with the end of her garment, she laughed derisively at me. So I, being a Brahmana, now bow to you with my bent head and request you that you should turn yourself away from this affair with that courtesan, which is full of many pitfalls A courtesan is just like a pebble got inside a shoe, that is got rid of afterwards with great difficulty Moreover, O friend, a courtesan, an elephant, a Kayastha ( a scribe ), a mendicant, a spy and a donkey,—where these dwell, there not even villains can flourish

CHAR.—Friend, now you need no longer give vent to all these strictures, I am warded off ( from that pursuit ) by my condition itself See

A ( wearied ) horse puts on speed to go quickly, but his legs do not move to that extent for want of vigour ( Similarly ), the volatile desires of a man wander everywhere ( *i e* aspire to everything ), but, weary ( at failure ), they afterwards enter once more ( *i e* lie dormant ) in his bosom (8)

Moreover, friend,—

Whoever has riches, will have that lady, for she is to be bought with money

( *To himself* ) No, she is surely to be bought with merits! ( *Aloud* )—

But riches have left me, she therefore is, of course, left by me (9)

VID.—( *Looking down, to himself* ) Since he is looking upward and sighing deeply, I conclude that his passion must have become still more inflamed as I tried to dissuade him So it has been truly said that " Love is perverse " ( *Aloud* ) O friend, she also said " Tell Charudatta that I shall visit him there this evening." So I guess that not being satisfied with that jewel necklace, she is coming to demand something in addition

---

चाटो क्षुद्रविषयभोक्ता। न जायन्ते वृद्धिं गच्छन्ति। वेगमिति। [ तुरगस्त्वरित प्रयातु वेग करोति किं तु प्राणव्ययात् शक्तिक्षयात् तस्य चरणा तथा वेगानुरूप न

**चारुदत्त**—वयस्य आगच्छतु । परितुष्टा यास्यति ।

**चेट**—(प्रविश्य ।) अवेत मानवा ।

यथा यथा वर्षत्यभ्रखण्ड तथा तथा तिम्यति पृष्ठचर्म ।
यथा यथा लगति शीतवातस्तथा तथा वेपते मे हृदयम् ॥ १० ॥

( प्रहस्य । )

वश वादयामि सप्तच्छिद्र सुशब्द वीणा वादयामि सप्ततन्त्री नदन्तीम् ।
गीत गायामि गर्दभस्यानुरूप को मे गाने तुम्बुरुर्नारदो वा ॥ ११ ॥

आज्ञप्तोऽस्म्यार्यया वसन्तसेनया—कुम्भीलक गच्छ त्व ममागमनमार्यचारुदत्तस्य निवेदयेति । तद्यावदार्यचारुदत्तस्य गेह गच्छामि । (परिक्रम्य प्रविष्टकेन दृष्ट्वा ।) एष चारुदत्तो वृक्षवाटिकाया तिष्ठति । एषोऽपि स दुष्टबटुक । तद्यावदुपसर्पामि । कथमाच्छादित द्वार वृक्षवाटिकाया । भवतु । एतस्य दुष्टबटुकस्य सज्ञा ददामि । ( इति लोष्टगुटिका[1] क्षिपति ।) (अवेध माणहे ।

जधा जधा वश्शदि अब्भखण्डे तधा तधा तिम्मदि पुट्ठिचम्मे ।
जधा जधा लग्गदि शीदवादे तधा तधा वेवदि मे हलक्के[2] ॥
वश वाए शत्तछिद्द शुशद्द वीण वाए शत्ततन्ति णदन्ति ।
गीअ गाए गद्दहश्शाणुलूअ के मे गाणे तुम्बुलू णालदे वा ॥

आणतम्हि अज्जआए वशन्तशेणाए—कुम्भीलआ गच्छ तुम मम आगमण अज्जचारुदत्तश्श णिवेदेहि त्ति । ता जाव अज्जचारुदत्तश्श गेह गच्छामि । एशे चालुदत्ते रुक्खवाडिआए चिट्ठदि । एशे वि शे दुट्टबडुके । ता जाव उपशप्पेमि । कध ढक्किदे दुवाले रुक्खवाडिआए । भोदु । एदश्श दुट्ठबडुकश्श शण्ण देमि ।)

**विदूषक**—अये क इदानीमेष प्राकारवेष्टितमिव कपित्थ मा लोष्टकैस्ताडयति । (अए को दाणि एसो पाआरवेट्टिद विअ कइत्थ म लोट्टकेहि ताडेदि[3] ।

**चारुदत्त**—आरामप्रासादवेदिकाया क्रीडद्भि पारावतै पातित भवेत् ।

**विदूषक**—दास्या पुत्र दुष्टपारावत तिष्ठ तिष्ठ यावदेतेन दण्डकाष्ठेन सुपक्वमिव चूतफलमस्मात्प्रासादाद्भूमौ पातयिष्यामि । (इति दण्डकाष्ठमुद्यम्य धावति ।) (दासीएपुत्त[4] दुट्टपारावअ चिट्ठ चिट्ठ जाव एदिणा दण्डकट्ठेण सुपक्क विअ चूअफल इमादो पासादादो भूमीए पाडइस्सम् ।)

---

वहन्ति । पुरुषस्य चला स्वभावा मनोवृत्तय सर्वत्र सर्वेषु विषयेषु यान्ति । तत खिन्ना अलब्धकामत्वात्खेद प्राप्ता पुन उत्पत्तिस्थान हृदयमेव प्रविशन्ति । तत्रैव विलीयन्ते इत्यर्थ । वसन्ततिलक वृत्तम् ] ॥ ८ ॥ **यस्येति** । असौ जन गणिका वसन्तसेना ॥ ९ ॥ [ कामो वाम इति । तदुक्त रामायणे—' वाम कामो मनुष्याणा

---

१ गुटिका २ हडक्के. ३ सीसे ताडेदि

CHAR—Friend, let her come She will go satisfied

CHETA—( *Entering* ) Listen, (all) people!

The more the bank of clouds rains, the more wet does the skin of my back become, and the more the cold wind beats, the more does my heart quake (10)

( *Laughing loudly* )

I can play upon the loud sounding flute with seven holes and ( also ) upon the resounding lute with seven strings I can sing songs just like an ass What is Tumburu or Narada as compared to me, in singing? (11)

I am ordered by her ladyship Vasantasena —"Kumbhilaka, go and inform the worthy Charudatta of my arrival" So I'll go to the house of the noble Charudatta ( *Walks about, entering and seeing* ) Here is Charudatta, seated in his garden Here, too, is that rascally fellow Well, then, I'll approach them How! The gate of the garden is closed! Never mind, I'll make a sign to this rascally chap ( *Throws lumps of mud* )

VID—Ah! Who is this here that is now pelting me with clods, as if I were a *Kapittha* tree enclosed within a fence?

CHAR—Perhaps ( a clod ) might have been let fall by the pigeons playing on the terrace of the garden house

VID—You slave-born wretch of a pigeon, you just wait till with this wooden staff I fell you on the ground from off this house, as if you were a ripe mango-fruit! ( *Lifts his wooden staff and runs* )

---

यस्मिन्किल निबध्यते। जने तस्मिन्ननुक्रोश स्नेहश्च किल जायते॥' इति।] अवेत अवगच्छत मानवा। यथा यथेति। उपेन्द्रवज्रया श्लोक। अभ्रखण्ड [ मेघशकल मेघसमूहो वा।] तिम्यति आर्द्रीभवति पृष्ठचर्म॥ १०॥ वशमिति। उपजातिविशेष। पादत्रय जगतीजात्या। चतुर्थ पाद शालिन्या। सप्तच्छिद्र सप्तरन्ध्रम्। को मे तुल्यस्तुम्बुरुनारदो वा॥ ११॥ [ तत्पातनार्थम्। आरामप्राकारेति। आराम उपवन तद्गतप्राकारवेष्टित प्राचीरपरिवृत ] कपित्थ कपित्थवृक्षफलार्थमिव। [ प्रासादस्य वेदिकायाम। तपस्वी वराक। वृद्धरङ्क वृद्धभिक्षुः।] इन्द्रमहकामुक काक। 'इन्द्रमहकाकपोदओ [ ०काकपोतक ] विअ' इति पाठो व्यक्तार्थ एव। [ कान्तमभिसरतीत्यभिसारिका। उज्ज्वलवेषत्व वेश्यात्वात्। तदुक्त—'विचित्रोज्ज्वलवेषा तु चलन्नूपुरनि स्वना। प्रमोदस्मेरवदना स्याद्वेश्याऽ-

**चारुदत्त** —(यज्ञोपवीतं[1] आकृष्य ।) वयस्य उपविश । किमनेन । तिष्ठतु दयितासहितस्तपस्वी पारावत ।

**चेट** — कथ पारावत पश्यति । मा न पश्यति । भवतु । अपरया लोष्ट-गुटिकया पुनरपि ताडयिष्यामि । (तथा करोति ।) (कध पारावद पेक्खदि । अ ण पेक्खदि । भोदु । अवराए लोट्टगुडिकाए पुणो वि ताडइस्सम् ।)

**विदूषक** —( दिशोऽवलोक्य[2] ।) कथ कुम्भीलक । तद्यावदुपसर्पामि । (उप-सृत्य । द्वारमुद्घाटच ।) अरे कुम्भीलक प्रविश । स्वागत ते । (कध कुम्भीलओ । ता जाव उवसप्पामि । अरे कुम्भीलअ पविश । साअद दे ।)

**चेट** —(प्रविश्य ।) आर्य वन्दे । (अज्ज वन्दामि ।)

**विदूषक** —अरे कुत्र त्वमीदृशे दुर्दिनेऽन्धकारे आगत (अरे कहिं तुम ईदिसे दुद्दिणे अन्धआरे आअदो ।)

**चेट** —अरे एषा सा । (अले एशा शा ।)

**विदूषक** —कैषा का । (का एसा का ।)

**चेट** —एषा सा । (एशा शा ।)

**विदूषक** —किमिदानी दास्या पुत्र दुर्भिक्षकाले वृद्धरक इवोर्ध्वक श्वासा-यसे—एषा सा सेति । (कि दाणि दासीएपुत्ता[3] दुब्भिक्खकाले वुड्ढरक्को विअ उद्धक सासाअसि—एमा सा सेत्ति ।)

**चेट** —अरे त्वमपीदानीमिन्द्रमहकामुक इव सुष्ठु किं काकायसे—का केति । (अले तुम पि दाणि इन्दमहकामुको विअ सुट्ठु किं काकाअसि—का केत्ति ।)

**विदूषक** —तत्कथय । (ता कहेहि ।)

**चेट** —( स्वगतम् । ) भवतु । एव भणिष्यामि । ( प्रकाशम् । ) अरे प्रश्न ते दास्यामि । (भोदु । एव्व भणिश्शम् । अले पण्ह दे दइश्शम् ।)

**विदूषक** —अह ते मस्तके पाद दास्यामि । (अह दे मुण्डे गोड दइस्सम् ।)

**चेट** —अरे जानीहि तावत्तेन हि कस्मिन्काले चूता मुकुलिता भवन्ति । ( अले जाणाहि दाव[4] तेण हि कश्शि काले चूआ मौलेन्ति ।)

**विदूषक** —अरे दास्या पुत्र ग्रीष्मे । (अरे दासीएपुत्ता गिम्हे ।)

**चेट** —(सहासम् ।) अरे न हि नहि । (अले ण हि ण हि ।)

**विदूषक** —( स्वगतम् । ) किमिदानीमत्र कथयिष्यामि । ( विचिन्त्य । ) भवतु । चारुदत्त गत्वा प्रक्ष्यामि । ( प्रकाशम् ।) अरे मुहूर्तक तिष्ठ । ( चारुदत्त-मुपसृत्य ।) भो वयस्य प्रक्ष्यामि तावत्कस्मिन्काले चूता मुकुलिता भवन्ति । (किं दाणि एत्थ कहिस्सम् । भोदु । चारुदत्त गदुअ पुच्छिस्सम् । अरे मुहुत्तअ चिट्ठ । भो वअस्स पुच्छिस्स दाव कस्सि काले चूआ मौलेन्ति ।)

---

१ ०वीतेन. २ विलोक्य ३ आ दासीए० ४ दाव इति नास्ति क्वचित्

CHAR —( *Holding him by his sacred thread* ) Sit down, friend, why do you bother yourself with him ? Leave that poor pigeon alone, who is in the company of his mate

CHETA—How ! He is looking at the pigeon, and not at me ! Well, I'll again strike him with another lump of mud ( *Does so* ).

VID —( *Looking in all directions* ), Ah ! It is Kumbhilaka ! Well then, I'll go to him. ( *Approaching and opening the door* ) Well, Kumbhilaka, come in, you are welcome

CHETA—( *Entering* ). Sir, I salute you !

VID.—Where have you come, man, on such a rainy day, and in darkness ?

CHETA—You see, she is here

VID —What 'she' (you mean) ? What 'she' ?

CHETA—*She* See ? *She* !

VID —You son-of-a-slave, what makes you now hiss forth 'she-see-she,' like an old beggar in famine-time ?

CHETA—Eh, why do you too now shout out—'what, what' (ka, ka), regularly like a greedy crow (crowing) during Indra's festival ?

VID —All right. Tell me

CHETA—( *To himself* ) Well, I'll speak thus ( *Aloud* ) Eh, I'll set a puzzle to you !

VID —And I'll set my foot on your head !

CHETA—Oh, all right ! Then just find out in what season the mango-trees blossom.

VID —You son-of-a-slave, in the *Grishma* (summer) season !

CHETA—( *Laughing* ) Ah, no ! no !

VID —( *To himself* ) What answer then should I make here ? ( *Pondering* ) Well, I'll go to Charudatta and ask him ( *Aloud* ) Eh, you wait awhile. ( *Approaching* Charudatta ) O friend, let me just ask you in what season the mango trees blossom

---

भिसरेद्यदि ॥' इति ] अपभ्रेति । [ रतिसमये लज्जा तस्या प्रणयिनी प्रीतिमती रतिक्षेत्रे क्रीडाभूमौ एव रङ्गे प्रियैः पथिकसार्थैरनुगता सलील गच्छन्ती ] एषा वसन्तसेनेति सन्निकर्षेण । अपभ्रा पभ्ररहिता श्रीर्लक्ष्मीः अनङ्गस्य कामस्य

चारुदत्त —मूर्ख वसन्ते ।

विदूषक —(चेटमुपगम्य ।) मूर्ख वसन्ते । ( मुक्ख वसन्ते ।)

चेट —द्वितीय ते प्रश्न दास्यामि । सुसमृद्धाना ग्रामाणा का रक्षा करोति । (दुदिअ दे पण्ण दइश्शम् । शुशमिद्धाण गामाण का लक्खअ कलेदि ।)

विदूषक —अरे रथ्या । (अरे रच्छा ।)

चेट —(सहासम् ।) अरे न हि न हि । ( अले ण हि ण हि ।)

विदूषक —भवतु । सशये पतितोऽस्मि । ( विचिन्त्य ।) भवतु । चारुदत्त पुनरपि प्रक्ष्यामि । ( पुनर्निवृत्य चारुदत्त तथैवोदाहरति । ) (भोदु । ससए पडिदोम्हि । भोदु । चारुदत्त पुणो वि पुच्छिस्सम् । )

चारुदत्त —वयस्य सेना ।

विदूषक —(चेटमुपगम्य ।) अरे दास्या पुत्र सेना । (अरे दासीएपुत्ता सेणा ।)

चेट —अरे द्वे अप्येकस्मिन्कृत्वा शीघ्र भण । (अले दुवे वि एक्कश्शि कदुअ शिग्घ भणाहि ।)

विदूषक —सेनावसन्ते । (सेणावसन्ते ।)

चेट —ननु परिवृत्य भण । (ण पलिवत्तिअ भणाहि ।)

विदूषक —(कायेन परिवृत्य ।) सेनावसन्ते । (सेणावसन्ते ।)

चेट —अरे मूर्ख बटुक पदे परिवर्तय । (अले मुक्ख बडुका[1] पदाइ पलिवत्तावेहि ।)

विदूषक —(पादौ परिवर्त्य ।) सेनावसन्ते । (सेणावसन्ते ।)

चेट —अरे मूर्ख अक्षरपदे परिवर्तय । ( अले मुक्ख अक्खलपदाइ पलिवत्तावेहि ।)

विदूषक —(विचिन्त्य ।) वसन्तसेना । (वसन्तसेणा ।)

चेट —एषा साऽऽगता । (एशा शा आअदा ।)

विदूषक —तद्यावच्चारुदत्तस्य निवेदयामि । ( उपसृत्य । ) भो चारुदत्त धनिकस्त आगत । (ता जाव चारुदत्तस्स णिवेदेमि । भो चारुदत्त धणिओ दे आअदो । )

चारुदत्त – कुतोऽस्मत्कुले धनिक ।

विदूषक —यदि कुले नास्ति तद्द्वारेऽस्ति । एषा वसन्तसेनाऽऽगता । (जइ कुले णत्थि ता दुवारे अत्थि । एसा वसन्तसेना आअदा ।)

चारुदत्त —वयस्य किं मा प्रतारयसि '

विदूषक —यदि मे वचने न प्रत्येषि तदेन कुम्भीलक पृच्छ । अरे दास्या पुत्र कुम्भीलक उपसर्प । (जइ मे वअणे ण पत्तिआअसि ता एद कुम्भीलअ पुच्छ । अरे दासीएपुत्ता कुम्भीलअ उवसप्प ।)

---

१ बटुवका (बटुवक)

CHAR.—In *Vasanta* ( Spring ), you fool !

VID —( *Going to Cheta* ) In *Vasanta* ( Spring ), you fool !

CHETA—I'll set you another puzzle —Who affords protection to prosperous villages ?

VID —Eh, *Rathya* ( military cars ).

CHETA—( *Laughs* ). Ah, no ! no !

VID —Oh ! well, I have fallen into doubt ( *Pondering* ). Never mind, I'll again ask Charudatta. ( *Again goes back and asks* Charudatta *as before* ).

CHAR —Friend, *Sena* ( the army )

VID —( *Approaching Cheta* ) You son of-a-slave, *Sena* ( the army )

CHETA—Now put the two together and repeat it quickly.

VID —Sena-vasante !

CHETA—No, say it turned around

VID —( *Bodily turning around* ) Sena-vasante !

CHETA—You foolish fellow, turn the *padas* ( words )

VID —( *Turning his* padas, *i e feet* ) Sena-vasante !

CHETA—You idiot, turn the *padas* ( words ) formed by those letters !

VID —( *Pondering* ) Vasanta-sena !

CHETA—Here she has arrived !

VID —Well, I'll just go and tell Charudatta. ( *Approaching* ). Sir Charudatta, a *Dhanika* ( rich person—creditor ) has come to see you !

CHAR —Why should a *Dhanika* ( creditor ) visit my house ?

VID —If not in your house, the *Dhanika* ( rich person ) is at your door Here's Vasantasena come ( to see you ) !

CHAR —Why do you deceive me friend ?

VID —If you don't believe what I say, then ask this Kumbhilaka —You son of a-slave, Kumbhilaka, come here !

---

ललित सुकुमार प्रहरणम् । कुलस्त्रीणा शोक तासा पतीना चित्ताकर्षकत्वेन विश्लेषणादिति भाव । मदन एव वरवृक्षस्तस्य कुसुमम् । अस्तीति शेष । मालापकमलकार । शिखरिणी वृत्तम् ॥ १२ ॥ गर्जन्तीति । वियुक्ताश्च ता वनिताश्च तासा हृदयानुकारा धूसरा इत्यर्थ । शैलशिखरेषु विलम्बिबिम्बा मेघा गर्जन्ति ।

**चेट** —(उपसृत्य ।) आर्य वन्दे । (अज्ज वन्दामि ।)

**चारुदत्त** —भद्र स्वागतम् । कथय सत्य प्राप्ता वसन्तसेना ।

**चेट** —एषा साऽऽगता वसन्तसेना । (एशा शा आअदा वसन्तशेणा ।)

**चारुदत्तः**—(सहर्षम् ।) भद्र न कदाचित्प्रियवचन[1] निष्फलीकृत मया । तद्गृह्यता पारितोषिकम् । (इत्युत्तरीय प्रयच्छति ।)

**चेट** —(गृहीत्वा प्रणम्य सपरितोषम् ।) यावदार्याया निवेदयामि । (इति निष्क्रात ।) (जाव अज्जआए णिवेदेमि ।)

**विदूषक** —भो अपि जानासि किंनिमित्तमीदृशे दुर्दिन आगतेति । (भो अवि जाणासि किंणिमित्त ईदिसे दुद्दिणे आअदेत्ति ।)

**चारुदत्त** —वयस्य न सम्यगवधारयामि ।

**विदूषक** —मया ज्ञातम् । अल्पमूल्या रत्नावली बहुमूल्य सुवर्णभाण्डमिति न परितुष्टाऽपर याचितुमागता । (मए जाणिदम् । अप्पमुल्ला रअणावली बहुमूल्ल सुअण्णभण्डअ त्ति ण परितुट्टा अवर मग्गिदु आअदा ।)

**चारुदत्त** —(स्वगतम् ।) परितुष्टा यास्यति ।

(तत प्रविशत्युज्ज्वलाभिसारिकावेषेण वसन्तसेना सोत्कण्ठा छत्रधारिणी विटश्च ।)

**विट** —(वसन्तसेनामुद्दिश्य ।)

> अपद्मा श्रीरेषा प्रहरणमनङ्गस्य ललित
> कुलस्त्रीणा शोको मदनवरवृक्षस्य कुसुमम् ।
> सलील गच्छन्ती रतिसमयलज्जाप्रणयिनी
> रतिक्षेत्रे रङ्गे प्रियपथिकसार्थैरनुगता ॥ १२ ॥

वसन्तसेने पश्य पश्य ।

> गर्जन्ति शैलशिखरेषु विलम्बिबिम्बा
> मेघा वियुक्तवनिताहृदयानुकारा ।
> एषा रवेण सहसोत्पतितैर्मयूरै
> ख वीज्यते मणिमयैरिव तालवृन्तै ॥ १३ ॥

अपि च ।

> पङ्कक्लिन्नमुखा पिबन्ति सलिल धाराहता दर्दुरा
> कण्ठ मुञ्चति बर्हिण समदनो नीप प्रदीपायते ।
> सन्यास कुलदूषणैरिव जनैर्मेघैर्वृतश्चन्द्रमा
> विद्युन्नीचकुलोद्गतेव युवतिर्नैकत्र सतिष्ठते[2] ॥ १४ ॥

---

१ कदाचिदपि २ विश्राम्यति

CHETA —( *Approaching* ) Sir, I salute you !

CHAR —Welcome, my good man, tell me, has Vasantasena *really* come ?

CHETA—Here she has come, our Vasantasena

CHA'R —( *Joyfully* ). My good fellow, I have never let a welcome announcement go by without bestowing a reward So take this reward ( *Gives his upper garment* )

CHETA--( *Takes it and bows, with delight* ) Well, I'll tell her ladyship ( *Exit* )

VID —Sir, do you know for what purpose she has come on such a rainy day ?

CHAR—Friend, I can't quite understand it

VID —But I do Not being satisfied, as the necklace is of small value and her golden casket more valuable she has come to demand something in addition !

CHAR.—( *To himself* ) She shall go away fully satisfied.

( *Then enter love sick* Vasantasena *brilliantly attired as an* Abhisarika, *accompanied by her* Umbrella bearer *and by* Vita )

VITA—( *With reference to Vasantasena* )

She is the goddess Lakshmi, without the lotus ( in her hand ), she is the lovely weapon of the bodiless one ( Cupid ), She is the ( cause of ) grief to high born ( chaste ) ladies and she is the flower of the excellent tree in the form of Love Exhibiting bashfulness at the time of amorous sports she is followed by hosts of gallants wandering after her, as she walks gracefully over the stage in the form of Love's field ( 12 )

See, Vasantasena, see !

With their forms hanging low on the peaks of mountains, and resembling ( in colour ) the ( darkened ) hearts of ladies in separation, the clouds are thundering, whose roar makes the peacocks start up suddenly, so that the sky is fanned ( by their opened tails ) as though by jewelled fans (13)

And also—

The frogs, pelted by rain-showers, and with their mouths besmirched with mud, are drinking water; the impassioned peacock lets loose his voice, *i e* shrieks loudly , the *nipa* tree ( with its red blossoms ) glows like a bright lamp, the clouds have taken off ( *i e* obscured ) the moon, like rakes ( *lit* disgracers of family ) taking to the life of a *Samnyasin*, while the lightning stays not in one ( fixed ) spot, like a woman born of a low family ( 14 )

वसन्तसेना—भाव सुष्ठु ते भणितम् । एषा[1] हि । (भाव सुठ्ठु दे भणिदम् ।)

मूढे निरन्तरपयोधरया मयैव
कान्त सहाभिरमते यदि किं तवात्र ।
मां गर्जितैरिति[2] मुहुर्विनिवारयन्ती
मार्गं रुणद्धि कुपितेव निशासपत्नी ॥ १५ ॥

विट—भवतु । एवं तावत् । उपालभ्यतां तावदियम् ।

वसन्तसेना—भाव किमनया स्त्रीस्वभावदुर्विदग्धयोपालब्धया[3] । पश्यतु भाव ।

मेघा वर्षन्तु गर्जन्तु मुञ्चन्त्वशनिमेव वा[4] ।
गणयन्ति न शीतोष्णं [5]रमणाभिमुखाः स्त्रियः ॥ १६ ॥

विट—वसन्तसेने पश्य पश्य । अयमपरः

पवनचपलवेगः स्थूलधाराशरौघः
स्तनितपटहनादः[6] स्पष्टविद्युत्पताकः ।
हरति करसमूहं खे शशाङ्कस्य मेघो
नृप इव पुरमध्ये मन्दवीर्यस्य शत्रोः ॥ १७ ॥

वसन्तसेना—एवं न्विदम् । तत्कथमेषोऽपरः । ( एव्वं ण्णेदम् । ता कधं एसो अवरो[7] ।)

एतैरेव यदा गजेन्द्रमलिनैराध्मातलम्बोदरै-
र्गर्जद्भिः [8]सतडिद्बलाकशबलैर्मेघैः सशल्यं मनः ।
तत्किं प्रोषितभर्तृबध्यपटहो[9] हा हा हताशो बकः
प्रावृट् प्रावृडिति ब्रवीति शठधीः क्षारं क्षते प्रक्षिपन् ॥ १८ ॥

---

येषां रवेण रवं श्रुत्वा सहसा उत्पतितैः मयूरैः मणिमयैस्तालवृन्तैरिव खमाकाशं वीज्यते इत्युत्प्रेक्षा । वसन्ततिलकं वृत्तम् ॥ १३ ॥ पङ्केति । पङ्केन कर्दमेन क्लिन्नं मुखं एषां ते पङ्कक्लिन्नमुखाः धाराहताः दर्दुरा भेकाः सलिलं पिबन्ति । समदनः बर्हिणः मयूरः कण्ठं मुञ्चति मुक्तकंठं रौति । नीपः कदम्बवृक्षः प्रदीपायते आरक्त-कुड्मलभरेण प्रदीप इवाचरति । कुलदूषणैः जनैः सन्न्यास इव मेघैः चन्द्रमा वृतः । नीचकुलोत्पन्ना युवतिरिव विद्युदेकत्र न संतिष्ठते । शार्दूलविक्रीडितं छन्दः ॥ १४ ॥ 'कार्यतश्चोत्तमादीनां कार्यो भाषाव्यतिक्रमः' इति भरतोक्त्यनुसारेण वसन्त-सेनायाः संस्कृतोक्तिः ।] मूढे इति । मूढे इति वसन्तसेनायाः साक्षेपसंबोधनम् । [ यदि निरन्तरा पयोधरा यस्या सा तया सान्द्रमेघया । निरन्तरौ सुश्लिष्टौ पयो-धरौ स्तनौ यस्यास्तया च । मयैव सह कान्तः अभिरमते तर्हि अत्र तव किम् ।

---

१ (संस्कृतमाश्रित्य ।) एषा २ रपि ३ दग्धोपा० ४ च. ५ दयिताभि० ६ स्वनित ७ अवरो (संस्कृतमाश्रित्य). ८ तडित्पताक. ९ बद्ध

VAS —Sir, you have described correctly See, here this—

Co-wife in the form of the night is blocking my path in anger, forbidding me now and again with its thundering, as though saying—"You foolish woman, what business have you here when your lover sports with me alone, possessing plump *payodharas* (breasts—clouds) ?" (15)

VITA—Yes, it is as you say You may therefore scold her,

VAS —Sir, what is the use of scolding her who is obstinate as is women's nature ? And sir, observe—

Let the clouds pour in torrents, thunder or shoot forth lightning, women who go to (meet) their lovers do not mind cold or heat (16)

VITA—See, Vasantasena, see ! This other—

Cloud, having its speed augmented by the breeze, discharging a stream of arrows in the form of big torrents, with its rumbling serving as the beat of drums, and displaying banners in the form of lightning, seizes (i e obscures) the cluster of the moon's rays, in the sky, like a king receiving from an enemy, weak in valour, large tributes in the latter's capital,—(a king) having movements rapid like those of the wind, discharging streams of arrows like big torrents, with sounds of drums like the rumbling of clouds, and displaying banners like lightning (17)

VAS —So it is But then how is it that here this another—

Wicked crane, with villainous intentions, and serving as the drum that sounds the doom of ladies whose husbands have gone on a journey, is also crying '*Pravrit, Pravrit*', (Rain, Rain), sprinkling salt on their wounds (as it were), when their minds are already tortured by these thundering clouds dark like big elephants, with their interiors swollen and hanging low, and variegated with cranes and with lightning flashes ? (18)

---

इति कुपिता इव गर्जितैः मुहुः मां निवारयन्ती निशासपत्नी मार्गं रुणद्धि। वसन्ततिलकं वृत्तम्।] पयोधरो मेघः स्तनौ च॥ १५॥ मेघा इति। [रमणाभिमुखा प्रियाभिगामिन्यः]॥ १६॥ अयमपर इति शत्रो पुनर्मध्य इत्यर्थात्। पवनेति। [पवनेन चपलः वेगो यस्य सः। पक्षे पवनवत् चपलो वेगो यस्य। स्थूला धारा एव शरौघा यस्य। पक्षे स्थूलधारा इव शरौघा यस्य। स्तनितं गर्जितमेव पटहनादः यस्य। पक्षे स्तनितवत्पटहनादो यस्य। स्पष्टा विद्युदेव विद्युदिव च पताका यस्य। स मेघः खे शशाङ्कस्य करसमूहं किरणजालं हरति। मन्दवीर्यस्य शत्रोः पुरमध्ये करसमूहं राजदेयद्रव्यमिव। रूपकानुप्राणिता उपमालङ्कारः। श्लेषश्च। मालिनी-

**विट**—वसन्तसेने एवमेतत्। इदमपर पश्य।

**बलाकापाण्डुरोष्णीषं विद्युदुत्क्षिप्तचामरम्।**
**मत्तवारणसारूप्य कर्तुकाममिवाम्बरम्॥ १९॥**

**वसन्तसेना**—भाव पश्य पश्य। (भाव पेक्ख पेक्ख[1]।)

**एतैरार्द्रतमालपत्रमलिनैरापीतसूर्यं नभो**
**वल्मीकाः शरताडिता इव गजा सीदन्ति धाराहताः।**
**विद्युत्काञ्चनदीपिकेव रचिता प्रासादसचारिणी**
**ज्योत्स्ना दुर्बलभर्तृकेव वनिता प्रोत्सार्य मेघैर्हृता[2]॥ २०॥**

**विट**—वसन्तसेने पश्य पश्य।

**एते हि विद्युद्गुणबद्धकक्षा गजा इवान्योन्यमभिद्रवन्त[3]।**
**शक्राज्ञया वारिधरा सधारा[4] गां रूप्यरज्ज्वेव[5] समुद्धरन्ति॥ २१॥**

अपि च पश्य।

**[6]महावाताध्मातैर्महिषकुलनीलैर्जलधरै-**
**श्चलैर्विद्युत्पक्षैर्जलधिभिरिवान्त प्रचलितै।**
**इय गन्धोद्दामा नवहरितशष्पाङ्कुरवती[7]**
**धरा धारापातैर्मणिमयशरैर्भिद्यत इव॥ २२॥**

**वसन्तसेना**—भाव एषोऽपर। (भाव एसो अवरो।)

---

छन्द ]॥ १७॥ **एतैरिति**। [यदा गजेन्द्रवन्मलिनै। श्यामै। आध्मातानि अत एव लम्बानि उदराणि येषा तै। आध्माता शब्दायमानाश्च ते लम्बोदरा स्वरूपविस्तारवन्तश्चेति कर्मधारय—इति ल० दी०। गर्जद्भि सतडिद्बलाकै शबलै मेघै मन सशल्य सवेदनमित्यर्थ। तत्तदा प्रोषितभर्तृणा विरहिणीनामित्यर्थ। वध्यपटह विपत्तिसूचक पटह।] प्रोषितभर्तृशब्दात् 'न नित्य समासान्त' इति न 'नद्यृतश्च' इति कप्। [हताश शठधी वञ्चक बक क्षते क्षार सिञ्चन् इव हा हा प्रावृट् प्रावृट् इति ब्रवीति। शार्दूल० छन्द॥ १८॥ **बलाकेति**। बलाका बकपङ्क्तिरेव पाण्डु रोष्णीषो यस्य। पक्षे बलाकावत्पाण्डुर उ०। विद्युदेव पक्षे विद्युदिव उत्क्षिप्त चामर यस्य। तादृगम्बर मत्तवारणसारूप्य कर्तुकाममिव भातीति शेष। रूपकानुप्राणितोत्प्रेक्षालकार॥ १९॥ **एतैरिति**। एतै आर्द्राणि यानि तमालपत्राणि तद्वन्मलिनै नीलै मेघै नभ आपीत निगीर्ण पिहित इत्यर्थ। सूर्य यस्मिन् तथा भूतम्। मेघैः धाराहता वल्मीका शरताडिता गजा इव सीदन्ति। विद्युत् प्रासादसचारिणी काञ्चनदीपिकेव रचिता। दुर्बलभर्तृका वनिता इव ज्योत्स्ना प्रोत्सार्य हृता। शार्दूल०

---

१ पेक्ख (सस्कृतमाश्रित्य।) २ हता ३ अतिद्र० ४ सरागा ५ रूप. ६ वातोद्धमा ७ शस्या

VITA—So it is, O Vasantasena ! But see this another thing –

The sky, having a white head-dress in the form of the cranes, and waving *chowries* in the form of lightning-flashes, is, as it were, desirous of imitating the appearance of an infuriated elephant ( whose head-dress is white like cranes and who has waving *chowries* on his head that resemble lightning-flashes ) ( 19 )

VAS —See, sir, see !

By these clouds, dark like the wet leaves of the *tamala* tree, the sun has been completely hidden (*lit* drunk up) in the sky, the ant-hills, beaten with the torrential rains, crumble down, like elephants cowering down when struck by arrows, lightning is made to move through the mansions like a golden lamp, and the moon-light, like the wife of an imbecile husband, has been taken away ( obscured ) after being forcibly seized ( 20 )

VITA—See, Vasantsena, see !

These clouds pouring torrents of rain with their sides girt by streaks of lightning, and rushing against each other, like elephants round whose arm-pits are fastened lightning—like chains (made of gold ), are, as it were, lifting up the earth with silver chains, at the command of Indra (their lord ) ( 21 )

And see also–

By the clouds, thundering in the strong gale, dark like a herd of buffaloes, and moving about like oceans in the sky on their wings in the form of lightning, this earth, emitting a strong odour, and covered with the blades of new green grass, is pierced with the sharp falling showers, as if with arrows made of jewels ( 22 )

VAS —Sir, here this another—

---

वृत्तम् ॥ २० ॥ एत इति । एते विद्युद्गुणेन विद्युल्लतया पक्षे विद्युदिव गुण रज्जुस्तेन बद्धा कक्षा मध्यभाग मध्यबन्धन वा येषा ते विद्युद्गुणबद्धकक्षा । अन्योन्यमभिद्रवन्त गजा इव सधारा वारिधरा शक्राज्ञया गा मही रूपरज्ज्वा समुद्धरन्ति इव । उपमोत्प्रेक्षयो ससृष्टि । उपजातिच्छन्द ॥ २१ ॥ महावातेति । महावातै आध्माता शब्दिता । 'आध्मात शब्दिते दग्धे' इति मेदिनी । तै महिष-कुलवन्नीलै चलै । विद्युत एव पक्षा येषा तै । अन्त गगनमध्ये प्रचलितै जलधिभि इव स्थितै जलधरै कर्तृभि । गन्धेन नववर्षजलसेकजनितमृद्गन्धेन उद्दामा गन्धेन मदेनोद्दामा च नवाना हरिताना शष्पाणामङ्कुरास्तद्वती इय धरा धारापातै मणिमयशरै भिद्यते इव इत्युत्प्रेक्षा । शिखरिणीछन्द । ] शष्पाङ्कुरा सलग्न-

एह्येहीति शिखण्डिना पटुतर केकाभिराक्रन्दित.
प्रोड्डीयेव[१] बलाकया सरभस [२]सोत्कण्ठमालिङ्गित ।
हसैरुज्झितपङ्कजैरतितरा सोद्वेगमुद्वीक्षित
कुर्वन्नञ्जनमेचका इव दिशो मेघ समत्तिष्ठति[३] ॥ २३ ॥

विट —एवमेतत् । तथा हि पश्य[४] ।

निष्पन्दीकृतपद्मषण्डनयन[५] नष्टक्षपावासर
विद्युद्भि क्षणनष्टदृष्टतिमिर[६] प्रच्छादिताशामुखम् ।
निश्चेष्ट स्वपितीव सप्रति पयोधारागृहान्तर्गत
स्फीताम्भोधरधामनैकजलदच्छत्रापिधान जगत् ॥ २४ ॥

वसन्तसेना—भाव एव न्विन्दम् । तत्पश्य पश्य । (भाव एव्व ण्णेदम् । ता पेक्ख पेक्ख[७] ।)

गता नाश तारा उपकृतमसाधाविव जने
वियुक्ता कान्तेन स्त्रिय इव न राजन्ति ककुभ ।
प्रकामान्तस्तप्त त्रिदशपतिशस्त्रस्य शिखिना
द्रवीभूत मन्ये पतति जलरूपेण गगनम् ॥ २५ ॥

अपि च पश्य ।

उन्नमति नमति वर्षति गर्जति मेघ करोति तिमिरौघम् ।
प्रथमश्रीरिव पुरुष करोति रूपाण्यनेकानि ॥ २६ ॥

विट —एवमेतत् ।

विद्युद्भिर्ज्वलतीव सविहसतीवोच्चैर्बलाकाशतै
र्माहेन्द्रेण विवल्गतीव धनुषा [८]धाराशरोद्गारिणा ।
विस्पष्टाशनिनि स्वनेन रसतीवाघूर्णतीवानिलै-
र्नीलै सान्द्रमिवाहिभिर्जलधरैर्धूपायतीवाम्बरम्[९] ॥ २७ ॥

वसन्तसेना—

जलधर निर्लज्जस्त्व यन्मा दयितस्य वेश्म गच्छन्तीम् ।
स्तनितेन भीषयित्वा धाराहस्तै परामृशसि ॥ २८ ॥

---

शरतुल्या ॥ २२ ॥ एह्येहीति । [शिखण्डिना केकाभि पटुतर यथा तथा एहि एहि इति आक्रन्दित आहूत । बलाकया बलाकमालया सरभस प्रोड्डीय सोत्कण्ठ-मालिङ्गित इव स्थित । हसै. उज्झितपङ्कजै त्यक्तकमलै अतितरा सोद्वेग-मुद्वीक्षित । एष अपर मेघ. दिश अञ्जनवन्मेचका श्यामा कुर्वन् समुत्तिष्ठति ।

---

१ प्रोत्थायेव २ सोद्गाढ ३ ०त्तिष्ठते, समुज्जृम्भते ४ पश्य पश्य ५ खण्ड ६ दृष्टनष्ट ७ पेक्ख (सस्कृतमाश्रित्य ।) ८ शतो० ९ धूमाय०

Cloud is rising forth, darkening the quarters as if with ( black ) collyrium, very loudly welcomed by the cries of peacocks shouting 'come, come ', ardently and lovingly embraced, as it were, by the cranes flying up, and looked at with very great distress by the swans that have left the lotus-beds ( 23 )

VITA—So it is And also mark —

The ( whole ) world is now sleeping motionless, as it were, lying in the inside of the mansion formed by the torrents of water , its eyes in the from of lotus clusters are rendered motionless, it has lost ( all consciousness of ) night and day, owing to the lightning-flashes, the darkness therein momentarily disappears and becomes visible again , its face in the form of the quarters is veiled, and it has a covering ( *lit* umbrella-like ) canopy of numerous clouds in the spacious sky, the abode of clouds (24)

VAS —Sir, it is as you say, and again also observe —

The stars have vanished ( become invisible ), like the good done to a bad person, and the ( moonless ) quarters do not look charming, like women separated from their husbands I think the sky itself, being intensely heated within by the fire of the weapon ( the thunderbolt ) of Indra, the lord of gods, is liquefied, and so is falling down in the form of water (25)

And also mark--

The cloud now rises, now descends, now pours ( its showers ), now thunders, and now produces a mass of darkness,—thus it puts on manifold appearances, like a man getting wealth for the first time ( *i e* an upstart ) (26)

VITA—So it is

The sky is ablaze, as it were, on account of the lightning-flashes, it laughs aloud, as it were, owing to hundreds of cranes , it is dancing, as it were, on account of Indra's ( rain— ) bow, discharging arrows of water-torrents , it is shrieking, as it were, owing to the loud clap of thunder, it is reeling, as it were, because of the gales, and it is emitting ( curling ) smoke, as it were, on account of the throng of dark and snake like clouds (27)

VAS —

You are shameless, O cloud, since you frighten me, who am going to the house of my beloved, with your thunder, and touch me with your hands in the form of streams (28)

भो शक्र।

किं ते ह्ययह पूर्वरतिप्रसक्ता यत्त्व नदस्यम्बुदसिंहनादै ।
न युक्तमेतत्प्रियकाङ्क्षितायाः मार्गं निरोद्धुं मम वर्षपातै ॥ २९ ॥

अपि च।

यद्वदहल्याहेतोर्मृषा वदसि शक्र गौतमोऽस्मीति ।
तद्वन्ममापि दु ख निरपेक्ष[1] निवार्यता जलद ॥ ३० ॥

अपि च।

गर्ज वा वर्ष वा शक्र मुञ्च वा शतशोऽशनिम् ।
न शक्या हि स्त्रियो रोद्धु प्रस्थिता दयित प्रति ॥ ३१ ॥
यदि गर्जति वारिधरो गर्जतु तन्नाम निष्ठुरा पुरुषा ।
अयि[2] विद्युत्प्रमदानां त्वमपि च दु ख न जानासि ॥ ३२ ॥

विट --भवति अलमलमुपालम्भेन। उपकारिणी तवेयम्।

ऐरावतोरसि चलेव सुवर्णरज्जु
शैलस्य मूर्ध्नि निहितेव सिता पताका।
आखण्डलस्य [3]भवनोदरदीपिकेय-
माख्याति ते प्रियतमस्य हि सनिवेशम् ॥ ३३ ॥

वसन्तसेना---भाव एवम्। तदेवैतद्गेहम्। (भाव एव्व। त ज्जेव एद गेहम्।)

विट —सकलकलाभिज्ञाया न किंचिदिह [4]तवोपदेष्टव्यमस्ति। तथाऽपि स्नेह प्रलापयति। अत्र प्रविश्य कोपोऽत्यन्त न कर्तव्य ।

यदि कुप्यसि नास्ति रति कोपेन विनाऽथ वा कुत काम ।
कुप्य च कोपय च त्व प्रसीद च त्व प्रसादय च कान्तम् ॥ ३४ ॥

भवतु। एव तावत्। भो भो निवेद्यतामार्यचारुदत्ताय।

एषा फुल्लकदम्बनीपसुरभौ काले घनोद्भासिते
कान्तस्यालयमागता समदना हृष्टा जलार्द्रालका
विद्युद्वारिदगर्जितै सचकिता त्वद्दर्शनाकाङ्क्षिणी
पादौ नूपुरलग्नकर्दमधरौ[5] प्रक्षालयन्ती स्थिता ॥ ३५ ॥

---

समुत्तिष्ठते इति पा॰ 'उदोऽनूर्ध्वकर्मणि' इत्यात्मनेपद चिन्त्यम्। उत्प्रेक्षालकारः। शार्दूल॰ वृत्तम् ॥ २३ ॥ निष्पन्दीति। सप्रति निष्पन्दीकृतानि पद्मषण्डान्येव नयनानि यस्य तत्। नष्टा क्षपा वासरश्च यस्मिस्तत्। विद्युद्भि क्षणं नष्ट पश्चाद्दृष्ट तिमिर यस्मिस्तत्। प्रच्छादितानि पिहितानि आशा दिश एव मुखानि यस्य तत्। पयोधारा एव गृह तस्यान्तर्गत स्फीते अम्भोधराणा धामनि निवासे गगने नैके

---

१ निरवेक्ष्य. २ अपि ३ भुवनो. ४ तवादे ५ भरौ

O Indra !

Was I ever before attached to you amorously, that you are thundering ( at me ) with the lion like roars of clouds ? It is not proper that you should block my path with downpours of rain, when I am yearning for ( the company of ) my beloved ( 29 )

Moreover —

Just as, O Indra, you ( being love smitten ) falsely said that you were Gautama, for the sake of Ahalya, so I too am suffering the pangs ( of love ) , therefore, O you who are indifferent ( to my pain ), please draw off ( your obstructing ) clouds ( 30 )

Moreover—

You may thunder O Indra, or pour down showers, or send down hundreds of thunderbolts you cannot stop women who have started to meet their lovers ( 31 )

If the cloud thunders, well, let him do so, for men are ( known to be ) cruel But, O Lightning, how is it that even you, ( who are a woman ), cannot understand the sufferings of ( young ) women ? ( 32 )

VITA—Madam, enough, enough of upbraiding her, she has laid you under an obligation

For, like a slippery gold chain on the chest of the ( dark ) Airavata, or like a white flag planted on the top of a mountain, this lightning, which is ( as it were ) the lamp illuminating the interior of Indra's abode ( *i e* the sky ), points out to you the residence of your lover ( 33 )

VAS —Sir, it is as you say, here is that same house

VITA—Since you have mastered all the arts, there is nothing on which you need advice in this matter Still, my affection prompts me to speak When you go in here, you must not show too much anger

If you get angry, there is no ( scope for ) love, but again, whence could there be ( charming ) love without anger ? ( So ) you may get angry and anger him too, ( but at the same time ) you should be pacified and also pacify your lover ( 34 )

Well, so much for that—Who is there ? Please inform the worthy Charudatta —

" Here she, full of love and joy, and with her hair dripping with water, has come to the house of you, her lover, desirous of seeing you, at a time rendered charming by the clouds and fragrant with the *Kadamba* and the *Nipa* trees in bloom, terrified though she was by lightning and the clap of thunder, she is (now) busy washing her feet which are covered with mud that has stuck to her anklets " (35)

**चारुदत्त**—( आकर्ण्य ) वयस्य ज्ञायता किमेतदिति ।

**विदूषक**—यद्भवानाज्ञापयति । ( वसन्तसेनामुपगम्य सादरम् । ) स्वस्ति भवत्यै । ( ज भव आणवेदि । सोत्थि भोदीए । )

**वसन्तसेना**—आर्य वन्दे । स्वागतमार्यस्य । (विट प्रति । ) भाव एषा छत्रधारिका भावस्यैव भवतु । (अज्ज वन्दामि । साअद अज्जस्स । भाव एसा छत्तधारिआ भावस्स ज्जेव भोदु । )

**विट**--(स्वगतम् । ) अनेनोपायेन निपुण प्रेषितोऽस्मि । ( प्रकाशम् । ) एव भवतु । भवति वसन्तसेने ।

> **साटोपकूटकपटानृतजन्मभूमे**
> **शाठ्यात्मकस्य रतिकेलिकृतालयस्य**
> **वेश्यापणस्य[1] सुरतोत्सवसग्रहस्य**
> **[2]दाक्षिण्यपण्यसुखनिष्क्रयसिद्धिरस्तु** ॥ ३६ ॥

(इति निष्क्रान्तो विट । )

**वसन्तसेना**—आर्य मैत्रेय कुत्र युष्माक द्यूतकर । ( अज्ज मित्तेअ कहिं तुम्हाण जूदिअरो । )

**विदूषक**—(स्वगतम् ।) आश्चर्य भो द्यूतकर इति भणन्त्याऽलकृत प्रियवयस्य । (प्रकाशम् । ) भवति एष खलु शुष्कवृक्षवाटिकायाम् । (ही ही भो जूदिअरो त्ति भणन्तीए अलकिदो पिअवअस्सो । भोदि एसो क्खु सुक्खरुक्खवाडिआए ।

**वसन्तसेना**—आर्य का युष्माक शुष्कवृक्षवाटिकोच्यते । ( अज्ज का तुम्हाण सुक्खरुक्खवाटिआ वुच्चदि । )

**विदूषक**—भवति यत्र न खाद्यते न पीयते । ( भोदि जहि ण खाईअदि ण पीईअदि । )

---

अनेके जलधरा एव छत्र तदेव अपिधान यस्य तत् । जगत् निश्चेष्ट स्वपिति इव । उत्प्रेक्षालकार । शार्दूल० छन्द ॥ २४ ॥ **गता इति** । असाधौ जने उपकृतमिव तारा अदर्शन गता । कान्तेन वियुक्ताः स्त्रिय इव दिश चन्द्रेण वियुक्ता न राजन्ति । त्रिदशपतिरिन्द्रस्तस्य शस्त्रस्य वज्रस्य शिखिना अग्निना प्रकाममन्तस्तप्तमत एव द्रवीभन गगन जलरूपेण पतति इति मन्ये इत्युत्प्रेक्षा । पूर्वार्धे उपमालकार । शिखरिणी वृत्तम् ॥ २५ ॥ **उन्नमतीति** ॥ प्रथमा प्रथम प्राप्ता श्रीः येन स पुरुष इव मेघ अनेकानि रूपाणि करोति आकारान्प्रकटयति । तदेव प्रतिपादयति उन्नमतीत्यादिना। कारकदीपकोपमयो ससृष्टि । आर्या छन्द ॥ २६ ॥

---

१ जनस्य २ पुण्य, पण्यमुख

CHAR—( *Listening* ) Friend, find out what this is

VID —As your honour commands (*Approaching* Vasantasena, *respectfully* ) I greet you, madam !

VAS —Sir, I salute you ! You are well seen ! ( *To* Vita ) Sir, let this umbrella-bearer be for you only ( *i e* take her away with you )

VITA—( *To himself* ) She has cleverly dismissed me by means of this plan ! ( *Aloud* ) All right. Lady Vasantasena

May you achieve success in easily disposing of your courtesy ( to your lover ), which is the commodity offered for sale in the market of a courtesan's profession, which is the birth place of hypocrisy, deceit, treachery and falsehood, which consists of perfidy, wherein love sports have made their home, and where the stock in-trade consists of the festival of union (36)

( *Exit* )

VAS —Sir Maitreya, where is that gambler of yours ?

VID —( *To himself* ) Oh ! Wonderful ! By calling him a gambler, she has complimented my dear friend ( *Aloud* ). Lady, here he is, in the garden of dried-up trees

VAS —Sir, what is that which you describe as your ' garden of dried up trees ' ?

VID —Lady, it is a place wherein one can neither eat nor drink !

---

**विद्युद्भिरिति**। अम्बर विद्युद्भिर्ज्वलति इव। हासस्य कविसमयसिद्धश्वेतत्वादाह—बलाकाशतै उच्चै विहसति इव। धारा एव शरास्तानुद्‍ ारति इति धाराशरोद्गारि तेन माहेन्द्रेण धनुषा विवल्गति प्रस्फुरति इव। विस्पष्ट स्फुट प्रतीयमान य अशनिनि स्वन तेन रसति उच्चैर्विक्रोशति इव। अनिलै आघूर्णति भ्रमति इव। जलधरै हेतुभि नीलै अहिभि कृष्णसर्पै सान्द्र धूपायति धूपवदाचरति धूमित भवति इति। धूमायति इति पाठे धूमवद्भवतीत्यर्थ। मालो प्रेक्षा। शार्दूल० छन्द ॥ २७ ॥ **जलधरेति**। हे जलधर त्व निर्लज्ज। यत् यत दयितस्य वेश्म गच्छन्ती मा स्तनितेन गर्जितेन भीषयित्वा धारा एव हस्तास्तै परामृशसि स्पृशसि ॥ २८ ॥ **किमिति**। किमह ते पूर्व रत्या सभोगेन प्रसक्ता सबद्धा आसमिति शेष। यद् यस्मात्त्व अम्बुदाना सिंहनादै नदसि। प्रियेण चारुदत्तेन काङ्क्षिताया प्रियकाङ्क्षिताया ; यद्वा काङ्क्षित प्रियो यया सा प्रियकाङ्क्षिता। परनिपात। तस्य मम एतद् मार्ग निरोद्धु निराधन न युक्तम् ॥ २९ ॥ ] **यद्वदिति**।

( वसन्तसेना स्मित करोति । )

**विदूषक** --तस्मात्प्रविशतु भवती । (ता पविसदु भादी ।)

**वसन्तसेना** --(जनान्तिकम् । ) अत्र प्रविश्य कि मया भणितव्यम् । ( एत्थ पविसिअ कि मए भणिदव्वम् । )

**चेटी**--द्यूतकर अपि सुखस्ते प्रदोष इति । (जूदिअर अवि सुहो दे पदोसो त्ति ।)

**वसन्तसेना**--अपि पारयिष्यामि । (अवि पारइस्सम् । )

**चेटी**--अवसर एव पारयिष्यति । ( अवसरो ज्जेव पारइस्सदि । )

**विदूषक** --प्रविशतु भवती । ( पविसदु भोदी । )

**वसन्तसेना**--( प्रविश्योपसृत्य च । पुष्पैस्ताडयन्ती । ) अयि द्यूतकर अपि सुखस्ते प्रदोष । ( अइ जूदिअर अवि सुहो दे पदोसो ।

**चारुदत्त** --( अवलोक्य । ) अये वसन्तसेना प्राप्ता । ( सहर्षमुत्थाय । ) अयि प्रिये ।

**सदा प्रदोषो मम याति जाग्रत**
**सदा च मे नि श्वसतो गता निशा ।**
**त्वया समेतस्य विशाललोचने**
**ममाद्य शोकान्तकर प्रदोषक ॥ ३७ ॥**

तत्स्वागत भवत्यै । इदमासनम् । अत्रोपविश्यताम् ।

**विदूषक** --इदमासनम् । उपविशतु भवती । ( इद आसणम् । उवविसदु भोदी । )

( वसन्तसेनाऽऽसीना[1] । तत सर्वे[2] उपविशन्ति । )

**चारुदत्त** —वयस्य पश्य पश्य ।

**वर्षोदकमुद्गिरता श्रवणान्तविलम्बिना कदम्बेन ।**
**एक स्तनोऽभिषिक्तो नृपसुत इव यौवराज्यस्थ ॥ ३८ ॥**

तद्वयस्य क्लिन्ने वाससी वसन्तसेनाया । अन्ये प्रधानवाससी [3]समुपनीयेतामिति।

---

हे शक्र [ यद्वद् अहल्याहेतो अहल्याप्राप्त्यर्थं ] यथा अहल्याया अप्राप्तिदु खेन गौतमोऽस्मीत्यसत्य ब्रूपे । हे निरपेक्ष परपीडानभिज्ञ तद्वन्ममापि दु ख जानीहीत्यर्थात् । तत किं कर्तुमुचितमित्याह—[ जलद ] निवार्यता [ निषिध्यताम् ] । प्रियभवनगमन प्रति विरोधकत्वादित्याशय ॥ ३० ॥ गर्जनि । [ हे शक्र गर्ज वा ३० । दयित प्रति प्रस्थिता । स्त्रियो रोद्धु न शक्या हि ॥ ३१ ॥ यदीति । यदि वारिधरो मेघ गर्जति तत् गर्जतु नाम । यत पुरुषा निष्ठुरा । अयि विद्युत् त्वमपि प्रमदा सत्यपीत्यर्थ ।

---

१ नाटयेनासीना २ सर्वे उप०. ३ समुपा०

( Vasantasena *smiles* )

VID —So, you may enter it

VAS —( *Aside, to her* Maid ) What am I to say on entering it ?

THE MAID—" O gambler do you find the evening delightful ?

VAS —Shall I be able to say it ?

THE MAID—The occasion itself will lend you strength

VID —Please enter, madam

VAS —( *Entering and approaching, striking him with flowers* ) O gambler, do you find the evening delightful ?

CHAR—( *Seeing* ) Ah ! Vasantasena has come ! ( *Joyfully getting up* ) My darling

My evenings always pass in wakefulness, and my nights too have always been passed in sighing But to dav, O lady with elongated eyes, the evening has put an end to my grief, since I am now united with you ! (37)

So I welcome you, here's a seat, pray be seated here

VID —Here's a seat, your ladyship should sit down

( Vasantasena *takes a seat, then all seat themselves* )

CHAR —Friend, see, see !

By the *Kadamba* flower which is hanging from the tip of her ear and is dripping rain-water, one of her breasts is besprinkled ( with water ), as though it were a royal prince being crowned as heir apparent (38)

Well, friend, Vasantasena's garments are wet, let another pair of excellent garments be brought ( for her )

---

प्रमदाना दुःख न जानासि येन दृष्टिग्रहणमोक्षाभ्या गमनविघ्न करोषि ॥ ३२ ॥ **ऐरावतोरसीति** । हि यस्मात् ऐरावतोरसि चला सुवर्णरज्जु इव । शैलस्य मूर्ध्नि निहिता सिता धवला पताका इव । आखण्डलस्य इन्द्रस्य भवनोदरदीपिका इव । इय विद्युत् ते प्रियतमस्य उपस्थित सनिवेश आख्याति प्रकाशेन दर्शयति । वसन्ततिलक वृत्तम् ॥ ३३ ॥ **यदीति** । यदि कुप्यसि कुपितैव तिष्ठसीत्यर्थः । तर्हि रति रतिसुखमित्यर्थः । नास्ति । अथ वा कोपेन विना काम कुत । ईर्ष्याकृतकोपेन विना शृङ्गाररसोत्थ सुख नास्तीत्यर्थः । अत त्व कुप्य कान्त च कोपयेत्या० । आर्या ॥ ३४ ॥ **एषेति** । फुल्लै कदम्बै नीपै च सुरभौ सुगन्धौ मनोज्ञे वा घनै उद्भासिते शोभिते काले समदना सकामा हृष्टा । जलेन आर्द्रा अलका केशा यस्या

विदूषक—यद्भवानाज्ञापयति। ( ज भव आणवेदि।)

चेटी—आर्य मैत्रेय तिष्ठ त्वम्। अहमेवार्यां शुश्रूषयिष्यामि। (तथा करोति।) ( अज्ज मित्तेअ चिट्ठ तुमम्। अह ज्जेव अज्जअं सुस्सूसइस्सम्।)

विदूषक—( अपवारितकेन।) भो वयस्य पृच्छामि तावत्तत्रभवती किमपि। ( भो वअस्स पुच्छामि दाव तत्थभोदिं किं पि।)

चारुदत्त—एव क्रियताम्।

विदूषक—(प्रकाशम्।) अथ किंनिमित्त पुनरीदृशे प्रनष्टचन्द्रालोके दुर्दिनान्धकार आगता भवती। (अध किंणिमित्त उण ईदिसे पणट्ठचन्दालाए [1]दुद्दिण-अन्धआरे आअदा भोदी।)

चेटी—आर्ये ऋजुको ब्राह्मण। (अज्जए उजुओ[2] बम्हणो।)

वसन्तसेना—ननु निपुण इति भण। (ण णिउणोत्ति भणाहि।)

चेटी—एषा खल्वर्यैव प्रष्टुमागता–क्रियत्तस्या रत्नावल्या मूल्यमिति। (एसा क्खु अज्जआ एव्व पुच्छिदु आअदा—केत्तिअ ताए रअणावलीए मुल्ल त्ति।)

विदूषक—( जनान्तिकम्।) भो भणित मया यथाऽल्पमूल्या रत्नावली बहुमूल्य सुवर्णभाण्डम्। न परितुष्टाऽपर याचितुमागता। (भो भणिद मए जधा अप्पमुल्ला रअणावली बहुमुल्ल सुवण्णभण्डअम्। ण परितुट्टा अवर मग्गिदु आअदा।)

चेटी—सा खल्वार्ययाऽऽत्मीयेति भणित्वा द्यूते हारिता। स च सभिको राजवार्ताहारी न ज्ञायते कुत्र गत इति। (सा क्खु अज्जआए अत्तणकेरकेत्ति भणिअ जूदे हारिदा। सो अ सहिओ राअवत्थहारी[3] ण जाणीअदि कहिं गदो त्ति।)

विदूषक—भवति मन्त्रितमेव मन्त्र्यते। ( भोदि मन्तिद ज्जेव मन्तीअदि।)

चेटी—यावत्सोऽन्विष्यते तावदिदमेव गृहाण सुवर्णभाण्डम्। (इति दर्शयति।) (जाव सो अण्णेसीअदि ताव एद ज्जेव गेण्ह सुवण्णभण्डअम्।)

( विदूषको विचारयति।)

चेटी—अतिमात्रमार्यो निध्यायति। तत्किं दृष्टपूर्वं ते। ( अदिमेत्त अज्जो णिज्झाअदि। ता किं दिट्ठपुरुव्व दे।)

विदूषक—भवति शिल्पकुशलतयाऽवबध्नाति दृष्टिम्। (भोदि सिप्पकुसलदाए ओबन्धेदि दिट्ठिम्।)

चेटी—आर्य वञ्चितोऽसि दृष्ट्या। तदेवेद सुवर्णभाण्डम्। ( अज्ज वञ्चिदोसि दिट्ठीए। त ज्जेव एद सुवण्णभण्डअम्।)

---

१ दुद्दिणे २ उज्जओ (उज्ज्वल), उज्जुओ (ऋजुक). ३ राआवत्थआरी (राजापथ्यकारी) राआवच्छहारी (राजावश्यकारी)

VID —As your honour commands

THE MAID—Sir, Maitreya, you need not go I shall wait upon her ladyship myself ( *Does accordingly* )

VID —( *Aside, to* Charudatta ) Friend, I want to ask her ladyship about something

CHAR—Do so

VID —( *Aloud* ) Well, now, for what purpose has your ladyship come here in such darkness of a rainy day when the moonlight has vanished ?

THE MAID—Lady, how simple is this Brahmana !

VAS —Say, rather, 'clever' !

THE MAID—This our lady has come to ask this 'What is the price of that jewel-necklace ?'

VID —( *Aside, to* Charudatta ) Sir, it was already said by me that the jewel-necklace was of little value, and the golden casket of greater value, she was not satisfied with that and has come to ask for something else

THE MAID—For, it was lost by our mistress at gambling, believing ( *lit* saying ) that it was her own And it cannot be discovered where that gaming-master, the King's emissary, has gone

VID —Madam, you are simply repeating what I myself said to you !

THE MAID—So, while we are looking for him, you may receive this golden casket ( in exchange ) ( *She shows it* )

( *The* Vid *remains in deep thought* )

THE MAID—Your honour is gazing at it very fixedly What then, was it ever seen by you before ?

VID —Madam, it captivates my eyes by its skilled craftsmanship

THE MAID—Sir, your eyes are deceiving you ! It is that very same golden casket !

---

सा । विद्युद्भिः वारिदगर्जितैः च सचकिता भीता त्वद्दर्शनाकाङ्क्षिणी । कान्तस्य आलयमागता वसन्तसेना नूपुरलग्नकर्दमधरौ पादौ प्रक्षालयन्ती स्थिता इति निवेद्यतामिति सबन्ध । शार्दूल० छन्द ] ॥ ३५ ॥ साटोपेति । आटोपो दम्भ [ तेन सहित साटोप ] कूट माया कपट छद्म अनृत मृषाभाषणम् । निह्नवप्राकट्य-

**विदूषक**—( सहर्षम्[1] । ) भो वयस्य तदेवेद सुवर्णभाण्ड यदस्माक गृहे चौरैरपहृतम् । ( भो वअस्स त ज्जेव एद सुवण्णभण्डअ ज अम्हाण गेहे चोरेहि अवहृदम् । )

**चारुदत्त**—वयस्य ।

**योऽस्माभिश्चिन्तितो व्याज कर्तुं न्यासप्रतिक्रियाम् ।**
**स एव प्रस्तुतोऽस्माक किं तु सत्य[2] विडम्बना ॥ ३९ ॥**

**विदूषक**—भो वयस्य सत्य शपे ब्राह्मण्येन । ( भो वअस्स सच्च सवामि बह्मण्णेण । )

**चारुदत्त**—प्रिय न प्रियम्[3] ।

**विदूषक**—( जनान्तिकम् ।) भो पृच्छामि ननु कुत इद समासादितमिति । ( भो पुच्छामि ण कुदो एद समासादिद त्ति । )

**चारुदत्त**—को दोष ।

**विदूषक**—( चेटचा कर्णे ।) एवमिव । ( एव्व विअ । )

**चेटी**—( विदूषकस्य कर्णे ।) एवमिव । ( एव्व विअ । )

**चारुदत्त**—किमिद कथ्यते । किं वय बाह्या ।

**विदूषक**—( चारुदत्तस्य कर्णे ।) एवमिव । ( एव्व विअ । )

**चारुदत्त**—भद्रे सत्य तदेवेद सुवर्णभाण्डम् ।

**चेटी**—आर्य अथ किम् । ( अज्ज अध इ । )

**चारुदत्त**— भद्रे न [4]कदाचित्प्रियनिवेदन निष्फलीकृत मया । तद्गृह्यता पारितोषिकमिदमङगुलीयकम् । (इत्यनङगुलीयक हस्तमवलोक्य लज्जा नाटयति ।)

**वसन्तसेना**—( आत्मगतम् ।) अत एव काम्यसे । ( अदो ज्जेव कामीअसि । )

**चारुदत्त**—( जनान्तिकम् ।) भो कष्टम् ।

---

भेदात्कूटकपटयोर्भेद । एतेषा जन्मभूमे । [ शाठच धौर्त्यं आत्मा यस्य तस्य । रतिकेलिभि शृङ्गारक्रीडाभि कृतालयस्य कृताश्रयस्य । सुरतमेव उत्सवस्तस्य सग्रह यत्र तस्य ] वेश्यापणो वेश्याव्यवहार [ तस्य ] । व्यञ्जकस्येत्यर्थ । [ दाक्षिण्येन यत्पण्यसुख तस्य निष्क्रयसिद्धि अस्तु । वसन्त०वृत्तम् । ] दाक्षिण्यपण्यप्रधान निष्क्रयो मूल्यम् ॥ ३६ ॥ **सदेति** । [ सदा मम जाग्रत॰ प्रदोष निशामुख याति । नि श्वसत त्वद्विरहवेदनातुरत्वादिति भाव । निशा गता । जातावेकवचनम् । प्रदोषा निशाश्च व्यतीता॰ । हे विशाललोचने अद्य त्वया समेतस्य मम प्रदोषक शोकान्तकर शोकस्य नाशकर । अद्य रात्रि सुखेन यास्यतीति भाव । वशस्थ वृत्तम् ॥ ३७ ॥ **वर्षोदकमिति** । [ वर्षोदकमुद्गिरता क्षरता श्रवणान्ते कर्णान्ते विलम्बते असौ तेन कदम्बेन कदम्बपुष्पेण यौवराज्यस्थ नृपसुत इव एक स्तन अभिषिक्त । उपमा ।

---

१ सहर्ष जनान्तिकम् २ सत्त्व ३ प्रिय न ४ कदाऽपि

VID —( *Joyfully* ) O friend, this is that very same golden casket that was stolen by the thieves from our house !

CHAR —Friend,

The very device that was thought of ( employed ) by us for returning that deposit is now being used against us But is it really true, or only a mockery ? ( 39 )

VID —O friend, it is true,—I swear by my Brahmanahood !

CHAR —It is gratifying, highly gratifying to me !

VID —( *Aside, to Cha'r* ) Sir, I'll ask her as to whence they obtained it

CHAR —( There is ) no harm ( in that )

VID —( *Whispering in the* Maid's *ear* ) Was it like that ?

THE MAID—( *Whispering in the* Vid's *ear* ) It was like that

CHA'R —What is this that is being communicated ? Am I an outsider ( *i e* to be excluded from the communication ) ?

VID —( *Whispering in* Char's *ear* ) It was like this

CHA'R —My good girl, is it really that very same golden casket ?

THE MAID—Noble one, just so

CHA'R —Girl, I have never allowed a welcome announcement to go unrewarded So, then, please accept this ring as a reward ( *Seeing his hand ringless, he exhibits shame* )

VAS —( *To herself* ) Hence it is that you are loved ( by me ) !

CHA'R —( *Aside, to the* Vid ) Alas, Oh !

---

आर्या वृत्तम् ॥ ३८ ॥ प्रधानवाससी उत्कृष्टवस्त्रे । प्रनष्ट चन्द्रलोको यस्मिन् । ऋजुक सरल अनागरिक इत्यर्थ । [ अन्विष्यते सभिक । ] निध्यायति निरूपयति । य इति । [ न्यासस्य न्यासीकृतभाण्डस्य प्रतिक्रिया प्रत्यर्पण कर्तु अस्माभि यो व्याज अपदेश चिन्तित स एव व्याज अस्माक प्रस्तुत । किं नु सत्य अथ वा विडम्बना ] स एव व्याजो विडम्बनाऽस्माक प्रस्तुत आरब्ध ॥ ३९ ॥ अथ वा सत्यमेवेदम् । अथ वेति प्रकरणात्प्रतीयते । [धनैरिति । धनै वियुक्तस्य नरस्य लोके जीवितेन किम् । आदित एव तावत् यस्य प्रतीकारे निरर्थकत्वात् कोपप्रसादा विफलीभवन्ति कोपे प्रतिकर्तु प्रसादे चोपकर्तुमसमर्थतया तयोर्वैयर्थ्यमित्यर्थ । इति ल० दी० ] ॥ ४० ॥ पक्षेति । [ पक्षाभ्या विकल पक्षविकल गतपक्ष पक्षी । उद्धृता दष्ट्रा यस्य स उद्धृतदष्ट्र सर्पश्च एतत्सर्वं लोके तुल्यम् ॥ ४१ ॥ ] शून्यैरिति । [ दरिद्रा पुरुषा शून्यै गृहै तोयरहितै कूपै शीर्णै तरुभिश्च समा खलु । ] यद् यतो यस्माद्दृष्टपूर्वस्य जनस्य सगमेनोत्तरलतया वर्तमानस्वदैन्यविस्मृताना विस्मरणवता पुसा

धनैर्वियुक्तस्य नरस्य लोके किं जीवितेनादित[१] एव तावत् ।
यस्य प्रतीकारनिरर्थकत्वात्कोपप्रसादा विफलीभवन्ति[२] ॥४०॥

अपि च ।

पक्षविकलश्च पक्षी शुष्कश्च तरुः सरश्च जलहीनम् ।
सर्पश्चोद्धृतदंष्ट्रस्तुल्य[३] लोके दरिद्रश्च ॥४१॥

अपि च[४] ।

शून्यैर्गृहैः खलु समाः पुरुषा दरिद्राः
कूपैश्च तोयरहितैस्तरुभिश्च शीर्णैः ।
यद्दृष्टपूर्वजनसंगमविस्मृताना[५]-
मेवं भवन्ति विफलाः परितोषकालाः ॥ ४२ ॥

**विदूषकः**—भो अलमतिमात्रं संतापितेन । ( प्रकाशं सपरिहासम् ।) भवति समर्प्यतां मम स्नानशाटिका । ( भो अलं अदिमेत्तं संतप्पिदेण[६] । भोदि समप्पीअदु ममकेरिआ ण्हाणसाडिआ । )

**वसन्तसेना**—आर्य चारुदत्त युक्तं न्विदमनया रत्नावल्येमं जनं तुलयितुम् । ( अज्ज चारुदत्त जुत्तं ण्णेदं इमाए रअणावलीए इमं तुलइदुम् ।)

**चारुदत्तः**—( सविलक्षस्मितम् । ) वसन्तसेने पश्य पश्य ।

कः श्रद्धास्यति भूतार्थं सर्वो मां [७]तुलयिष्यति ।
शङ्कनीया हि लोकेऽस्मिन्निष्प्रतापा दरिद्रता ॥ ४३ ॥

**विदूषकः**—चेटि किं भवत्येहैव स्वप्तव्यम् । ( हञ्जे किं भोदिए इध ज्जेव सुविदव्वम् ।)

**चेटी**—( विहस्य ।) आर्य मैत्रेय अतिमात्रमिदानीमृजुमात्मानं दर्शयसि । ( अज्ज मित्तेअ अदिमेत्तं दाणिं उजुअं अत्ताणअं दंसेसि ।)

**विदूषकः**—भो वयस्य एष खल्वपसारयन्निव सुखोपविष्टं जनं पुनरपि विस्तारिवारिधाराभिः प्रवृष्टः पर्जन्यः । ( भो वअस्स एसो क्खु ओसारअन्तो विअ सुहोवविट्ठं जणं पुणावि वित्थारिवारिधाराहिं पविट्ठो पज्जण्णो ।)

**चारुदत्तः**—सम्यगाह भवान् ।

अमूर्हि भित्त्वा[८] जलदान्तराणि पङ्कान्तराणीव मृणालसूच्यः ।
पतन्ति चन्द्रव्यसनाद्विमुक्ता[९] दिवोऽश्रुधारा इव वारिधाराः ॥ ४४ ॥

---

[ परितोषकाला एव विफला भवन्ति । वसन्त० वृत्तम् ] ॥४२॥ मत्सबन्धिनी स्नानशाटिका।तुलयितु लुब्धालुब्धजिज्ञासया बहुमूल्याया रत्नावल्या अल्पमूल्यसुवर्णभाण्डस्य

---

१ जीवितैरा० २ विफला भ०, ३ तुल्य ४ च वयस्य ५ विस्मिताना. ६ सकथिदेण, ७ तूल० ८ भिन्ना ९ वियुक्ता

In this world, to a man who has lost his money, of what use is his very life in the first place ?—Since he is unable ( suitably ) to counter-act, both his anger and his favour remain ineffectual (40)

Again—

A bird maimed of its wings, a dried-up tree, a lake without water, a cobra with its fangs pulled off; and a pauper all these are on the same level, in this world (41)

And also—

Poor men are, indeed, like houses that are tenantless, wells devoid of water, and trees that are shrivelled, since, as they forget ( their penniless condition ) in the company of their ( beloved ) acquaintances ( *lit* persons seen before ), the moments of their gratification thus prove fruitless (42)

VID—Sir, do not grieve too much ( *Aloud*, *laughingly* ) Madam, please return my bathing-garment

VAS —Sir, Charudatta, was it indeed fair of you to test ( the worth of ) this person ( myself ) by that jewel necklace ?

CHA'R —( *With an embarrassed smile* ) Mark, Vasantasena, mark !

Who would have believed the real fact ? Every one would have lightly thought of me For, in this world, inglorious poverty is always prone to be suspected (43)

VID —Girl, are you going to sleep in this very place ?

THE MAID—( *Laughing* ) Sir Maitreya, you are now showing yourself exceedingly simple, indeed !

VID —O friend, here now the rain has begun to fall again, in torrential showers of water, as if wishing to drive away people comfortably seated.

CHA'R —You have observed truly

For, here are falling these showers of water, breaking through the cloud spaces, like the spires of lotus stalks ( piercing ) through the intervening mud, as though they were the showers of tears shed by the sky owing to the calamity that has befallen the Moon (44)

---

कृते[ प्रत्यर्पणेन परीक्षितु इद युक्त न । नाहमर्थलुब्धेति भाव ।] क इति । व्याख्यातपूर्वोऽय ३अ० २४ श्लो० ] ॥४३॥ अमूरिति । [ हि अमू वारिधारा मृणालसूच्य बिसाग्राणि पङ्कान्तराणि इव जलदान्तराणि भित्त्वा चन्द्रस्य प्रियस्य व्यसनाद् आवरणरूपसकटात्

अपि च ।

धाराभिरार्यजनचित्तसुनिर्मलाभि-
श्चण्डाभिरर्जुनशरप्रतिकर्कशाभि ।
मेघा स्रवन्ति बलदेवपटप्रकाशा
शक्रस्य मौक्तिकनिधानमिवोद्गिरन्त ॥ ४५ ॥

प्रिये पश्य पश्य ।

एतै पिष्टतमालवर्णकनिभैरालिप्तमम्भोधरै
ससक्तैरुपजीवित सुरभिभि शीतै प्रदोषानिलै ।
एषाऽम्भोदसमागमप्रणयिनी स्वच्छन्दमभ्यागता
रक्ता कान्तमिवाम्बर प्रियतमा विद्युत्समालिङ्गति ॥ ४६ ॥

(वसन्तसेना शृङ्गारभाव नाटयन्ती चारुदत्तमालिङ्गति ।)

**चारुदत्त** —(स्पर्श नाटयन्प्रत्यालिङ्गय ।)

भो मेघ गम्भीरतर नद त्व तव प्रसादात्स्मरपीडित मे ।
सस्पर्शरोमाञ्चितजातराग कदम्बपुष्पत्वमुपैति गात्रम ॥ ४७ ॥

**विदूषक** —दास्या पुत्र दुर्दिन अनार्य इदानीमसि त्व यदत्रभवती विद्युता भीषयसि । ( दासीएपुत्त दुद्दिण अणज्जो दाणिं सि तुम ज अत्तभोदिं[1] विज्जुआए भाआवेसि । )

**चारुदत्त** —वयस्य नार्हस्युपालब्धुम् ।

वर्षशतमस्तु दुर्दिनमविरतधार शतह्रदा स्फुरतु ।
अस्मद्विधदुर्लभया यदह प्रियया [illegible] ॥ ४८ ॥

अपि च वयस्य ।

धन्यानि तेषा खलु जीवितानि ये कामिनीना गृहमागतानाम् ।
आर्द्राणि मेघोदकशीतलानि गात्राणि गात्रेषु परिष्वजन्ते ॥ ४९ ॥

---

विमुक्ता 'दवो नायिकाया अश्रुधारा इव पतन्तीति उत्प्रेक्षा । उपजातिर्वृत्तम् ] ॥४४॥ [ धाराभिरिति । बलदेवपटप्रकाशा बलरामवस्त्रसदृशा नीला इत्यर्थ । मेघा आर्यजनचित्तसुनिर्मलाभि चण्डाभि तीव्राभि अर्जुनशरप्रतिकर्कशाभि धाराभि शक्रस्य मौक्तिकनिधि मुक्तासमूह उद्गिरन्त इव स्रवन्ति । उपमोत्प्रेक्षयो ससृष्टि । वसन्ततिलक वृत्तम् ॥ ४५ ॥ एतैरिति । पिष्टतमालवर्णकनिभै पिष्टतमालपत्राणा यद्वर्णक विलेपन त सदृशै नीलै अम्भोधरै आलिप्तम् । ससक्तै. सुरभिभि शीतै प्रदोषानिलै· उपवीजित अम्बर अम्भोदसमागमे प्रणयिनी स्वच्छन्द स्वेच्छयैव

---

1 एत्त भोदिं

And again—

The clouds, looking ( dark ) like the garments of Balarama, a.. pouring down in showers which are very pure like the mind of a noble ( Arya ) person, and which, being fierce, are hard ( i. e. terrible ) like Arjuna's shafts as if they are pouring forth Indra's collection of pearls ( 45 )

See, beloved, se —

Here this red lightning desiring to be united with the clouds, has appeared of its own will and is embracing the sky, like a beloved mistress ( who, being in love, desires union with her lover at the advent of clouds and goes to him of her own will ) embracing her lover,—the sky which ( like a lover ) is covered ( *lit* anointed ) with these clouds resembling the paint of ( the juice of ) crushed *tamala* leaves and which is fanned by the continual, fragrant and cool breezes of the evening (46)

( Vasantsena, *displaying the emotion of love, embraces* Charudatta )

CHA'R —( *Displaying the pleasure of her touch, and embracing her in return* )

Roar still louder, O cloud ! ( For ) by your favour this body of mine, suffering the anguish of love, has become as though it were ( full of ) *Kadamba* flowers, with its hair risen on end and its passion inflamed by ( Vasantsena's ) touch (47)

VID —You rainy day son of a slave, you are, indeed, an ungentlemanly fellow, since now you are frightening her ladyship with the lightning !

CHA'R —Friend, you should not rebuke it.

Let the storm, pouring showers continually, last for a hundred years ( if it pleases ), and ( so ) let the lightning flash ( too ), for ( owing to them ) I have been embraced by this beloved lady, ( otherwise ) inaccessible to persons like me (48)

And moreover, O friend,

Blessed, indeed, are the lives of those who closely press, against their own bodies, the bodies, wet and cooled by rain-water, of their mistresses come to their house ( of their own accord ) (49)

---

अभ्यागता रक्ता एषा विद्युत् अम्बर प्रियतमा कान्तमिव समालिङ्गति । शार्दूल० वृत्तम् ॥ ४६ ॥ भो मेघेति । भो मेघ त्व गम्भीरतर नद । स्मरपीडित मे गात्र

प्रिये वसन्तसेने ।

स्तम्भेषु प्रचलितवेदिसचयान्त
शीर्णत्वात्कथमपि धार्यते वितानम् ।
एषा च स्फुटितसुधाद्रवानुलेपा-
त्सक्लिन्ना सलिलभरेण चित्रभित्ति ॥ ५० ॥

(ऊर्ध्वमवलोक्य ।) अये इन्द्रधनु । प्रिये पश्य पश्य ।

विद्युज्जिह्वेनेद महेन्द्रचापोच्छ्रितायतभुजेन
जलधरविवृद्धहनुना विजृम्भितमिवान्तरीक्षेण[1] ॥ ५१ ॥

तदेहि अभ्यन्तरमेव प्रविशाव । ( इत्युत्थाय परिक्रामति[2] ।)

तालीषु तार विटपेषु मन्द्र[3] शिलासु [4]रूक्ष सलिलेषु चण्डम् ।
सगीतवीणा इव ताडयमानास्तालानुसारेण पतन्ति धारा ॥ ५२ ॥

( इति निष्क्रान्ता सर्वे । )

[5]दुर्दिनो नाम पञ्चमोऽङ्क ।

---

तव प्रसादात् वसन्तसेनाप्रापणरूपात् सस्पर्शेन रोमाञ्चित जातरोम उत्पन्नसभोगाभिलाष च कदम्बपुष्पत्वमुपैति । काव्यलिङ्गनिदर्शनालकारौ । उपजातिश्छन्द ] ॥४७॥ **वर्षेति** । [ अविरता अविच्छिन्ना धारा यस्मिस्तद अविरतधार दुर्दिन वर्षशतमस्तु । शतह्लदा स्फुरतु । ] यदहमस्मद्विधदुर्लभया दरिद्रस्य वेश्यावाप्त्यसभवात् । [ प्रियया परिष्वक्त आलिङ्गित ॥ ४८ ॥ **धन्यानीति** । ये पुमास गृहमागताना कामिनीना मेघोदकशीतलानि आर्द्राणि गात्राणि आत्मन गात्रेषु परिष्वजन्ते तेषा जीवितानि धन्यानि खलु । इन्द्रवज्रा वृत्तम् ॥४९॥ **स्तम्भेष्विति** । स्तम्भेषु प्रचलित शिथिलित इत्यर्थ । य वेदिसचय तस्य अन्त यावत शीर्णत्वाद्वितान कथमपि धार्यते उपरि ध्रियते । एषा च चित्रभित्ति स्फुटितसुधाद्रवानुलेपात् सलिलभरेण वर्षोदकाधिक्येन सक्लिन्ना अत्यार्द्रा । प्रहर्षिणी वृत्तम् । ] प्रकृतिच्छन्दसा । वितान चन्द्रातप ॥५०॥ **विद्युदिति** । [ विद्युदेव जिह्वा यस्य तेन । महेन्द्रचापमेव उच्छ्रितौ आयतौ च भुजौ यस्य तेन । जलधर एव विवृद्धा हनुर्यस्य तेन । अन्तरीक्षेण विजृम्भित जृम्भाप्रदान

---

१ अन्तरि; २ क्रामत , अस्मात्पर-प्रिये पश्य, पश्य पश्य ३ मन्द ४ रुक्ष
५ इति मृच्छकटिकाया, मृ०प्रकरणे दु०

Dear Vasantasena,

The canopy, as it is torn, is with great difficulty supported on the pillars, as the ends of their close-bricked pedestals have been loosened And this painted wall, owing to its chunam paint being cracked, is thoroughly drenched by the torrent of water (50)

( *Looking upwards* ) Ah ! Here's a rain bow ! See, my dear, see !

The sky has here given a yawn as it were, with ( *i e* exhibiting ) its tongue in the form of the lightning, its uplifted long arms in the shape of ( Indra's ) rain bow, and an expansive chin in the form of the clouds (51)

Come, then, let us enter the inside ( *Gets up and walks about* )

Shrilly on the *tala* leaves, rumbling on the branches, harshly on stones and fiercely on the waters,—thus do the showers fall, resembling lutes played upon in musical concerts to the keeping of time (52)

( *Exeunt Omnes* )
*Thus ends Act V Styled*
' A STORMY DAY '

---

कृतमिवेत्युत्प्रेक्षा ।] आर्या। अनया च वेतालादिभयानकरूपवर्णनम् ॥ ५१ ॥

तालीष्विति । [ तालीषु तालीपत्रेषु तार विटपेषु शाखासु मन्द्र शिलासु रूक्ष सलिलेषु चण्ड तुमुलस्वनम् । एव ताड्यमाना सगीतवीणा इव धारा तालानुसारेण पतन्ति । उपमा । उपजातिच्छन्द ॥ ५२ ॥ ]

इति दुर्दिनो नाम पञ्चमोऽङ्कः ॥

# षष्ठोऽङ्कः ।

(तत प्रविशति चेटी ।)

**चेटी**—कथमद्याप्यार्या न विबुध्यते । भवतु । प्रविश्य प्रतिबोधयिष्यामि । (इति नाटयेन परिक्रामति ।) (कध अज्ज वि अज्जआ ण विबुज्झदि । भोदु । पविसिअ पडिबोधइस्सम् ।)

(तत प्रविशत्याच्छादितशरीरा प्रसुप्ता वसन्तसेना ।)

**चेटी**—( निरूप्य । ) उत्तिष्ठतूत्तिष्ठत्वार्या । प्रभात सवृत्तम् । ( उत्थेदु उत्थेदु अज्जआ । पभाद सवुत्तम ।)

**वसन्तसेना**—(प्रतिबुध्य[१] ।) कथ रात्रिरेव प्रभात सवृत्तम । (कध रत्ति ज्जेव पभाद सवुत्तम् । )

**चेटी**—अस्माकमेतत्प्रभातम् । आर्याया पुना रात्रिरेव । ( अम्हाण एसो पभादो । अज्जआए उण रत्ति ज्जेव ।)

**वसन्तसेना**—चेटि कुत पुनर्युष्माक द्यूतकर । ( हञ्जे कहि उण तुम्हाण जूदिअरो । )

**चेटी**—आर्ये वर्धमानक समादिश्य पुष्पकरडक जीर्णोद्यान गत आर्यचारुदत्त । (अज्जए वड्ढमाणअ समादिसिअ पुप्फकरण्डअ जिण्णुज्जाण गदो अज्जचारुदत्तो ।)

**वसन्तसेना**—किं समादिश्य । (किं समादिसिअ[२] ।)

**चेटी**—योजय रात्रौ प्रवहण वसन्तसेना गच्छत्विति । (जोएहि रादीए पवहण वसन्तसेना गच्छदु त्ति । )

**वसन्तसेना**—चेटि कुत्र मया गन्तव्यम । ( हञ्जे कहि मए गन्तव्वम ।)

**चेटी**—आर्ये यत्र चारुदत्त । (अज्जए जहिं चारुदत्तो ।)

**वसन्तसेना** - ( चेटी परिष्वज्य । ) चेटि सुष्ठु न निर्ध्यातो रात्रौ । तदद्य प्रत्यक्ष प्रेक्षिष्ये । चेटि किं प्रविष्टा ऽहमिहाभ्यन्तरचतु शालकम् । (हञ्जे सुट्ठु ण णिज्झाइदा रादीए । ता अज्ज पच्चक्खद पेक्खिस्सम् । हञ्जे किं पविट्ठा अह इह अब्भन्तरचदुस्सालअम् ।)

**चेटी**—न केवल मभ्यन्तरचतु शालकम् । सर्वजनस्यापि हृदय प्रविष्टा । (ण केवल अब्भन्तरचदुस्सालअम् । सव्वजणस्स वि हिअअ पविट्ठा ।)

**वसन्तसेना**—अपि सन्तप्यते चारुदत्तस्य परिजन । (अवि सतप्पदि चारु-दत्तस्स परिअणो ।)

---

१ प्रबुध्य २ सदिसिअ (सदिश्य) समासादिअ ३ अपर्याप्त (अपर्याप्त) (टी०)

**चेटी**—सतप्स्यति । (सतप्पिस्सदि ।)

**वसन्तसेना**—कदा । (कदा ।)

**चेटी**—यदाऽऽर्या गमिष्यति । (जदो अज्जआ गमिस्सदि ।)

**वसन्तसेना**—तदा मया प्रथम सतप्तव्यम् । (सानुनयम्[1] ।) चेटि गृहाणेमा रत्नावलीम् । मम भगिन्या आर्याधूतायै गत्वा समर्पय । वक्तव्य च—अह श्रीचारुदत्तस्य गुणनिर्जिता दासी तदा युष्माकमपि। तदेषा तवैव कण्ठाभरण भवतु रत्नावली । (तदो मए पढम सतप्पिदव्वम् । हञ्जे गेण्ह एद रअणावलिम् । मम बहिणिआए अज्जाधूदाए गदुअ समप्पेहि । भणिदव्व च—अह सिरिचारुदत्तस्स गुण-णिज्जिदा दासी तदा तुम्हाण वि । ता एसा तुह ज्जेव कण्ठाहरण होदु रअणावली ।)

**चेटी**—आर्ये कोपिष्यति चारुदत्त आर्यायै तावत् । (अज्जए कुपिस्सदि चारुदत्तो अज्जाए दाव ।)

**वसन्तसेना**—गच्छ । न कोपिष्यति । (गच्छ । ण कुपिस्सदि ।)

**चेटी**—(गृहीत्वा ।) यदार्याज्ञापयति । (इति निष्क्रम्य पुन प्रविशति ।) आर्ये भणत्यार्या धूता—आर्यपुत्रेण युष्माक प्रसादीकृता । न युक्त ममैता ग्रहीतुम् । आर्यपुत्र एव ममाभरणविशेष इति जानातु भवती । (ज अज्जआ आणवेदि । अज्जए भणादि अज्जा धूदा—अज्जउत्तेण तुम्हाण पसादीकिदा । ण जुत्त मम एद गेण्हिदुम् । अज्जउत्तो ज्जेव मम आहरणविसेसो त्ति जाणादु भोदी ।)

(तत प्रविशति दारक गृहीत्वा रदनिका ।)

**रदनिका**—एहि वत्स शकटिकया क्रीडाव । (एहि वच्छ सअडिआए कीलम्ह ।)

**दारक**—(सकरुणम् ।) रदनिके कि ममैतया मृत्तिकाशकटिकया । तामेव सौवर्णशकटिका देहि । (रदणिए किं मम एदाए मट्टिआसअडिआए । त ज्जेव सोवण्णसअडिअ देहि ।)

**रदनिका**—(सनिर्वेद नि श्वस्य ।) जात कुतोऽस्माक सुवर्णव्यवहार । तातस्य पुनरपि ऋद्धया सुवर्णशकटिकया क्रीडिष्यसि । तद्यावद्विनोदयाम्येनम् । आर्याया वसन्तसेनाया समीपमुपसर्प्स्यामि । (उपसृत्य ।) आर्ये प्रणमामि । (जाद कुदो अम्हाण सुवण्णववहारो । तादस्य पुणो वि रिद्धीए सुवण्णसअडिआए कीलिस्ससि । ता जाव विणोदेमि णम् । अज्जआए वसन्तसेणाए समीव उव-सप्पिस्सम्[2] । अज्जए पणमामि ।)

**वसन्तसेना**—रदनिके स्वागत ते । कस्य पुनरय दारक । अनलकृतशरीरोऽपि चन्द्रमुख आनन्दयति मम हृदयम् । (रदणिए साअद दे । कस्स उण अअ दारओ । अणलकिदसरीरो वि चन्दमुहो आणन्देदि मम हिअअम् ।)

---

१ सानुकम्पम्. २ उपसप्पामि

THE MAID—They will feel distressed

VAS —When ?

THE MAID—When your ladyship will depart

VAS —Then I shall be the first to be distressed! (*Persuasively*) Girl, take this jewel necklace and go and give it to my sister, the worthy Dhuta And sap to her (in my name) —"I am a slave, of his honour Charudatta, bought by his merits, and so I am of you also Let, therefore, this pearl-necklace be (worn as) an ornament round the neck by you"

THE MAID—Madam, but Charudatta would get angry with her ladyship!

VAS —Go, he won't be angry

THE MAID—(*Takes it*) As your ladyship orders (*Goes out and again enters*) Madam, her ladyship Dhuta says —"This is given to you by my husband as (a mark of) his favour So it would not be right for me to take it And please be it known to you that my husband himself is my best ornament"

(*Then enter* Radanika, *with* Charudatta's Son)

RAD —Come, dear, we shall play with this little cart

THE SON—(*Crying*) O Radanika, what do I care for this small clay-cart ? Give me that same golden cart.

RAD —(*Sighing dejectedly*) Child, whence can we handle gold now ? When prosperity will come to your papa again, then you will play with a golden cart — Let me in the meanwhile (try to) amuse him (i e divert his attention) I'll go into the presence of her ladyship Vasantasena (*Approaching*) Madam, I salute you!

VAS —Welcome to you, O Radanika! Well, whose son is this ? The moon-faced one gladdens my heart, even though his body is unadorned with ornaments

---

सत्यम्। बालहस्ताभ्या सुवर्णपूर्णा शकटिका दारक च स्वय गृहीत्वा निष्क्रान्ता। उद्घाटितपक्षद्वारकम्। ही ही इत्यकस्मात्स्मरणविषये। जाणत्थलके यानास्तरणकम्। णस्साकदुआ नासिकारज्ज्वा दुःसहा। अतोऽतिक्रम सभाव्यते 'णस्साकडुआ' इत्यपि पाठ। तत्र नस्यकटुका इत्यर्थ। बइल्ला बलीवर्दा। द्यूतपलायित इव द्यूतकर सभिकमिव मा दृष्ट्वा प्रच्छादितशरीर। एतेनार्यकस्य पलायनमुपक्षिप्तम्। एआई तवस्सी एकाकी वराक। एशे आअदे इति चक्रपरिवर्त्तिदानार्थम्।

RAD —He is the son of the worthy Charudatta, Rohasena by name

VAS —( *Stretching forth her arms* ) Come, my child, embrace me ! ( *Seating him on her lap* ) He resembles his father in his beauty

RAD —Not only in beauty, but I think in character, too The noble Charudatta finds recreation in his company

VAS —And for what reason is he crying ?

RAD —He was playing with a small golden cart belonging to the son of a gentleman ( *lit* head of a house ) who lives next door And that was taken away by him Then, as he asked for it again, I made this clay cart and gave it to him Thereupon he says—" O Radanika, what do I care for this small clay-cart ! Give me that same golden one "

VAS —Oh, alas ! Oh, alas ! He, too, should be distressed at ( the sight of ) other people's wealth ! O divine Fate, you do indeed sport with the fortunes of men, resembling ( *i e* as evanescent as ) the drops of water fallen on lotus leaves ! ( *Tearfully* ) Child, do not cry, you will play with a cart of gold

THE SON—O Radanika who is this lady ?

VAS —A slave of your father, bought by his merits

RAD —Child, her ladyship is your mother

THE SON—Radanika, you are telling a lie, ( for ) if her ladyship is my mother, then why has she put on ornaments ?

VAS —Child, with your innocent lips you are saying something most touching ( *Gesticulates taking off the ornaments, weeping* ) Now here I have become your mother ! So please take these ornaments, and get a golden cart made ( out of them )

---

अतोऽपि च शकारलाघवमुक्तमित्यवधेयम् । भारवत सभारमित्यर्थ । मत्वर्थीय । गोणा गाव । परिभ्रष्टो बन्धनभेदादपगत । हित्वेति । [ महान्त नरपतिना बन्धन कारागृहेऽवरोध नरपतिबन्धनमपदेशो यस्या सा नरपतिबन्धनापदेशा या व्यापत्ति तत्सबन्धि यद् व्यसन दुख सकट वा तदेव महार्णवस्त हित्वा । पादाग्रस्थित निगडस्य एकपाशस्त कर्षतीति तथा सन अह बन्धनात्प्रभ्रष्ट गज इव भ्रमामि । प्रहर्षिणी वृत्तम ॥ १ ॥ विशसन वधस्थानभूते । मार्गणाय इति वा । 'निमित्तात्कर्मयोगे' इति सप्तमी । गूढागारे कारागृहे । [illegible] । यदि मे भाग्यानि । राज्यप्राप्तिरूप भाग्यमित्यर्थ । [illegible] तेन राज्ञा बन्ध-

**दारक**—अपेहि । न ग्रहीष्यामि । रोदिषि त्वम् । (अवेहि । ण गेण्हिस्सम् । रोदसि तुमम् ।)

**वसन्तसेना**—(अश्रूणि प्रमृज्य ।) जात न रोदिष्यामि । गच्छ । क्रीड । (अलकारैर्मृच्छकटिक पूरयित्वा ।) जात कारय सौवर्णशकटिकाम् । (जाद ण रोदिस्सम् । गच्छ । कील । जाद कारेहि सोवण्णसअडिअ ।)

(इति दारकमादाय निष्क्रान्ता रदनिका ।)

(प्रविश्य प्रवहणाधिरूढ ।)

**चेट**—रदनिके रदनिके निवेदयार्यायै वसन्तसेनायै—अपवारित[1] पक्षद्वारके सज्ज प्रवहण तिष्ठति । (लदणिए लदणिए णिवेदेहि अज्जआए वशन्तशेणाए—ओहालिअ पक्खदुआरए शज्ज पवहण चिश्टदि ।)

(प्रविश्य ।)

**रदनिका**—आर्ये एष वर्धमानको विज्ञापयति—पक्षद्वारे सज्ज प्रवहणमिति । (अज्जए एसो वड्ढमाणओ विण्णवेदि—पक्खदुआरए सज्ज पवहण त्ति ।)

**वसन्तसेना**—चेटि तिष्ठतु मुहूर्तकम् । यावदहमात्मान प्रसाधयामि । (हञ्जे चिट्ठदु मुहुत्तअम् । जाव अह अत्ताणअ पसाधेमि ।)

**रदनिका**—(निष्क्रम्य ।) वर्धमानक तिष्ठ मुहूर्तकम् । यावदार्याऽऽत्मान प्रसाधयति । (वड्ढमाणआ चिट्ठ मुहुत्तअम । जाव अज्जआ अत्ताणअ पसाधेदि ।)

**चेट**—ही ही भो । मयाऽपि यानास्तरण विस्मृतम् । तद्यावद्गृहीत्वाऽऽगच्छामि । एतौ नासिकारज्जुकटुकौ बलीवर्दौ । भवतु प्रवहणेनैव गतागर्ति करिष्यामि । (इति निष्क्रान्तश्चेट ।) (ही ही भो । मए वि जाणत्थलके विशुमलिदे । ता जाव गेण्हिअ आअच्छामि । एदे णश्शालज्जुकडुआ बइल्ला । भोदु । पवहणेण ज्जेव गदागदिं कलिश्शम् ।)

**वसन्तसेना**—चेटि उपनय मे प्रसाधनम् । आत्मान प्रसाधयिष्यामि । (इति प्रसाधयन्ती स्थिता ।) (हञ्जे उवणेहि मे पसाहणम् । अत्ताणअ पसाधइस्सम् ।)

(प्रविश्य प्रवहणाधिरूढ ।)

---

नाग इव सयमितोऽस्मि बद्धोऽस्मि । दैवी देवसबन्धिनी सिद्धि लङ्घयितु न शक्या च । बन्धन न भाव्यार्थप्रतीकार इति भावा । तथापि गम्यो नृप सर्वेषा सेव्यो हि राजा । बलवता सह क विरोधो वैरम् । वसन्ततिलका वृत्तम् ]॥ २ ॥ **इदमिति** । [ इद गृह भिन्न विश्लिष्टसधिबन्धनमित्यथ । **महाकपाट अदत्त दण्ड** अर्गला यस्य तथा विशीर्ण सधि फलकसयोगो यस्य **तथाभूतश्च । ध्रुव नूनमय**

---

१ अवघाटित (अपवृत) इति च्छायापा०

THE SON—Get away ! I won't take them ! You are weeping !

VAS —( *Wiping her tears* ) Child, I will not cry Go and play ( *Fills the clay-cart with her ornaments* ) Child, get a golden cart made ( out of these )

( *Exit* Radanika, *with the* Son )

( *Entering, mounted on a chariot* )

CHETA—Radanika, O Radanika ! Please tell her ladyship Vasantsena, that the covered car is ready at the side-door

( *Entering* )

RAD —Madam, here this Vardhamanaka announces that the carriage is ready at the side-door

VAS —Girl, let it wait for some time, in the meanwhile I shall get through my toilet

RAD —( *Going out* ) Vardhamanaka, wait awhile, until her ladyship has finished her toilet.

CHETA—Ah, yes ! I too have forgotten the carriage cushions So in the meanwhile, I'll just ( go and ) come back with them But these bullocks are restive because of their ( new ) nose-rope. Well, I'll go and come back in the car itself

( *Exit* Cheta )

VAS —Bring me my toilet things, girl I'll get through my toilet ( *Remains engaged in dressing* )

( *Entering, mounted on a car* )

---

कुटुम्बी गृहस्वामी व्यसनाभिभूता दारिद्र्योपहता दशा प्रपन्न सन् मम तुल्यभाग्य मत्सदृशभागधेयो वर्तते । उपेन्द्रवज्रा वृत्तम् ॥ ३ ॥ **भवेदिति** । इद विषमशीलै विसदृशस्वभावै न च अधिगतम् । गोष्ठी समाजस्तस्य यान भवेत् । अथ वा वधूसयान स्त्रीवाहन तस्या अभिगमनायोपस्थित भवेत् । वा अथ वा प्रवरजनयोग्यं सद्विधिवशाद्दैवबलाद्वहिर्नेतव्य भवेत् । विविक्तत्वात्परिजनादिराहित्यात् शून्य मम खलु दैवविहित दैवप्रापित भवेत् । सदेहालकार । शिखरिणी वृत्तम् ] ॥ ४ ॥ **किमित्यादि** । गाथा । [ किं विश्रद्धा असरब्धा गच्छथ । य स गोपालदारको बद्ध स नरपतिहृदय च बन्धन चापि सम युगपदेव भित्त्वा व्रजति ] ॥ ५ ॥ पुरत्थिमे पूर्वस्मिन् । [ प्रतोलीद्वारे रथ्यामुखे । पूर्वनगरद्वारे इत्यर्थ । ] आगच्छतेति । गाथापञ्चकम् । [ विश्वस्ता सुविश्रब्धा आगच्छत । लघु द्रुत कुरुत कार्यं । निर्वहत ] ॥६॥ **उद्यानेष्विति** ॥ ७ ॥ रे रे इति ॥ ८ ॥ **कस्याष्टम इति** । **भणेति** । [ युग्मम् । अष्टम जन्मराशितोऽष्टमराशिस्थ । एवमुत्तरत्रापि । भार्गवग्रह शुक्र. । भूमिसुतो

**स्थावरक चेट**—आज्ञप्तोऽस्मि राजश्यालकसंस्थानेन—स्थावरक प्रवहणं गृहीत्वा पुष्पकरण्डक जीर्णोद्यानं त्वरितम् आगच्छेति । भवतु । तत्रैव गच्छामि ।—वहत बलीवर्दौ वहतम् । (परिक्रम्यावलोक्य च ।) कथ ग्रामशकटै रुद्धो मार्ग । किमिदानीमत्र करिष्यामि । (साटोपम ।) अरे रे अपसरत अपसरत । (आकर्ण्य ।) किं भणथ—एतत्कस्य प्रवहणमिति । एतद्राजश्यालकसस्थानस्य प्रवहणम् । तच्छीघ्रमपसरत । (अवलोक्य ।) कथमेषोऽपर सभिकमिव मा प्रेक्ष्य सहसैव द्यूतपलायित इव द्यूतकरोऽपवार्यात्मानमन्यतोऽपक्रान्त । तत्क पुनरेष । अथ वा किं ममैतेन । त्वरित गमिष्यामि । अरे रे ग्राम्या अपसरत अपसरत । किं भणथ—मुहूर्तक तिष्ठ । चक्रपरिवृत्ति देहीति । अरे रे राजश्यालकसस्थानस्याहं शूरश्चक्रपरिवृत्ति दास्यामि । अथ वैष एकाकी तपस्वी । तदेव करोमि । एतत्प्रवहणमार्यचारुदत्तस्य वृक्षवाटिकाया पक्षद्वारके स्थापयामि । (इति प्रवहण सस्थाप्य ।) एषोस्म्यागत । (इति निष्क्रान्त ।) (आणत्तम्हि लाअशालअशठाणेण—थावलआ पवहण गेण्हिअ पुप्फकलण्डअ जिण्णुज्जाण तुलिद आअच्छेहि त्ति । भोदु । तहिं ज्जेव गच्छामि ।—वहध बइल्ला वहध । कध गामशअलेहिं लुद्धे मग्गे । किं दाणिं एत्थ कलइश्शम् । अले ले ओशलध ओशलध । किं भणाध—एशे कश्शकेलके पवहणे त्ति । एशे लाअशालअशठाणकेलके पवहणम् । ता शिग्घ ओशलध । कध एशे अवले शहिअ विअ म पेक्खिअ शहश ज्जेव जूदपलाइदे विअ जूदिअले ओहालिअ अत्ताणअ अण्णदो अवक्कन्ते । ता को उण एशे । अध वा किं मम एदिणा । तुलिद गमिश्शम् । अले ले गामेलुआ ओशलध ओशलध । किं भणाध—मुहुत्तअ चिट्ठ । चक्कपलिवट्टिं देहित्ति । अले ले लाअशालअशठाणकेलके हगे शूले चक्कपलिवट्टिं दइश्शम् । अध वा एशे एआई तवश्शी । ता एव्व कलेमि । एद पवहण अज्जचालुदत्तश्श रुक्खवाडिआए पक्खदुआलए थावेमि । एशे म्हि आअदे ।)

**चेटी**—आर्ये नेमिशब्द इव श्रूयते । तदागत प्रवहणम् । (अज्जए णेमिसद्दो विअ सुणीअदि । ता आअदो पवहणो ।)

**वसन्तसेना**—चेटि गच्छ । त्वरते मे हृदयम् । तदादिश पक्षद्वारम् । (हञ्जे गच्छ । तुवरदि मे हिअअम् । ता आदेसेहि पक्खदुआलम् ।)

**चेटी**—एत्वेत्वार्या । (एदु एदु अज्जआ ।)

**वसन्तसेना**—(परिक्रम्य ।) चेटि विश्राम्य त्वम् । (हञ्जे वीसम तुमम् ।)

**चेटी**—यदार्याऽऽज्ञापयति । (इति निष्क्रान्ता ।) (ज अज्जआ आणवेदि ।)

**वसन्तसेना**—(दक्षिणाक्षिस्पद सूचयित्वा प्रवहणमधिरुह्य च ।) किं न्विद स्फुरति दक्षिण लोचनम् । अथ वा चारुदत्तस्यैव दर्शनमनिमित्त प्रमार्जयिष्यति । (किं ण्णेद फुरदि दाहिण लोअणम् । अध वा चारुदत्तस्स ज्जेव दसण अणिमित्त पमज्जइस्सदि ।)

STHA'VARAKA CHETA—Samsthanaka, the King's brother-in-law, has ordered me—"Sthavaraka, take the car and come quickly to the old garden, *Pushpakarandaka* ' Well, then, I'll just go there —Speed on, bullocks, speed on ! ( *Driving on and observing* ) How ! The village carts have blocked the road ! Now, what shall I do here ? ( *Haughtily* ) You there get out, get out ( of the way ) ! ( *Listening* ) What do you ask—"Whose car is that " ? This is the car of Samsthanaka, the King's brother in-law ! So get out ( of the way ) quickly ! ( *Seeing* ) How ! Here's a person who, on seeing me, suddenly concealed himself and made off in another direction, like a gambler, ( who is ) running away from the game, ( making off ) at the sight of the gambling-master ! So who may he be ? Or, what have I to do with him ? I'll go on quickly You there, yokels, get out, get out ( of my way ) ! What do you say—"Stop awhile, and give a turn to this wheel " ? Eh, you ! Am I, the brave ( servant ) of Samsthanaka, the King's brother-in-law, to help you to a twist of the wheel ? Or rather, he is alone, poor chap So I'll manage thus I'll stop this car near the side-door of the garden of the noble Charudatta ( *Stopping the car accordingly* ) Here I am coming ! ( *Exit* )

THE MAID—Madam, a sound like that of the rims (of wheels) is heard So the carriage must have come

VAS —Maid, go, my mind is in a hurry, so tell me ( the way to ) the side door

THE MAID—Come ( this way ), madam, come !

VAS—( *Walking about* ) Girl, you may ( now ) retire

THE MAID—As your ladyship orders. ( *Exit* )

VAS—( *Showing that her right eye throbs, and mounting the car* ) Why, I wonder, does this right eye of mine throb ? Or, rather the sight of Charudatta himself will dispel ( all ) evil omens !

---

मङ्गल । जीवो गुरु । सूर सूर्यस्तत्सुत शनि । एते ग्रहा उक्तस्थानस्थिता अत्यन्तानिष्टा जीवितापहा । गोपालदारकमपहृरत कस्य मृत्युरुपस्थित इत्यर्थ । अष्टमसूर्यफल मरणम । चतुर्थचन्द्रफल कुक्षिरोग । षष्ठशुक्रफल बुद्धिहानि । पञ्चममङ्गलफल क्षति । षष्ठगुरुफल शोक शत्रुपीडा च । नवमशनैश्चरफलमथनाश । अत्र बादरायण —'हुतवहभयमारश्चन्द्रज सौख्यमुग्र धनहरणमथार्किर्भार्गवश्चार्थलाभम् । मरणमथ पतङ्ग स्थाननाश सुरेज्य सृजति निधनसस्थो नेत्ररोग च चन्द्र ।

( प्रविश्य । )

**स्थावरक चेट**—अपसारिता मया शकटा । तद्यावद्गच्छामि । (इति नाट्येनाधिरुह्य चालयित्वा । स्वगतम् ।) भारवत्प्रवहणम् । अथ वा चक्रपरिवर्तनेन परिश्रान्तस्य भारवत्प्रवहण प्रतिभासते । भवतु । गमिष्यामि ।—यात गावौ यातम् । ( ओशालिदा मए शअडा । ता जाव गच्छामि । भालिके पवहणे । अध वा चक्कपलिवट्टिआए पलिश्शन्तश्श भालिके पवहणे पडिभाशेदि । भोदु । गमिश्शम् । —जाध गोणा जाध ।)

( नेपथ्ये ।)

अरे रे दौवारिका अप्रमत्ता स्वेषु स्वेषु गुल्मस्थानेषु भवत । एषोऽद्य गोपालदारको गुप्ति भङ्क्त्वा गुप्तिपालक व्यापाद्य बन्धन भित्त्वा परिभ्रष्टोऽप-क्रामति । तद्गृह्णीत गृह्णीत । (अरे रे दोवारिआ अप्पमत्ता सएसु सएसु गुम्मट्ठाणेसु होध । एसो अज्ज गोवालदारओ गुत्तिअ भञ्जिअ गुत्तिवालअ वावादिअ बन्धण भेदिअ परिब्भट्ठो अवक्कमदि । ता गेण्हध गेण्हध । )

( प्रविश्यापटीक्षेपेण सभ्रान्त एकचरणलग्ननिगडोऽवगुण्ठित
आर्यक परिक्रामति । )

**चेट**—( स्वगतम् । ) महान्नगर्या सभ्रम उत्पन्न । तत्त्वरित त्वरित गमिष्यामि । (इति निष्क्रान्त ।) (महन्ते णअलीए शभमे उप्पण्णे । ता तुलिद तुलिद गमिश्शम् ।)

**आर्यक**—

**हित्वाऽह नरपतिबन्धनापदेश-**
**व्यापत्तिव्यसनमहार्णव[1] महान्तम् ।**
**पादाग्रस्थितनिगडैकपाशकर्षी[2]**
**प्रभ्रष्टो गज इव बन्धनाद्भ्रमामि ॥ १ ॥**

भो अह खलु सिद्धादेशजनितपरित्रासेन राज्ञा पालकेन घोषादानीय विशसने गूढागारे बन्धनेन बद्ध । तस्माच्च प्रियसुहृच्छर्विलकप्रसादेन बन्धनात्परिभ्रष्टोऽस्मि । ( अश्रूणि विसृज्य । )

**भाग्यानि मे यदि तदा मम कोऽपराधो**
**यद्वन्यनाग इव सयमितोऽस्मि तेन ।**
**दैवी च सिद्धिरपि लङ्घयितु न शक्या**
**गम्यो नृपो बलवता सह को विरोध ॥ २ ॥**

तत्कुत्र गच्छामि मन्दभाग्य । ( विलोक्य । ) इद कस्यापि साधोरना-वृतपक्षद्वार गेहम् ।

---

१ महार्हण २ पाशकर्षम्.

( *Entering* )

STHAVARAKA CHETA—I have cleared off these ( blocking ) carts. So then I'll proceed ( *Shows that he mounts and drives, to himself* ) The vehicle is heavy ! Or rather, it appears heavy to me as I have been fatigued with turning that wheel All right I'll proceed — Push on, bullocks, push on !

( *Behind the curtains* )

O you ( all ) gate-keepers ! Keep a vigilant watch at your respective guard po ts ! For now this cowherd's son ( Aryaka ) has broken through the prison by killing his jailor, he has cut his chains, and has given us the slip, he is escaping ! So capture him, do capture him !

( *Then enter with a toss of the curtain in great hurry, A'ryaka, veiled, and with a chain still clinging to one foot, he walks about* )

CHETA — ( *To himself* ) There has sprung up a great commotion in the city So I'll go very quickly. ( *Exit* )

ARYAKA—

Like an elephant that has broken loose from his tying-post, I am ( now ) wandering about, dragging the one remaining fetter of the chain clinging to the forepart of my foot, having escaped from the terrible great ocean of the calamity of death (commonly) called 'the king s prison' ( 1 )

Oh ! I was forsooth brought from the cowherd's hamlet by king Palaka, frightened by the prophecy of a seer, and was then kept bound with a chain in a secret death-dealing dungeon And I have ( now ) escaped from that imprisonment by the favour of my dear friend, Sarvilaka ( *Shedding tears* )

If I do possess ( future ) good luck, then what fault is it of mine, that he should have imprisoned me, as one does a wild elephant ? And moreover, one cannot oppose the workings of Destiny ( But still ), the king is one to whom all pay homage, what hostility can there be against ( such ) a powerful person ? (2)

So then, where shall I, the unlucky one, go ? ( *Seeing* ) Here is the house of some good man, with its side-door open !

---

सूक्ष्मा शास्त्रविबोधिकामपि धिय मूढा करोत्यङ्गिरा घोरा दु खपरपरा दिनकर कुक्ष्यामय चन्द्रमा । सौम्यो रोगविनाशमिच्छति नृणा रोगक्षय भार्गवो भौम शत्रुभय चतुर्थभवने सौरिश्च वित्तक्षयम् ॥ स्थिताः षष्ठे राशौ दिनकरमहीजार्कतनया

इद गृह भिन्नमवत्तखण्डो[1] विशीर्णसंधिश्च महाकपाट ।
ध्रुव कुटुम्बी व्यसनाभिभूता दशां प्रपन्नो मम तुल्यभाग्य ॥ ३ ॥

तदत्र तावत्प्रविश्य तिष्ठामि ।

( नेपथ्ये । )

यात गावौ यातम् । (जाध गोणा जाध ।)

आर्यक —(आकर्ण्य ।) अये प्रवहणमित एवाभिवर्तते ।

भवेद्गोष्ठीयान न च विषमशीलैरधिगत
वधूसयान वा तदभिगमनोपस्थितमिदम् ।
बहिर्नेतव्य वा प्रवरजनयोग्य विधिवशा
द्विविक्तत्वाच्छून्य मम खलु भवेद्दैवविहितम् ॥ ४ ॥

( तत प्रवहणेन सह प्रविश्य । )

वर्धमानक चेट—आश्चर्यम । आनीतं मया यानास्तरणम् । रदनिके निवेदयार्यायै वसन्तसेनायै—अवस्थित सज्ज प्रवहणमधिरुह्य पुष्पकरण्डक जीर्णोद्यान गच्छत्वार्या । (हीमाणहे । आणीदे मए जाणत्थलके । लदणिए णिवेदेहि अज्जआए वशन्तशेणाए—अवत्थिदे शज्जे पवहणे अहिलुहिअ पुप्फकलण्डअ जिण्णुज्जाण गच्छदु अज्जआ । )

आयक —( आकर्ण्य । ) गणिकाप्रवहणमिदम् । बहिर्यान च । भवतु । अधिरोहामि । ( इति स्वैरमुपसर्पति । )

चेट —( श्रुत्वा । ) कथ नूपुरशब्द । तदागता खल्वार्या । आर्ये इमौ नासिकारज्जुकटुकौ बलीवर्दौ । तत्पृष्ठत एवारोहत्वार्या । (कध णेउलशद्दे । ता आअदा क्खु अज्जआ । अज्जए इमे णश्शालज्जुकडुआ बइल्ला । ता पिट्ठदो[2] ज्जेव आलुहदु अज्जआ । )

( आर्यकस्तथा करोति । )

चेट —पादोत्फालचालितानां नूपुराणा विश्रान्त शब्द । भाराक्रान्त च प्रवहणम । तथा तर्कयामि सांप्रतमार्ययाऽऽरूढया भवितव्यम् । तद्गच्छामि ।—यात गावौ यातम् । ( इति परिक्रामति । ) ( पादुप्फालचालिदाण णेउलाण वीशन्तो शद्दो । भलक्कन्ते अ पवहणे । तधा तक्केमि शपद अज्जआए आलूढाए होदव्वम् । ता गच्छामि ।—जाध गाणा जाध । )

( प्रविश्य । )

वीरक —अरे रे अरे जय जयमान चन्दनक-मङ्गल-पुष्पभद्र-प्रमुखा ।

किं गच्छथ विश्रब्धा य स गोपालदारको बद्ध ।
भित्त्वा सम व्रजति नरपतिहृदय च बन्धन चापि ॥ ५ ॥

---

१ मनायतार्गलम् २ पिश्टदो

This house is in ruins, and this big panel of its gate has no belt fixed to it, and is cracked at its joints Surely this householder, whose fortunes resemble mine, must have been (recently) reduced to a wretched (i e penniless) condition! (3)

(*Behind the curtains*)

Push on, bullocks, push on!

ARYAKA—(*Listening*) Ah! A carriage is coming in this very direction!

Can it be the carriage of a picnic-party, not occupied by ill natured people? Or perhaps it is a bride s carriage, arriving to take her away Or by good luck, it is to be taken outside (the city), intended for some high personage As it is unattended I fervently hope that it may be empty, sent unto me by my good luck! (4)

(*Then entering with the chariot*)

VARDHAMA NAKA CHETA—Fine! I have brought those carriage-cushions O Radanika, tell her ladyship Vasantasena, that she may get into the carriage which stands (here) ready, and proceed to the old garden *Pushpakarandaka*

ARYAKA----(*Listening*) This carriage belongs to a courtesan, and it is to go outside (the city) All right, I'll mount it (*Approaches gently*)

CHETA—(*Hearing*) How! These are anklets jingling! So her ladyship must have come --Madam, these bullocks are restive on account of their (new) nose rope So you should mount it from the back

(Aryaka *does accordingly*)

CHETA--The jingling of the anklets shaken by the movement of the feet has (now) ceased, and the carriage has become heavy So I take it that her ladyship must have now mounted. So then I'll proceed --Speed on, bullocks, speed on! (*Drives on*)

(*Entering*)

VIRAKA--Ho, there! You, Jaya, Jayamana Chandanaka, Mangala Pushpabhadra, and the rest!

How is it that you are walking about at ease? That cowherd's son who was put in jail,—he is escaping, having simultaneously broken the heart of the king and his chains! (5)

अरे पुरस्तात्प्रतोलीद्वारे तिष्ठ त्वम् । त्वमपि पश्चिमे त्वमपि दक्षिणे त्वमप्युत्तरे । योऽप्येष प्राकारखण्ड एनमधिरुह्य चन्देनेन सम गत्वाऽवलोकयामि । एहि चन्दनक एहि । इतस्तावत् ।

(अरे रे अरे जअ-जअमाण-चन्दणअ-मङ्गल फुल्लभद्द-प्पमुहा ।

किं [१]अच्छव वीसद्धा जो सो गोवालदारओ बद्धो ।
भेत्तूण सम वच्चइ णरवइहिअअ अ बन्धण चावि ॥

अले पुरत्थिमे पदोलीदुआरे चिट्ठ तुमम् । तुम पि पच्छिमे तुम पि दक्खिणे तुम पि उत्तरे । जो वि एसो पाआरखण्डो एद अहिरुहिअ चन्दणेण सम गदुअ अवलोएमि । एहि चन्दणअ एहि । इदो दाव ।)

(प्रविश्य सभ्रान्त ।)

चन्दनक —अरे रे वीरक-विशल्य भीमाङ्गद-दण्डकालक दण्डशूर प्रमुखा ।

आगच्छत विश्वस्तास्त्वरित यतध्व लघु कुरुत ।
लक्ष्मीर्येन न राज्ञ प्रभवति गोत्रान्तर गन्तुम् ॥ ६ ॥

(अरे रे वीरअ-विसल्ल-भीमङ्गअ दण्डकालअ-दण्डसूरप्पमुहा ।

आअच्छध वीसत्था तुरिअ जत्तेह लहु करेज्जाह ।
लच्छी जेण ण रण्णो पहवइ गोत्तन्तरं गन्तुम् ॥ )

अपि च ।

उद्यानेषु सभासु च मार्गे नगर्यामापणे घोषे ।
त तमन्वेषयत त्वरितं शङ्का वा जायते यत्र ॥ ७ ॥
रे रे वीरक किं किं दर्शयसि भणसि तावद्विश्रब्धम् ।
भित्त्वा च बन्धनक क स गोपालदारक हरति ॥ ८ ॥
कस्याष्टमो दिनकर कस्य चतुर्थश्च वर्तते चन्द्र ।
षष्ठश्च भार्गवग्रहो भूमिसुत पञ्चम कस्य ॥ ९ ॥
भण कस्य जन्मषष्ठो जीवो नवमस्तथैव सूरसुत ।
जीवति चन्दनके क स गोपालदारक हरति ॥ १० ॥

(अवि अ ।

उज्जाणेसु सहासु अ मग्गे णअरीअ आवणे घोसे ।
त त जोहह तुरिअ सङ्का वा जाअए जत्थ ॥
रे रे वीरअ किं किं दरिसेसि भणाहि दाव वीसद्धम् ।
भेत्तूण अ बन्धणअ को सो गोवालदारअ हरइ ॥

---

१ 'स्थ,' 'तिष्ठथ,' इति च्छायाया०

Eh, you, stand at the eastern gate of the main street ! And you, too, at the western,--and you at the southern,—and you at the northern ! And this part of the rampart here,—to the same I'll go and mount, and observe ( the place around ) in the company of Chandanaka Come, Chandanaka, come ! This way, here !

( *Entering, in excitement* )

CHANDANAKA—Ho, there ! Viraka, Visalya, Bhimangada, Dandakalaka, Dandasura, and the rest of you !

Come confidently, strive quickly and make haste, so that Royalty will be unable to move to another family ! ( 6 )

And moreover—

In gardens, in gambling saloons, on roads, in the city, in markets, and in stables,—quickly search every person about whom you may have a suspicion ! ( 7 )

Oh, O Viraka ! What—what do you want me to see ? You may speak without hesitation Who is he that is rescuing that cowherd's son, having cut asunder his fetters ? (8)

Who has the Sun in the eighth mansion ( in his horoscope ) ? —or the Moon in the fourth, or the planet Venus in the sixth, or Mars, the son of the Earth, in the fifth ? (9)

Say, who has Jupiter in the sixth mansion of his birth-horoscope, or Saturn, the son of the Sun, in the ninth ? Who is he that is rescuing that cowherd's son, while Chandanaka is alive ? (10)

---

बुधश्चन्द्रश्चैव प्रचुरधनधान्यानि ददति । समृद्धिं शत्रूणा मनसिजविषाद सुरगुरु-र्भृगुर्नाश कुर्याद्युवतिकृतवैर च परमम् ।। दौर्भाग्य शशलाञ्छन क्षितिसुतश्चोद्विग्नता चेतस ' इत्यादि । 'धर्मस्थाने दिनकरसुतो नाशमर्थस्य कुर्यात्' इत्यादि । अत्र पृथ्वी-धरोक्तश्लोकाशा सम्यक्तया नोपलभ्यन्ते इति न निवेशिता । ते बृहत्संहिताया द्रष्टव्या ।। ९ ।। १० ।। अपहरतीत्यादि । गाथा । खुटित छिन्नबन्ध इत्यर्थे प्राकृतम् ।। ११ ।। अपवारितमित्यादि । गाथा । उद्घाटित प्रवहणम् । एव तावद्विचारय कस्य कुत्र वा प्रवसित प्रवहणमिति ।। १२ ।। कस्तमिति । द्वावेवेति । गाथाद्वयम् । [ गुणा-नामरविन्द कमल मधुन इव निवासस्थानम् । यद्वा गुणा अरविन्द इव यस्य । शीलस्य मृगाङ्क चन्द्रमिव स्थितम् । आपन्नाना विपद्ग्रस्ताना शरणमागताना वा मोक्ष दु ख-मुक्तिस्थानम् । यद्वा ] आपन्नदु खस्य मोक्षो यतस्त चतु सागरसारक रत्नम् । [ तिलक

कस्सट्टमो दिणअरो कस्स चउत्थो अ वट्टए चन्दो ।
छट्ठो अ भग्गवगहो भूमिसुओ पञ्चमो कस्स ॥
भण कस्स जम्मछट्ठो जीवो णवमो तहेअ सूरसुओ ।
जीअन्ते चन्दणए को सो गोवालदारअ हरइ ॥ )

वीरक —भट चन्दनक ।

अपहरति[1] कोऽपि त्वरित चन्दनक शपे तव हृदयेन ।
यथाऽर्धोदितदिनकरे गोपालदारक खुटित[2] ॥ ११ ॥

(भट्ट चन्दणआ ।

अवहरइ कोवि तुरिअ चन्दणअ सवामि तुज्ज हिअएण ।
जह अद्धुइददिणअरे गोवालअदारओ खुडिदा ॥ )

चेट —यात गावौ यातम् । (जाव गोणा जाव ।)

चन्दनक —( दृष्ट्वा । ) अरे रे पश्य पश्य ।

अपवारित प्रवहण व्रजति मध्येन राजमार्गस्य ।
एतत्तावद्विचारय कस्य कुत्र प्रोषित प्रवहणमिति ॥ १२ ॥

( अरे रे पेक्ख पेक्ख ।

ओहारिओ पवहणो वच्चइ मज्झेण राअमग्गस्स ।
एद दाव विआरह कस्स कहिं पवसिओ पवहणोत्ति ॥ )

वीरक —( अवलोक्य । ) अरे प्रवहणवाहक मा तावदेतत्प्रवहण वाहय । कस्यैतत्प्रवहणम् । को वेहारूढ । कुत्र वा व्रजति । (अरे पवहणवाहआ मा दाव एव पवहण वाहेहि । कस्सकेरक एद पवहणम् । को वा इध आरूढो । कहिं वा वज्जइ ।)

चेट —एतत्खलु प्रवहणमार्यचारुदत्तस्य । इहार्या वसन्तसेनाऽऽरूढा । पुष्पकरण्डक जीर्णोद्यान क्रीडितु चारुदत्तस्य नीयते । (एशे क्खु पवहणे अज्जचालुदत्ताहकेलके । इध अज्जआ वशन्तशेणा आलूढा । पुप्फकरण्डअ जिण्णुज्जाण कीलिदु चालुदत्तश्श णीअदि ।)

वीरक —(चन्दनकमुपसृत्य ।) एष प्रवहणवाहको भणति—आर्यचारुदत्तस्य प्रवहणम् । वसन्तसेनाऽऽरूढा । पुष्पकरण्डक जीर्णोद्यान नीयत इति । (एसो पवहणवाहओ भणादि—अज्जचालुदत्तस्स पवहण । वशन्तशेणा आलूढा । पुप्फकरण्डअ जिण्णुज्जाण णीअदि त्ति ।)

चन्दनक —तद्गच्छतु । (ता गच्छदु ।)

वीरक —अनवलोकित एव । (अणवलोइदो ज्जेव ।)

---

१ अवह० २ खण्डित

VIRAKA—Soldier Chandanaka !

I swear by your heart, O Chandanaka, that someone must be carrying off that cowherd's son, for he was found missing when the sun was just half risen (11)

CHETA—Push on, bullocks, push on !

CHAND—(*Seeing*) Eh, there ! Just see--see !

A closed carriage is being driven along the middle of the high road, so just inquire to whom it belongs, and where it is going (12)

VIRAKA—(*Seeing*) You, driver of the car, just stop driving that carriage ! To whom does it belong ? And who is seated inside ? And whither is it going ?

CHETA—Well, this carriage belongs to the noble Charudatta Her ladyship Vasantasena is seated within And she is being taken to the old garden *Pushpakarandaka*, for sporting with Charudatta

VIRAKA—(*Approaching* Chandanaka ) This carriage-driver says that the car belongs to the noble Charudatta, that Vasantasena is inside, and that she is being taken to the old garden *Pushpakarandaka*

CHAND —Then allow it to go

V'IRAKA—Without being inspected at all ?

---

भूतो अलकारभूतो। धर्मनिधि पुण्यैकसचय:] ॥ १३ ॥ १४ ॥ **जानामीति** । गाथा । [राजकार्ये राज्ञ प्राप्ते कार्ये कर्तव्यत्वेनोपस्थिते ।] प्राप्ते चेति चकार. पुनरर्थे ॥१५॥ **एकेति** ॥ १६ ॥ तन्त्रिलश्चिन्तापर । **भीमस्येति** । [भीमस्य शस्त्र विना बाहुभ्या-मेव युध्यमानस्य।] व्यायच्छत परपरिभव कुर्वत ॥ १७ ॥ **त्यजतीति** ॥ १८ ॥ पत्त्ररथ पक्षी । शाकुनिकस्य पक्षिणा हन्तु । **भीताभयेति** । गाथा । भीतेभ्य. अभय-प्रदान ददत परोपकारे निरतस्य ॥ १९ ॥ परिभूता रथाधिरोहणेन धर्षिता । **सभ्रमे-त्यादि** । गाथा । [त्वमपि धीरोऽपि । सभ्रमेण भयव्याकुलतया घर्घर कण्ठो यस्य।] यस्त्व जातोऽसि ॥ २० ॥ [कर्णाटकलह मिथ्याकलह तस्य प्रयोग करोमि। ] **जानन्नपीति** । गाथा । [शीलविभवेन मम शीलस्य विभवेन औन्नत्येन ]॥ २१ ॥ सज्ञा ददातीति जात्युचितक्रियाभिनय । **शीर्णेत्यादि** । गाथा [शीर्णं शिलातलं क्षुरादितेजनशिलाखण्ड हस्ते यस्य स शीर्णशिलातलहस्त । पुरुषाणा कूर्चं-ग्रन्थिसस्थापन सम्यक्स्थापक । अनेन पर्यायेण नापितजातिर्दर्शिता ] ॥ २२ ॥ **जातिस्तवेति** । गाथा । [करटकस्य वाद्यविशेषस्य भ्राता । अत्र चर्मावगुण्ठित-

चन्दनक —अथ किम् । (अध इ ।)

वीरक —कस्य प्रत्ययेन । (कस्स पच्चएण ।)

चन्दनक —आयचारुदत्तस्य । (अज्जचारुदत्तस्स ।)

वीरक —क आर्यचारुदत्त का वा वसन्तसेना येनानवलोकित व्रजति । (को[1] अज्जचारुदत्तो का वा वसन्तसेणा जेण अणवलोइद वच्चदि ।)

चन्दनक —अरे आर्यचारुदत्त न जानासि न वा वसन्तसेनाम् । यद्यार्यचारुदत्त वसन्तसेना वा न जानासि तदा गगने ज्योत्स्नासहित चन्द्रमपि त्व न जानासि ।

> कस्त गुणारविन्द शीलमृगाङ्क जनो न जानाति ।
> आपन्नदुःखमोक्ष चतु सागरसार रत्नम् ॥ १३ ॥
> द्वावेव पूजनीयाविह नगर्यां तिलकभूतौ च ।
> आर्या वसन्तसेना धर्मनिधिश्चारुदत्तश्च ॥ १४ ॥

(अरे अज्जचारुदत्तं ण जाणासि ण वा वसन्तसेणिअम् । जइ अज्जचारुदत्तं वसन्तसेणिअ वा ण जाणासि ता गअणे जोण्हासहिद चन्द पि तुम ण जाणासि ।

> कों तं गुणारविन्द शीलमिअङ्क जणो ण जाणादि ।
> आवण्णदुक्खमोक्ख चउसाअरसारअ रअणम् ॥
> दो ज्जेव[2] पूअणीआ इह णअरीए तिलअभूदा अ ।
> अज्जा वसन्तसेणा धम्मणिही चारुदत्तो अ ॥)

वीरक —अरे चन्दनक ।

> जानामि चारुदत्त वसन्तसेना च सुष्ठु जानामि ।
> प्राप्ते च राजकार्ये पितरमप्यह न जानामि ॥ १५ ॥

(अरे चन्दणआ ।

> जाणामि चारुदत्त वसन्तसेण अ सुट्ठु जाणामि ।
> पत्ते अ राअकज्जे पिदर पि अह ण जाणामि ॥)

आर्यक —(स्वगतम् ।) अय मे पूर्ववैरी । अय मे पूर्वबन्धु । यत ।

> [3]एककार्यनियोगेऽपि नानयोस्तुल्यशीलता ।
> विवाहे च चितायां च यथा हुतभुजोर्द्वयो ॥ १६ ॥

चन्दनक —त्व तन्त्रिल सेनापती राज्ञ प्रत्ययित । एतौ धारितौ मया बलीवर्दौ अवलोकय । (तुम तन्तिलो सेणावई रण्णो पच्चइदो । एदे धारिदा मए बइल्ला अवलोएहि ।)

वीरक —त्वमपि राज्ञ प्रत्ययितो बलपति । तस्मात्त्वमेवावलोकय । (तुम पि रण्णो पच्चइदो बलवई । ता तुम ज्जेव अवलोएहि ।)

---

१ को स २ चेव्व ३ एकाकार्य

CHAND —Yes Why not ?

VIRAKA—Trusting whom ?

CHAND —The noble Charudatta

VIRAKA—Who is the noble Charudatta or Vasantasena, that it is to go uninspected ?

CHAND —Ah ! Don't you know the noble Charudatta, nor Vasantasena ? If you don't know the noble Charudatta, nor Vasantasena, then you don't know even the moon in the sky, with its light !

What person does not know that Charudatta, whose virtues are like ( i e , as charming as ) lotuses, whose character is like ( i e , as attractive as ) the moon, who relieves the misery of the affected, and who is ( as it were ) a jewel, the essence of the four oceans ? ( 13 )

In this city only two persons deserve to be honoured, and are an ornament to it, *viz* , her ladyship Vasantasena, and Charudatta, the store of righteousness ( 14 )

VIRAKA—O Chandanaka !

I know Charudatta, and I know Vasantasena, too, quite well But, when the king's business is to be done, I don't know even my own father ! ( 15 )

ARYAKA—( *To himself* ) This person ( Viraka ) must have been my past enemy, and this one ( Chandanaka ) my past friend, since—

Although appointed to discharge the same function, these two do not behave in the same manner, just like the two fires, the one at a wedding and the other at a funeral ( 16 )

CHAND —You are an investigating officer in the army, trusted by the king I have held these bullocks , you may ( therefore ) inspect

VIRAKA—You, too, are an officer in the army, trusted by the king So you may inspect yourself

---

व्याधाना मातापितृत्वाद्यारोपणेन भङ्ग्यन्तरेण चर्मकारजातिरुक्ता । ] ॥ २३ ॥ अये इति । [पुंसो दक्षिणबाहुस्पन्द सौभाग्यसूचक ] ॥ २४ ॥ अत्रेति । [प्रत्ययिता राज्यलाभेन सिद्धादेशे जातविश्वासा । लुब्ध द्रव्यगृध्नु ] सत्र भणामि ॥ २५ ॥

**चन्दनक**—मयाऽवलोकितं त्वयाऽवलोकितं भवति। (मए अवलोइदं तुए अवलोइदं भोदि।)

**वीरक**—यत्त्वयाऽवलोकितं तद्राज्ञा पालकेनावलोकितम्। (जं तुए अवलोइदं तं रण्णा पालएण अवलोइदम्।)

**चन्दनक**—अरे उन्नमय धुरम्। (अरे उण्णामेहि धुरम्।)

(चेटस्तथा करोति।)

**आर्यक**—(स्वगतम्।) अपि रक्षिणो मामवलोकयन्ति। अशस्त्रश्चास्मि मन्दभाग्यः। अथ वा।

**भीमस्यानुकरिष्यामि बाहुः शस्त्रं भविष्यति।**
**वरं व्यायच्छतो मृत्युर्न गृहीतस्य बन्धने॥ १७॥**

अथ वा साहसस्य तावदनवसरः।

(चन्दनको नाट्येन प्रवहणमारुह्यावलोकयति।)

**आर्यक**—शरणागतोऽस्मि।

**चन्दनक**—(संस्कृतमाश्रित्य।) अभयं शरणागतस्य।

**आर्यक**—

**त्यजति किल तं जयश्रीर्जहति च मित्राणि बन्धुवर्गश्च।**
**भवति च सदोपहास्यो यः खलु शरणागतं त्यजति॥ १८॥**

**चन्दनक**—कथमार्यको गोपालदारकः श्येनवित्रासित इव पत्ररथः शाकुनिकस्य हस्ते निपतितः। (विचिन्त्य।) एषोनपराधः शरणागतः आर्यचारुदत्तस्य प्रवहणमारूढः प्राणप्रदस्य मे आर्यशर्विलकस्य मित्रम्। अन्यतो राजनियोगः। तत्किमिदानीमत्र युक्तमनुष्ठातुम्। अथ वा यद्भवतु तद्भवतु। प्रथममेवाभयं दत्तम्।

**भीताभयप्रदानं ददतः परोपकाररसिकस्य।**
**यदि भवति भवतु नाशस्तथाऽपि खलु लोके गुण एव॥ १९॥**

(सभयमवतीर्य।) दृष्ट आर्यः—(इत्यर्धोक्ते[1]।) न, आर्या वसन्तसेना। तदेषा भणति—युक्तं न्विदं सदृशं न्विदं यदहमार्यचारुदत्तमभिसर्तुं गच्छन्नी राजमार्गे परिभूता। (कधं अज्जओ गोवालदारओ सेणवित्तासिदो विअ पत्तरहो साउणिअस्स हत्थे णिवडिदो। एसो अणवराधो सरणाअदो अज्जचारुदत्तस्स पवहणं आरूढो पाणप्पदस्स मे अज्जसव्विलअस्स मित्तम्। अण्णदो राअणिओओ। ता किं दाणिं एत्थ जुत्तं अणुचिट्ठिदुम्। अध वा जं भोदु तं भोदु। पढमं ज्जेव अभअं दिण्णम्।

भीदाभअप्पदाणं दत्तस्स परोवआररसिअस्स।
जइ होइ होउ णासो तहवि हु लोए गुणो ज्जेव्व॥

दिट्ठो अज्जो—ण, अज्जआ[2] वसन्तसेणा। तदो एसा भणादि—जुत्तं ण्णेदं सरिसं ण्णेदं जं अहं अज्जचारुदत्तं अहिसरिदुं गच्छन्ती राअमग्गे परिभूदा।)

---

१ र्धोक्तेन. २ अज्जुआ

CHAND —If I inspect, would it be as good as being inspected by you ?

VIRAKA—What is inspected by you is ( as though it were ) inspected by king Palaka himself

CHAND —You there, raise up the yoke !

( Cheta *does so* )

ARYAKA—( *To himself* ) Would the guards find me out ? Unlucky that I am, I am without weapons, too ! Or rather—

I shall imitate Bhima, my arm shall be my weapon ! It is better to die fighting, rather than in chains, as a prisoner (17)

Or rather, this is no time for rash enterprise

( Chandanaka *gesticulates mounting the carriage, and looks in* )

ARYAKA—I seek your protection, Sir !

CHAND —( *Speaking in Sanskrit* ) Safety to one who seeks protection !

ARYAKA—

Whoever deserts a person that seeks his protection, he is forsaken by the goddess of success, by his friends, and by all his relatives, and he is always exposed to derision (everywhere) (18)

CHAND —How ! The cowherd's son Aryaka has, like a bird frightened by ( i e flying from ) a hawk, fallen into the hands of a fowler ! (*Reflecting*) [ On one hand ] this innocent man, seeking my protection and riding in the noble Charudatta's carriage, is the friend of the worthy Sarvilaka, who ( once ) saved my life. And on the other hand there is my official duty So now, what is the right thing to do under these circumstances ? Or rather, come what may I have already promised him freedom from fear

If ruin befalls a man who, intent on obliging others, promises safety to a frightened person, why, let it befall, but all the same, in the world it would be ( regarded as ) a righteous deed. ( 19 )

( *Getting down in fear* ) I have seen him—( *Leaving it half-said* )—no, her ladyship Vasantasena And she says—" Is it proper, is it becoming, that I should be insulted on the high road while going to meet the noble Charudatta ? "

---

चन्दन इति । तथा यदीत्यादि । राज्यप्राप्तिरूप ॥ २६ ॥ अभयमित्यादि । आर्या । ॥ २७ ॥ विरोधिदो विरोधित । पुत्रभ्रातृप्रभृतिभि सहित । तमार्यकमेव ।

इति प्रवहणविपर्यासो नाम षष्ठोऽङ्क ।

**वीरक**—चन्दनक अत्र मे सशय समुत्पन्न । (चन्दणआ एत्थ मह् ससओ समुप्पण्णो । )

**चन्दनक**—कथ ते सशय । (कध दे ससओ ।)

**वीरक**—

**सभ्रमघर्घरकण्ठस्त्वमपि जातोऽसि यत्त्वया भणितम् ।**
**दृष्टो मया खल्वार्य पुनरप्यार्या वसन्तसेनेति ॥ २० ॥**

अत्र मेऽप्रत्यय ।

(सभमघग्घरकण्ठो तुम पि जादो सि ज तुए भणिदम् ।
दिट्ठो मए क्खु अज्जो पुणो वि अज्जा वसन्तसेणेत्ति ॥
एत्थ मे अप्पच्चओ । )

**चन्दनक**—अरे कोऽप्रत्ययस्तव । **वय दाक्षिणात्या** अव्यक्तभाषिण । **खश-खत्ति खड खडठु बिड-कर्णाट-कर्ण-प्रावरण-द्राविड-चोल-चीन-बर्बर-खेर-खान-मुख-मधुघात-प्रभृतीना** म्लेच्छजातीनामनेकदेशभाषाभिज्ञा **यथेष्ट** मन्त्रयामहे दृष्टो दृष्टा वा । आर्य आर्या वा ( अरे को अप्पच्चओ तुह । वअ दक्खिणत्ता अव्वत्तभासिणो । खस-खत्ति खड खडठु विलअ-कण्णाट-कण्ण-प्पावरणअ-दविड-चोल-चीण-बर्बर-खेर-खान मुख मधुघाद पहुदाण मिलिच्छजादीण अणेअदेसभासाभिण्णा जहेट्ठ मन्तआम दिट्ठो दिट्ठा वा अज्जो अज्जआ वा[१] । )

**वीरक**—नन्वहमपि प्रलोकयामि । राजाज्ञैषा । अह राज्ञ प्रत्ययित । (ण अह पि पलोएमि । राअअण्णा एसा । अह रण्णो पच्चइदो ।)

**चन्दनक**—तत्किमहमप्रत्ययित. सवृत्त । (ता किं अह अप्पच्चइदो सवुत्तो ।)

**वीरक**—ननु स्वामिनियोग । (र्ण समिणिओओ ।)

**चन्दनक**—( स्वगतम् । ) आर्यगोपालदारक आर्यचारुदत्तस्य प्रवहणमधिरुह्यापक्रामतीति यदि कथ्यते तदाऽऽर्यचारुदत्तो राज्ञा शास्यते । तत्कोऽत्रोपाय । ( विचिन्त्य । ) कर्णाटकलहप्रयोग करोमि । ( प्रकाशम् । ) अरे वीरक मया चन्दनकेन प्रलोकित पुनरपि त्व प्रलोकयसि । कस्त्वम् । ( अज्जगोवालदारओ अज्जचारुदत्तस्स पवहण अहिरुहिअ अवक्कमदित्ति जइ कहिज्जदि तदो अज्जचारुदत्तो रण्णा सासिज्जइ । ता को एत्थ उवाओ । कण्णाटकलहप्पओअ करेमि । अरे वीरअ मए चन्दणकेण पलोइद पुणो वि तुम पलोएसि । को तुमम् ।)

**वीरक**—अरे त्वमपि क । (अरे तुम पि को ।)

**चन्दनक**—पूज्यमानो मान्यमानस्त्वमात्मनो जाति न स्मरसि । (पूइज्जन्तो माणिज्जन्तो तुम अप्पणो जादिं ण सुमरेसि ।)

**वीरक**—(सक्रोधम् ।) अरे का मम जाति । (अरे का मह जादी ।)

**चन्दनक**—को भणतु । (को भणउ ।)

**वीरक**—भणतु । (भणउ ।)

---

१ अस्मात्पर 'किं शब्दविचार । स्त्रीपुनपु सकव्याख्यानमप्रस्तुतम्' इत्य०ए०पु० ।

**विट** —आरोहतु भवान् ।

**शकार** —एष साम्प्रतमधिरोहामि । पुत्रक स्थावरक चेट परिवर्तय प्रवहणम् । (एशे शपद अहिलुहामि । पुत्तका थावलका चेडा पलिवत्तावेहि पवहणम् ।)

**चेट** —(परावर्त्य[1]) अधिरोहतु भट्टारक । (अहिलुहदु भट्टालके ।)

**शकार** —(अधिरुह्यावलोक्य च शङ्का[2] नाटयित्वा त्वरितमवतीर्य विट कण्ठेऽवलम्ब्य ।) भाव भाव मृतोऽसि मृतोऽसि । प्रवहणाधिरूढा राक्षसी चौरो वा प्रतिवसति । तद्यदि राक्षसी तदोभावपि मुषितौ । अथ चौर तदोभावपि खादितौ । (भावे भावे मलेशि मलेशि । पवहणाधिरूढा लक्खषी चोले वा पडिवशदि । ता जइ लक्खशी तदो उभे वि मूशे । अध चोले तदो उभे वि खज्जे ।)

**विट** —न[3] भेतव्यम् । कुतोऽत्र वृषभयाने राक्षस्या[4] सचार[5] । मा नाम ते मध्याह्नार्कतापच्छिन्नदृष्टे[6] स्थावरकस्य सकञ्चुका[7] छाया दृष्ट्वा भ्रान्तिरुत्पन्ना ।

**शकार** —पुत्रक स्थावरक चेट जीवसि । (पुत्तका[8] थावलका चेडा जीवेशि ।)

**चेट** —अथ किम् । (अध इ ।)

**शकार** —भाव प्रवहणाधिरूढा स्त्री प्रतिवसति । तदवलोकय । ( भावे पवहणाधिलूढा[9] इश्थिआ[10] पडिवशदि ता[11] अवलोएहि ।)

**विट** —कथ स्त्री ।

> **अवनतशिरस प्रयाम शीघ्र पथि वृषभा इव वर्षताडिताक्षा ।**
> **मम हि सदसि गौरवप्रियस्य कुलजनदर्शनकातर हि चक्षु ॥ १५ ॥**

**वसन्तसेना**—( सविस्मयमात्मगतम् । ) कथ मम नयनयोरायासकर एव राजश्याल । तत्सशयिताऽस्मि मन्दभाग्या । एतदिदानी मम मन्दभागिन्या ऊषरक्षेत्रपतित इव बीजमुष्टिर्निष्फलमिहागमन सवृत्तम् । तत्किमत्र करिष्यामि । (कध मम णअणाण आआसअरो ज्जेव राअसालओ । ता ससइदम्हि मन्दभाआ । एसो दाणि मम मन्दभाइणीए ऊसरक्खेत्तपडिदो विअ बीअमुट्टी णिप्फलो इध आगमणो सवुत्तो । ता किं एत्थ करइस्सम् ।)

**शकार** —कातर खल्वेष वृद्धचेट प्रवहण नावलोकयति । भाव आलोकय प्रवहणम् । ( कादले क्खु एशे बुड्ढचेडे[12] पवहण णावलोएदि । भावे आलोएहि पवहणम् ।)

**विट** —को दोष । भवतु । एव तावत् ।

---

१ परावृत्य २ त्रासं ३ न भेतव्य न भेत० ४ राक्षससचार ५ अवसर ६ खिन्न ७ सकूर्चकाम् ८ पश्यका, पुत्तका ९ पवहणाहिं ( प्रवहणान्त ). १० इत्थिआ ११ अतो पलोएहि १२ बुड्ढखोडे

VITA—( Well, then ), let your honour get in

SAK —Here now I'll mount it  Sthavaraka, my servant, my son, turn the car around

CHETA—( *Having turned it around* )  May master mount it.

SAK —( *Mounts and looks in , shows fear, quickly dismounts, and clings to the neck of* Vita )  Friend, friend, you're dead, you're dead !  There is a demoness or a thief seated inside the car  So, if she is a demoness, then we are stolen, both of us , and if it is a thief, then we are gobbled up, both of us !

VITA—Don't you fear  How can a demoness come to occupy this bullock-cart ?  May it not be that your eyes being dazzled with the heat of the mid-day sun, there arose this hallucination on your seeing the shadow of Sthavaraka, with the cloak on ?

SAK —Sthavaraka, my servant, my son, are you alive ?

CHETA—Yes, I am

SAK —Friend, there is a female seated inside the carriage  You had better see it

VITA—What !  A woman ?

Let us pass away quickly by the road, with bent heads, like bullocks whose eyes are dazzled by the falling rain drops , for the eyes of me, to whom esteem in public assemblies is dear, are afraid to gaze upon high born ladies  (15)

VAS --( *With surprise , to herself* ).  What !  Here is the same royal brother-in-law, who is an eyesore to me !  Then indeed I am in peril, I, the unlucky one !  Now this visit of my unlucky self here has turned out fruitless, like a handful of seed sown in saline soil  So what shall I do here ?

SAK --This old fellow, Cheta, is a coward , he won't peep in the carriage  Friend, you look into it

VITA--Where's the harm ?  All right  so be it

---

शकार कथमुपस्थितेत्यथ । अप्रस्तुतप्रशसालंकार सारूप्यनिबन्धन ॥ १६ ॥ पूर्वमिति । [ पूर्व प्रथमाङ्के शकारानुगमने मानाद्राजश्यालमवज्ञाय सप्रति जननीवशान्मात्राज्ञानुरोधाद् द्रव्यार्थे आगतेति शेष । अशौण्डीर्यमनोदार्य कृपणमतित्वमिति यावत् । तत्स्वभाव यम्य तेन वेशभावेन आगताऽसीति मन्यने ] ॥ १७ ॥ भक्खिदे भक्षित । विपरीतोक्ति पूर्ववत् । अथ वेन्यतलस्थाक्ति । शृगाला उड्डीयन्त इत्यादि चतुष्टयमपक्रमम् । [ धुर्याणा प्रवहणबलीवर्दयो । सामान्याभिप्राय

शकार —कथ श्रृगाला उड्डयन्ते वायसा व्रजन्ति । तद्यावद्भावोऽक्षिभ्या भक्ष्यते दन्तै प्रेक्ष्यते तावदह पलायिष्ये । ( कध शिआला उड्डेन्ति वाअशा वच्चेन्ति । ता जाव भावे अक्खीहिं भक्खीअदि दन्तेहिं पेक्खीअदि ताव हग्गे पलाइश्शम् ।)

विट —(वसन्तसेना दृष्ट्वा । सविषादमात्मगतम् । ) कथमये मृगी व्याघ्र-मनुसरति । भो कष्टम् ।

**शरच्चन्द्रप्रतीकाश पुलिनान्तरशायिनम् ।**
**हसी हस परित्यज्य वायस समुपस्थिता ।। १६ ।।**

(जनान्तिकम् ।) वसन्तसेने न युक्तमिद नापि सदृशमिदम् ।

**पूर्वं मानादवज्ञाय द्रव्यार्थे जननीवशात् ।**

वसन्तसेना—न । (इति शिरश्चालयति ।) (ण ।)

विट —

**[1]अशौण्डीर्यस्वभावेन वेशभावेन मन्यते ।। १७ ।।**

ननूक्तमेव मया भवती प्रति—' सममुपचर भद्रे सुप्रिय चाप्रिय च ।'

वसन्तसेना—प्रवहणविपर्यासेनागता शरणागतास्मि । ( पवहणविपज्जासेण आगदा । सरणागदम्हि ।)

विट —न भेतव्य न भेतव्यम् । भवतु । एन वञ्चयामि । (शकारमुपगम्य ।) काणेलीमात सत्य राक्षस्येवात्र प्रतिवसति ।

शकार —भाव भाव यदि राक्षसी प्रतिवसति तत्कथ न त्वा मुष्णाति । अथ चोर तदा किं त्व न भक्षित । (भावे भावे जइ लक्खशी पडिवशदि ता कीश ण तुम मृशेदि । अध[2] चोले ता कि तुम ण भक्खिदे[3] ।)

विट —किमनेन निरूपितेन । यदि पुनरुद्यानपरपरया पद्भ्यामेव नगरी-मुज्जयिनी प्रविशाव' तदा को दोप स्यात् ।

शकार'—एव कृते कि भवति । (एव्व किदे कि भोदि ।)

विट --एव कृते व्यायाम सेवितो धुर्याणा च परिश्रम[4] परिहृतो भवति ।

शकार —एव भवतु । स्थावरक चेट नय पवहणम् । अथ वा तिष्ठ तिष्ठ । देवताना ब्राह्मणाना चाग्रतश्चरणेन गच्छामि । नहि नहि । प्रवहणमधिरुह्य गच्छामि । यन दूरतो मा प्रेक्ष्य भणिष्यन्ति—एष स राष्ट्रियश्यालो भट्टारको गच्छति । (एव भोदु । थावलआ चेडा णेहि पवहणम । अध वा चिश्ट चिश्ट । देवदाण बह्मणाण च अग्गदो चलणेण गच्छामि । ण हि ण हि । पवहण अहिलुहिअ गच्छामि जेण दूलदो म पेक्खिअ भणिश्शन्ति—एशे शे लश्टिअशाले भश्टालके गच्छदि ।)

---

१ अशोटीर्य २ अध वा ३ खज्जे (खादित ) ४ भ्रम

SAK —How! The jackals are flying about in the sky and the crows scampering along! So I'll run away before my friend is eaten up with eyes and gazed upon with teeth!

VITA—(*Seeing* Vasantasena, *sorrowfully, to himself*) Ah! How is it that the doe is following a tiger! Oh, alas,

Leaving the male swan, resplendent like the autumnal moon, and reclining on a stretch of (white) sand, the female swan has taken herself to a crow! (16)

(*Aside, to* Vasantasena) O Vasantasena, this is neither proper nor becoming

Having first proudly spurned him, you're now come at the bidding of your mother, for the sake of money —

VAS —No! (*She nods her head*)

VITA—

Then I think (you came) owing to the profession of a courtesan being characterized by absence of generosity (*i e* by a desire for money) (17)

Why, I did (formerly) say to you—" O good maiden, serve equally one much coveted by you and one disliked by you "

VAS —I came owing to an interchange of carriages I beseech your protection!

VITA--Be not afraid, be not afraid --All right, I will deceive him (*Approaching* Sakara) Bastard it is true, there's actually a demoness inside

SAK --Friend, friend, if there's a demoness, then how has she not stolen you? And if a thief, then how haven't you been devoured?

VITA—What is the good of discussing that?—Well, now, if we enter the city of Ujjayini going on foot, through the row of orchards, then what is the harm (in that)?

SAK --If we do so, what good would it do?

VITA—If we do so, we get exercise and avoid giving trouble to the bullocks

SAK —So be it Sthavaraka, my servant, take away the carriage Or rather, stay—stay Am I to walk on foot before (*i e.* in the presence of) the deities and the Brahmanas? No, no! I'll mount the carriage and go, so that, seeing me from afar, they will say —' Here goes our master, the king's brother in law "

**विट**—( स्वगतम् । ) दुष्कर विषमौषधीकर्तुम्[१] । भवतु । एव तावत् । (प्रकाशम् ।) काणेलीमात एषा वसन्तसेना भवन्तमभिसारयितुमागता ।

**वसन्तसेना**—शान्त पापम् । शान्त पापम् । (सन्त[२] पावम् । सन्त पावम् ।)

**शकार**—( सहर्षम् । ) भाव भाव मा प्रवरपुरुष मनुष्य वासुदेवकम् । (भावे भावे म पबलपुलिश[३] मणुश्श वाशुदेवकम् ।)

**विट**—अथ किम् ।

**शकार**—तेन ह्यपूर्वा श्री समापादिता । तस्मिन्काले मया रोषिता । साप्रत पादयो पतित्वा प्रसादयामि । (तेण हि अपुव्वा शिली शमाशादिदा । तश्शि काले मए लोशाइदा[४] । शपद पादेशु पडिअ पशादेमि ।)

**विट**—साध्वभिहितम् ।

**शकार**—एष पादयो पतामि । (इति वसन्तसेनामुपसृत्य ।) मात अम्बिके श्रृणु मम विज्ञप्तिम् ।

> **एष पतामि चरणयोर्विशालनेत्रे**
> **हस्ताञ्जलि दशनखे तव शुद्धदन्ति ।**
> **यत्तव मयाऽपकृत मदनातुरेण**
> **तत्क्षामिताऽसि वरगात्रि तवास्मि दास ॥ १८ ॥**

(एशे पादेशु पडेमि । अत्तिके अम्बिके शुणु मम विण्णत्तिम् ।

एशे पडामि[५] चलणेशु विशालणेत्ते हश्तञ्जलिं दशणहे[६] तव शुद्धदन्ति ।
ज त मए अवकिद मदणातुलेण[७] त खम्मिदाशि वलगत्ति तव म्हि दाशे ॥)

**वसन्तसेना**—(सक्रोधम् ।) अपेहि । अनार्यं मन्त्रयसे । इति पादेन ताडयति । (अवेहि । अणज्ज मन्तेसि ।)

**शकार**—(सक्रोधम् ।)

> **यच्चुम्बितमम्बिकामातृकाभिर्गत न देवानामपि यत्प्रणामम् ।**
> **तत्पातित पादतलेन मुण्ड वने श्रृगालेन यथा मृताङ्गम् ॥ १९ ॥**

अरे स्थावरक चेट कुत्र त्वयैषा समासादिता ।

> (जे चुम्बिदे अम्बिकमादुकेहि गदे ण देवाण[८] वि जे पणामम् ।
> शे पाडिदे पादतलेण मुण्डे वणे शिआलेण जधा मुदङ्गे[९] ॥

अले थावलआ चेडा कहिं तुए एशा शमाशादिदा ।)

---

१ ओष० २ शन्त ३ पुलिशम्णु० ४ लोशायिदा ५ पडेमि ६ दशणह ७ मदणाउलेन ८ देवाणं ९ मिदङ्गे.

VITA—(*To himself*) It is difficult (*i e* impossible) to convert poison into medicine All right Let it be thus (*Aloud*) Bastard, here's Vasantasena, come to you of her own accord, as an *abhisarika*

VAS —Heaven forbid—heaven forbid!

SAK —(*Joyfully*) Friend, friend, has she come to *me*, the great man, a human being, (another) Krishna?

VITA—Yes

SAK —Then I have attained unprecedented good fortune! On that occasion I had angered her: now I'll fall at her feet and reconcile her

VITA—You have spoken well!

SAK —Here I'll fall at her feet (*Approaching* Vasantasena) Mother, mamma, listen to my request —

Here I prostrate myself at your feet, O you with large eyes, O pearly-toothed one, I place my folded hands on the ten nails of your feet —O beautiful-limbed damsel, I beseech your forgiveness for whatever ill I, tormented by love, did towards you I am your slave! (18)

VAS —(*Angrily*) Get away, you are speaking wickedly. (*Strikes him with the foot*)

SAK —(*Wrathfully*).

This head of mine, which was caressed by my mother and mamma, and which did not bow even to the gods, has been struck down (by her) with her foot, as a jackal treats a carcass in the jungle (19)

You, Sthavaraka, my slave, where did you come across her?

---

बहुवचनम् । ] देवदाण अग्गदो गच्छामि । न हि न होति न्यायविरुद्धम् । [ विषमौषधीकर्तुं दुर्जनमानुकूल्येन परिवर्तयितुमित्यर्थ । वासुदेव इव वासुदेवक तम् । 'इवे प्रतिकृतौ' इति इवार्थे कन् । ] एष पतामीत्यादि । [ हे विशालनेत्रे एषोऽहं तव चरणयो पतामि । हे शुद्धदन्ति शुद्धा दन्ता यस्या तत्सबुद्धि । तव दश नखे चरणयो दशसु नखेपु हस्ताञ्जलि करोमीति शेप । मदनातुरेण कामपीडितेन मया यत्तव अपकृत तत् क्षामितासि तदर्थं क्षमा याचितासि । हे वरगात्रि तव-

चेट—भट्टक ग्रामशकटै रुद्धो राजमार्ग । तदा चारुदत्तस्य वृक्षवाटिकाया प्रवहण स्थापयित्वा तत्रावतीर्य यावच्चक्रपरिवृत्ति करोमि तावदेषा प्रवहणविपर्यासेनेहारूढेति तर्कयामि । (भट्टके गामशअलेहिं लुद्धे लाअमग्गे । तदो चालुदत्तश्श लुक्खवाडिआए पवहण थाविअ तहिं ओदलिअ जाव चक्कपलिवट्टिअ कलेमि ताव एशा पवहणविपल्लाशेण[1] इह आलूढेत्ति तक्केमि ।)

शकार—कथ प्रवहणविपर्यासेनागता । न मामभिसारयितुम् । तदवतरावतर मदीयात्प्रवहणात् । त्व त दरिद्रसार्थवाहपुत्रकमभिसारयसि । मदीयौ गावौ वाहयसि । तदवतरावतर । गर्भदास्यवतरावतर । ( कध पवहणविपल्लाशेण[2] आगदा । ण म अहिशालिदुम् । ता ओदल ओदल ममकेलकादो पवहणादो । तुम त दलिद्दशत्थवाहपुत्तक[3] अहिशालेशि । ममकेलकाइ गोणाइ वाहेशि । ता ओदल ओदल । गब्भदाशि ओदल ओदल ।)

वसन्तसेना—तमार्यचारुदत्तमभिसारयसीति यत्सत्यमलङ्कृताऽस्म्यमुना वचनेन । साप्रत यद्भवतु तद्भवतु । ( त अज्जचारुदत्त अहिसारेसित्ति ज सच्च अलकिदम्हि इमिणा वअणेण । सपद ज भोदु त भोदु ।)

शकार:—

**एताभ्या ते दशनखोत्पलमण्डलाभ्या**
**हस्ताभ्या चाटुशतताडनलम्पटाभ्याम् ।**
**कर्षामि ते वरतनु निजयानका**
**त्केशेषु वालिदयितामिव यथा जटायु ॥ २० ॥**

(एदेहिं दे दशणहुप्पलमण्डलेहि
हश्तेहिं[4] चाडुशदताडणलम्पडेहिं ।
कट्टामि[5] दे वलतणु णिअजाणकादो
केशेशु वालिदइअ वि जहा जडाऊ[6] ॥)

---

दास अस्मि । वसन्ततिलकम् । ] ॥ १८ ॥ **यच्चुम्बितमिति** । [ यदम्बिकया मात्रा चुम्बितम् । यद्देवानामपि प्रणाम न गत तान्न प्रणतम् । तन्मे मुण्ड शिर वनशृगालेन मृताङ्ग शवशरीरमिव पादतलेन पातितम् । अम्बिकामातृभिरिति पुनरुक्त सर्वत्र पुल्लिङ्गबहुवचनत्व च शकारवचनत्वादित्यवसेयम् ।] उपजात्या । ये चुम्बिता मातृकाम्बिकाभिर्गता न देवानामपि ये प्रणामम् । ते पातिता पादतलेन मुण्डा वने शृगालेन यथा मृदङ्गा ॥ मातृका इति स्वार्थे क । मुण्डा इति बहुवचनमप्यनर्थकम् ॥ १९ ॥ [ गर्भदासि जन्मत एव दासि । अत कस्ते गर्व इति भाव । ]

---

१ विपलट्टणेण (विपर्ययेण), २ पलिवट्टणेण (परिवर्तनेन). ३ पुत्तहक ४ हत्थेहिं ५ वड्ढामि, वट्टामि ६ हणूमे (हनूमान्)

CHETA—Master, the highway was blocked by the rustic carts I therefore stopped my car near Charudatta's garden ; and while I got down there and was giving a turn to the wheels ( of another's cart ), she must have got in by mistaking our carriage for her own , so I infer

SAK —What ! She came owing to an interchange of carriages, and not to meet me ( as her lover ) ! Then get down, get down from my carriage ! You are going to meet that penniless son of a merchant ( *i e*, Charudatta ), and you make my bullocks carry you ! Ah, get down, get down ! You born servant-maid, get down !

VAS —To tell the truth, I feel honoured by these words ( of his ), *viz* that I am going to meet that worthy Charudatta Now whatever must happen, let it come

SAK —

Seizing you by the hair with these two hands of mine, which are decked with a row of lotuses in the form of their ten nails, and which were yearning to pat you to the accompaniment of hundreds of fond words, I shall ( forthwith ) drag down your lovely body from my carriage, just as Jatayu did the wife of Vali (20)

---

**ताभ्यामित्यादि** । वसन्ततिलकच्छन्दसा । सबिन्दो पाक्षिकगुरुत्वात् एदेहिं हत्थेहिं इत्यनयोर्लघुत्वम् । [ दश नखा एव उत्पलमण्डल ययोस्ताभ्याम् । चाटुशतेन प्रियवचनशतेन यत्ताडन तत्र लम्पटाभ्यामुत्सुकाभ्याम् । एताभ्या हस्ताभ्या ते वरतनु केशेषु गृहीत्वा निजयानकात्कर्षामि । यथा इव । ] कर्षयामि दे त्वाम् । वरतनु निजयानकात्केशेषु वालिदयितामिव यथा केशेषु जटायुराकृष्टवान् । पाठान्तरे हनूमानित्यर्थ । [ ते ते इति यथा इव इति च पुनरुक्तम् । वालिदयिताया जटायुना कर्षणाभावात् ] व्याहतोपम चेदम् । [ शकारोक्तित्वेन चमत्कृतिमत् ] ॥ २० ॥ **अग्राह्या इति** । [ गुणसमन्विता सौन्दर्यादिगुणोपेता । दृष्टान्तालकार ] ॥ २१ ॥ योऽसौ सोऽद्यैतस्या इत्यादि । तत साप्रत मारयाम्येनाम् । **यदीच्छसीत्यादि** । उपजातिच्छन्दसा । प्रावारक प्रच्छन्द सूत्रशतैर्ग्रथितम् । [ यदि इच्छसि मत्त इति शेष । ] मत्स्य च खादितुम् । चुहू चुहू चुक्कु चुहू चुहूत्ति इत्यनुकरणम् ॥ २२ ॥ **बालामिति** । [ वेश्या तथाऽपि अवेशसदृश । कुलस्त्रीजनोचित इत्यर्थ । प्रणयोपचार यस्या । धनलोभविरहादिति भाव । अनागस निरपराधामेना यदि घातयामि । केनोडुपेन प्लवेन । तरिष्ये अत्रात्मनेपद चिन्त्यम् । वसन्त० वृत्तम् । ]

विट —

अग्राह्या मूर्धजेष्वता स्त्रियो गुणसमन्विता ।
[1]न लता[2] पल्लवच्छेदमर्हन्त्युपवनोद्भवा[3] ॥ २१ ॥

तदुत्तिष्ठ त्वम्[4] । अहमेनामवतारयामि । वसन्तसेने अवतीर्यताम् ।

( वसन्तसेनाऽवतीर्यैकान्ते स्थिता । )

शकार —( स्वगतम् । ) योऽसौ मम वचनावमानेन तदा रोषाग्नि सधुक्षितोऽद्यैतस्या पादप्रहारेणानेन प्रज्वलित । तत्साप्रत मारयाम्येनाम् । भवतु । एव तावत् । (प्रकाशम् ।) भाव भाव ।

यदीच्छसि लम्बदशाविशाल प्रावारक सूत्रशतैर्युक्तम् ।
मास च खादितुं तथा तुष्टिं कर्तुं चुहू चुहू चुक्कु चुहू चुहू इति ॥ २२ ॥

(जे शे मम वअणावमाणेण तदा लोशग्गी शधुक्खिदे अज्ज एदाए पादप्पहालेण अणेण पज्जलिदे । त शपद मालेमि णम् । भोदु । एव्व दाव । भावे भावे ।

जदिच्छशे लम्बदशाविशाल पावालअ शुत्तशदेहिं जुत्तम् ।
मश च खादु तह तुश्टि कादु चुहू चुहू चुक्कु चुहू [5]चुहूत्ति ॥)

विट —तत किम् ।

शकार —मम प्रिय कुरु । (मम पिअ कलेहि ।)

विट —बाढ करोमि वर्जयित्वा त्वकार्यम ।

शकार —भाव अकार्यस्य गन्धोऽपि नास्ति । राक्षसी काऽपि नास्ति । ( भावे[6] अकज्जाह गन्धे वि णत्थि । लक्खशी कवि णत्थि ।)

विट —उच्यता तर्हि ।

शकार —मारय वसन्तसेनाम् । (मालेहि वसन्तशेणिअम् ।)

विट —(कर्णौ पिधाय ।)

बाला स्त्रिय च नगरस्य[7] विभूषण च
वेश्यामवेशसदृशप्रणयोपचाराम् ।
एनामनागसमह यदि घातयामि
केनोडुपेन परलोकनदीं तरिष्ये ॥ २३ ॥

शकार —अह त उडुप[8] दास्यामि । अन्यच्च विविक्त उद्यान इह मारयन्त कस्त्वा प्रेक्षिष्यते । ( अह ते भेडक दइश्शम् । अण्ण च विवित्ते उज्जाणे इध मालन्त को तुम पेक्खिश्शदि ।)

---

१ नु. २ ऽता. त्युपवनोद्भवा ३ ऽत्तूपव० ४ त्वहमेनाम् ५ चुहुत्ति
६ भावे भावे ७ नरलोकवि. ८ एडकम्

VITA—

Ladies like these, who are accomplished, should not be seized by the hair, for, the creepers growing in orchards deserve not to have their foliage lopped off (21)

So you may stand off, I'll help her to dismount O Vasantasena, please get down

( Vasantasena *dismounts and stands in one corner* )

SAK —( *To himself* ) That fire of my anger, which was kindled on that occasion when she spurned my suit, has to day been inflamed by this her insult of) kicking So I'll now kill her All right, I'll ( proceed ) in this way ( *Aloud* ) Friend, friend !

If you desire ( to wear ) a large cloak, with long fringes and having hundreds of tassels, and to dine upon flesh and derive satisfaction (therefrom), (munching) with the sounds *chuhoo-chuhoo, chukku, chuhoo chuhoo,*— (22)

VITA—Then what ?

SAK —Do what I wish

VITA—Very well I'll do it, but excepting an execrable [sinful] deed ( that cannot be done ).

SAK —Friend, there is not even the remotest trace of the job being such as [ being difficult ] cannot be done There is no demoness whatever in it

VITA—Speak out, then ( what it is )

SAK —Kill Vasantasena !

VITA—( *Closing his ears* )

If I kill her who is young, a woman, and an ornament of our city, and who, although a courtesan, bestows her love in a manner unlike that of the courtesans' quarter, and who is ( withal ) innocent, then with what boat shall I cross the river of the next world ? ( 23 )

SAK —I will give you a boat And moreover, in this deserted garden, who would see you killing her ?

---

अवेशसदृशेति । अवेश्यापाठकोचितमकृत्रिमम् ॥ २३ ॥ [एकडमिति पाठे मेषम् । परलोकनदीतरणायेति शेष ।] विविक्ते विजने । पश्यन्तीति । [अयमिति गगन-स्थितसूर्यस्य हस्तेन निर्देश । अनिल वायु । सुकृतदुष्कृतयो पुण्यपापकर्मणो

विट —

पश्यन्ति मा दश दिशो वनदेवताश्च
चन्द्रश्च दीप्तकिरणश्च दिवाकरोऽयम् ।
धर्मानिलौ च गगनं च तथाऽन्तरात्मा
भूमिस्तथा सुकृतदुष्कृतसाक्षिभूता ॥ २४ ॥

शकार —तेन हि पटान्तापवारिता कृत्वा मारय । (तेण हि पडन्तोवालिद[१] कदुअ मालेहि । )

चेट —मूर्ख अपध्वस्तोऽसि ।[२]

शकार —अधर्मभीरुरेष वृद्धशृगाल । भवतु । स्थावरक चेटमनुनयामि । पुत्रक स्थावरक चेट सुवर्णकटकानि दास्यामि । ( अधम्मभीलू एशे बुड्ढकोले[३] । भोदु । थावलअ चेड अणुणेमि । पुश्थका[४] थावलका चेडा शोवण्णखडुआइ[५] दइश्शम् ।)

चेट – अहमपि परिधास्यामि । (अह पि पहिलिश्शम् ।)

शकार —सौवर्णं ते पीठकं कारयिष्यामि । (शोवण्ण दे [६]पीठक कालइश्शम् ।)

चेट —अहमप्युपवेक्ष्यामि । (अह पि उवविशिश्शम् ।)

शकार —सर्वं त उच्छिष्टं दास्यामि । (शव्व दे उच्छिश्ट [७]दइश्शम् ।)

चेट —अहमपि खादिष्यामि । (अह पि खाइश्शम् ।)

शकार —सर्वचेटानां महत्तरकं कारयिष्यामि । ( शव्वचेडाण[८] महत्तलक कलइश्शम् । )

चेट —भट्टक भविष्यामि । (भश्टके[९] हुविश्शम् ।)

शकार —तन्मन्यस्व मम वचनम् । (ता मण्णेहि[१०] मम वअणम् ।)

चेट —भट्टक सर्वं करोमि वर्जयित्वाऽकार्यम् । ( भश्टके शव्व कलेमि वज्जिअ अकज्जम् ।)

शकार —अकार्यस्य गन्धोऽपि नास्ति । (अकज्जाह गन्धे वि णत्थि[११] ।)

चेट —भणतु भट्टक । (भणादु भश्टके ।)

शकार —एनां वसन्तसेनां मारय । (एण वशन्तशेणिअ मालेहि ।)

चेट —प्रसीदतु भट्टकः । इयं मयाऽनार्येणार्या प्रवहणपरिवर्तनेनानीता । (पशीददु भश्टके । इअ मए अणज्जेण अज्जा पवहणपलिवत्तणेण आणीदा ।)

---

१ वलित (वलिता). २ धिक्कृत ३ खोले (शृगाल ) ४ पुत्तका. ५ खण्डाइ ६ पीठके ७ ०श्टअ ८ चेड ०ण ९ भट्टके. १० माणेहि (मानय). ११ णश्ति.

VITA—

The ten quarters are seeing me, and the sylvan deities, and the moon, and this sun with his brilliant rays, and Dharma (Righteousness), and Wind, and the sky, and the internal soul, and also the Earth, the witness to all holy and unholy acts (24)

SAK —Then put your cloak over her, and kill her

VITA—Fool, you are damned !

SAK —This old jackal is afraid of (committing) sin All right, I'll persuade my servant Sthavaraka Sthavaraka, my slave, my son, I'll give you golden bracelets

CHETA—And I will put them on

SAK —I'll get a golden seat made for you

CHETA—And I will sit ( on it )

SAK —I'll give you all the leavings of my food

CHETA—And I will eat them

SAK —I'll make you the head of all my servants

CHETA—Master, I will become ( the head )

SAK —Then do my bidding,

CHETA—Master, I will do everything, excepting such as cannot be done

SAK —There is no trace of impossibility about it

CHETA—Let my master speak out ( what it is )

SAK —Kill this Vasantasena ?

CHETA—Please, master [ don't ask me that ] this noble lady was brought here by my unworthy self owing to an interchange of cars

---

साक्षिभूता प्रत्यक्षद्रष्ट्री । एतल्लिङ्गवचनविपरिणामेन सर्वत्र योज्यम् ॥ २४ ॥ खडुआइ बाहुवलयविशेषान् । पीढके पीठम् । उच्छिस्टअ भोजनावशिष्टम् । येनेति । [ येन कर्मणा अहं भागधेयदोषै दुर्भाग्यदोषै गर्भदास आजन्मसेवक विनिर्मितोऽस्मि तत्कर्म ईदृशकर्मणा अधिक न करिष्यामि सपादयिष्यामि । तेनाकार्यं परिहरामि ] ॥ २५ ॥ अपीति । [ एष परिभूता निकृष्टा दशा यस्य तथा अपि दरिद्र प्रेष्य सेवकोऽपि परत्र परलोके फल पुण्यकर्मण इति यावत् इच्छति । अस्य भर्ता तु न । तस्माद्ये शकारसदृशा अद्य असदृश कर्म पापादि असदृशमयोग्य पुरुष वा वर्धयन्ति सदृश पुण्यं कर्म योग्य पुरुष वा त्यजन्ति ते कथमिव नाश न यान्ति । यास्य-

शकार—अरे चेट तथापि न प्रभवामि। (अले[1] चेडा तथावि ण पहवामि।)

चेट—प्रभवति भट्टक शरीरस्य न चारित्रस्य। तत्प्रसीदतु प्रसीदतु भट्टक। बिभेमि खल्वहम्। (पहवदि भश्टके[2] शलीलाह ण चालित्ताह। ता पशीददु पशीददु भश्टके। भाआमि क्खु अहम्।)

शकार—त्व मम चेटो भूत्वा कस्माद्बिभेषि। (तुम मम चेडे भविअ कश्श भाआशि।)

चेट—भट्टक परलोकात्। (भश्टके पललोअश्श।)

शकार—क स परलोक। (के शे पल्लोए।)

चेट—भट्टक सुकृतदुष्कृतस्य परिणाम। (भश्टके शुकिददुक्किदश्श पलिणामे।)

शकार—कीदृश सुकृतस्य परिणाम। (केलिशे[3] शुकिदश्श पलिणामे।)

चेट—यादृशो भट्टको बहुसुवर्णमण्डित। (जादिशे भश्टके बहुशुवण्ण-मण्डिदे।)

शकार—दुष्कृतस्य कीदृश। (दुक्किदश्श केलिशे।)

चेट—यादृशोऽह परपिण्डभक्षको भूत। तदकार्य न करिष्यामि। (जादिशे हग्गे पलपिण्डभक्खके[4] भूदे। ता अकज्ज ण कलइश्शम्।)

शकार—अर न मारयिष्यसि। (इति बहुविध ताडयति।) (अले ण मालिश्शशि।)

चेट—ताडयतु भट्टको मारयतु भट्टक। अकार्य न करिष्यामि।

**येनास्मि गर्भदासो विनिर्मितो भागधेयदोषै।**
**अधिक च न क्रेष्यामि तेनाकार्य परिहरामि॥ २५॥**

(पिश्टदु[5] भश्टके माल्देदु भश्टके। अकज्ज ण कलइश्शम्।

जेणम्हि गब्भदाशे विणिम्मिदे भाअधेअदोशेहिं।
अहिअ च ण कीणिश्श[6] तेण[7] अकज्ज पलिहलामि॥

वसन्तसेना—भाव शरणागताऽस्मि। (भाव शरणागदम्हि।)

विट—काणेलीमात मर्षय मर्षय। साधु स्थावरक साधु।

**अप्येष[8] नाम परिभूतदशो[9] दरिद्र**
**प्रेष्य परत्र फलमिच्छति नास्य भर्ता।**
**तस्मादमी कथमिवाद्य न यान्ति नाश**
**ये वर्धयन्त्यसदृश सदृश त्यजन्ति॥ २६॥**

---

१ अले अले. २ भट्टके ३ कीलिशे, कीशिदे ४ पुश्टके, पुट्टके ५ पिट्ठदु विट्ठदु.
६ [illegible] ८ [illegible] ९ दश

SAK —You, slave, have I no mastery even over you ?

CHETA—Your honour is the master of my body, but not of my morals So please, master, excuse me, I am verily afraid

SAK —Being *my* servant, of whom are you afraid ?

CHETA—Of the next world, master

SAK —What is that 'next world' ?

CHETA—Master, it is the consequence of one's good and bad acts

SAK —Of what kind is the consequence of good acts ?

CHETA—(To be) like my master, adorned with many golden ornaments

SAK —And of what sort (is the consequence) of bad acts ?

CHETA —( To be ) like me, who have become an eater of others' food So I will not do an unholy deed

SAK —Aye, you won't kill her ? ( *He beats him in a variety of ways* )

CHETA—The master may beat me or kill me, but I won't do an unholy deed

Since I am made a born slave by the faults of my luck, I shall not buy any further ( store of evil luck ), and for this reason I refrain from committing a sinful deed ( 25 )

VAS —Sir, I beseech your protection !

VITA—Bastard, forbear, forbear ! Good, Sthavaraka, good !

Even this penniless man, in such a miserable condition, and a menial, desires reward in the next world, but not so his master Then why do such persons not meet with instant ruin, who multiply unworthy deeds and never do a worthy one ? ( 26 )

---

न्त्येवेत्यर्थ । वसन्ततिलक वृत्तम् ] ॥२६॥ रन्ध्रेति । [ कृतान्त विधि रन्ध्रानुसारी छिद्रानुवर्ती विषमो विपरीतकारी च यद् यस्मात्कारणाद् । अस्य चेटस्य । शप स्पष्टम् । उपजातिच्छन्द ]॥ २७ ॥ कस्मात् बिभेमि । अपि तु न कस्मादपीत्यर्थ । अपवारके । गृहविशेष इत्यर्थ । परिकर काछ इति प्रसिद्धम् । **सर्वकालमित्यादि** । वैरिको वैरी । स्वार्थे क ॥ २८ ॥ शण्णा उपदेश । एद विटम । कथमह एव बृहतो मल्लकप्रमाणात् । समुद्रप्रमाणादिति वक्तव्ये मौर्ख्यान्मिल्लकप्रमाणतया कुलमुपमिनोति । 'मल्लिका पत्रपुटिका तया कुलस्य महत्त्व मौर्ख्यादुपमिनोति' इति प्राचीनटीका । **किं कुलेनेति** । [ कुलेन उपदिष्टेन कथितेन किं किं प्रयोजनम् ।

अपि च ।

रन्ध्रानुसारी विषम कृतान्तो यदस्य दास्य तव चेश्वरत्वम् ।
श्रिय त्वदीया यदय न भुङ्क्ते यदेतदाज्ञा न भवान्करोति ॥ २७ ॥

शकार —( स्वगतम् । ) अधर्मभीरुको वृद्धश्रृगाल । परलोकभीरुरेष गर्भदास । अह राष्ट्रियश्याल कस्माद्बिभेमि वरपुरुषमनुष्य । (प्रकाशम् ।) अरे गर्भदास चेट गच्छ त्वम । अपवारके प्रविश्य विश्रान्त एकान्ते तिष्ठ । (अधम्म-भिलुए[1] बुड्ढखोडे । पलल्लोअभीलू एशे गब्भदाशे । हग्गे लश्टिअशाले कश्श भाआमि वलपुलिशमणुश्शे । अले[2] गब्भदाशे चेडे गच्छ तुमम् । ओवलके पविशिअ वीशन्ते एअन्ते चिश्ट ।)

चेट —यद्भट्टक आज्ञापयति । ( वसन्तसेनामुपसृत्य । ) आर्ये एतावान्मे विभव (इति निष्क्रान्त ।) (ज भट्टके आणवेदि । अज्जए एत्तिके मे विहवे ।)

शकार —( परिकर बध्नन् । ) तिष्ठ वसन्तसेने तिष्ठ । मारयिष्यामि । (चिश्ट वसन्तशेणिए चिश्ट । मालइश्शम् ।)

विट —आ ममाग्रतो व्यापादयिष्यसि[3] । (इति गले गृह्णाति ।)

शकार —(भूमौ पतति ।) भावो भट्टक मारयति । (इति मोह नाटयति । चेतना लब्ध्वा ।)

सर्वकाल मया पुष्टो मासेन च घृतेन च ।
अद्य कार्ये समुत्पन्ने जातो मे वैरिक कथम् ॥ २८ ॥

( विचिन्त्य । ) भवतु । लब्धो मयोपाय । दत्ता वृद्धशृगालेन शिरश्चालनसज्ञा । तदेत प्रेष्य वसन्तसेना मारयिष्यामि । एव तावत् । (प्रकाशम् ।) भाव यत्त्व मया भणित तत्कथमहमेव बृहत्तरै मल्लकप्रमाणै कुलैर्जातोऽकार्यं करोमि । एवमेत-दङ्गीकारयितु मया भणितम् । (भावे[4] भट्टक मालेदि ।

शव्वकाल मए पुश्टे[5] मशेण अ घिएण अ ।
अज्ज कज्जे शमुप्पण्णे जादे मे वैलिए[6] कधम् ॥

भोदु । लद्धे मए उवाए । दिण्णा बुड्ढखोडेण शिरश्चालणशण्णा । ता एद पेशिअ वशन्तशेणिअ मालइश्शम् । एव्व दाव । भावे ज तुम[7] मए भणेदि त कध हग्गे एव्व वड्ढकेहिं मल्लकप्पमाणेहिं[8] कुलेहिं जादे अकज्ज कलेमि । एव्व एद अङ्गीकलावेदु[9] मए भणिदम् ।)

विट —

किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् ।
भवन्ति सुतरा स्फीता सुक्षेत्रे कण्टकिद्रुमा[10]॥ २९ ॥

---

१ भीलू (भीरु ) २ अले अले ३ ष्यति ४ भावे भविअ ५ पुट्टे ६ वेलिए ७ तुमे ८ गल्लक, ०पमाणाहिं ९ कालीवेदु, कालिदु १० कण्टक

Moreover—

Providence, ever searching for weak points is unjust, since slavery is his ( Sthavaraka's ) lot and mastery yours and since he does not enjoy your wealth and you are not made to do his bidding. (27)

SAK —(*To himself*) The old jackal is afraid of unrighteousness and this born slave is afraid of the next world But I am the king's brother in-law, an aristocratic gentleman ! Whom do I fear ? ( *Aloud* ) You born slave, Cheta, you go away Getting into a secluded spot, you wait there, enjoying rest in solitude

CHETA—As the master orders ( *Approaching* Vasantasena ) Lady, only thus far lay my power ( *Exit* )

SAK —( *Girding up his loins* ) Stay, Vasantasena, stay I am going to kill you !

VITA—Ah, will you kill her in my presence ? ( *He seizes him by the neck* )

SAK —( *Falls on the ground* ) My friend is killing (me), the master ( *Shows that he faints, regaining consciousness* )

I have always fattened him on meat and ghee, but now that a business has arisen ( to be done ), how is it that he has turned my enemy ? (28)

( *Reflecting* ) Well I have found the remedy The old jackal has given me a warning by shaking my head So I'll (first) send him away and then kill Vasantasena I'll ( proceed ) in this way ( *Aloud* ) Friend, as to what I said to you, how can I, born in such a very large family, of the size of a *mallaka* ( cup ), ever do such a wicked deed ? I spoke ( in that fashion ) simple to force her into compliance with my proposal

VITA—

Why talk of one's family, since in such matters it is a man's character that makes him ( what he is ) ? Even thorny trees grow exceedingly large in a fertile field (29)

---

न किंचिदित्यथ । अत्र अकार्यकरणे शीलमेव कारणम् । यत सुक्षेत्रे कण्टकिद्रुमा स्फीता सप्ररूढा भवन्ति । एव महाकुलेऽपि दुष्कृतकारिणो भवन्ति ॥ २९ ॥ अस्मदिति । [ वसन्तसेना शौण्डीर्यभावात्स्वाभिमानात् अस्मत्समक्ष न युक्तमिद नापि सदृशमिदमिति मया पूर्वोक्तत्वात् मूर्खं न भजेत सेवेत । तस्माद् विविक्त

**शकार**—भाव एषा तवाग्रतो लज्जते । न मामङ्गीकरोति । तद्गच्छ । स्थावरकचेटो मया ताडितो गतोऽपि । एष प्रपलाय्य गच्छति । तस्मात्त गृहीत्वाऽऽगच्छतु भाव. । (भावे एशा तव अग्गदो लज्जाअदि । ण म अङ्गीकलेदि । ता गच्छ । थावलअचेडे मए पिट्टिदे गदे वि । एशे[1] पलाइअ गच्छदि । ता त गेण्हिअ आअच्छदु[2] भावे ।)

**विट**—(स्वगतम् ।)

**अस्मत्समक्ष हि वसन्तसेना शौण्डीर्यभावान्न भजेत मूर्खम् ।**
**तस्मात्करोम्येष विविक्तमस्या विविक्तविश्रम्भरसो हि काम ।। ३० ।।**

(प्रकाशम् ।) एव भवतु । गच्छामि ।

**वसन्तसेना**—(पटान्ते गृहीत्वा ।) ननु भणामि शरणागताऽस्मि । (ण भणामि शलणागदम्हि ।)

**विट**—वसन्तसेने न भेतव्य न भेतव्यम् । काणेलीमात वसन्तसेना तव हस्ते न्यास ।

**शकार**—एवम् । मम हस्त एषा न्यासेन तिष्ठतु । (एव्वम् मम हश्ते एशा णाशेण चिश्टदु[3] ।)

**विट**—सत्यम् ।

**शकार**—सत्यम् । (शच्चम् ।)

**विट**—(किंचिद्गत्वा ।) अथ वा मयि गते नृशसो हन्यादेनाम् । तदपवारितशरीर पश्यामि तावदस्य चिकीर्षितम् । (इत्येकान्ते स्थित ।)

**शकार**—भवतु । मारयिष्यामि । अथ वा कपटकापटिक एष ब्राह्मणो वृद्धशृगाल कदाऽप्यपवारितशरीरो गत्वा शृगालो भूत्वा कपट करोति । तदेतस्य वञ्चनानिमित्तमेव तावत्करिष्यामि । (कुसुमावचय कुर्वन्नात्मानम् मण्डयति ।) बाले बाले वसन्तसेने एहि । (भोदु । मालइश्शम्[4] । अध वा कवडकावडिके एशे बम्हणे वुड्ढखोडे कदावि ओवालिदशलीले गडिअ शिआले भविअ हुलुभुलि कलेदि । ता एदश्श वञ्चणाणिमित एव्व दाव कलइश्शम् । वाशू वाशू वशन्तशेणिए एहि ।

**विट**—अये कामी सवृत्त । हन्त निर्वृतोऽस्मि । गच्छामि । (इति निष्क्रान्त ।)

**शकार**—

**सुवर्णक ददामि प्रिय वदामि पतामि शीर्षेण सवेष्टनेन ।**
**तथाऽपि मा नेच्छसि शुद्धदन्ति किं सेवक कष्टमया मनुष्या ।। ३१ ।।**

(शुवण्णअ देमि पिअ वदेमि पडेमि शीशेण [5]शवेश्टणेण ।
तधा वि म णेच्छसि शुद्धदन्ति किं शेवअ कश्टमआ मणुश्शा ।।)

---

१ गदे वि एशे २ आअश्छदु ३ चिट्ठदु ४ माडिश्शम् ५ शवेट्टणेन

SAK —Friend, she feels bashful in your presence, and (therefore) does not accept me So you should take yourself off The slave Sthavaraka, whom I beat, has already gone (See),—here he goes away running. So please ( catch him and then ) come back with him

VITA—( *To himself* )

Vasantasena would not accept this fool in my presence, out of a sense of pride So I'll just secure privacy for her ( by going away ) for love becomes enjoyable ( *or*, gains flavour ) only through the confidence born of privacy (30)

( *Aloud* ) All right. I'll go

VAS—( *Seizing him by the hem of his cloak* ) I repeat, sir, that I beseech your protection !

VITA —Fear not, fear not, O Vasantasena ! Bastard, let Vasantasena ramain a pledge in your hands

SAK —Yes Let her remain in my hands as a pledge ( *also*, to perish ).

VITA—Honestly ?

SAK —Honestly

VITA—( *Going a little distance* ) Or rather, this wicked fellow might kill her when I am gone So I'll conceal myself and just observe what he intends to do. ( *He remains in a corner* )

SAK —Well, (now) I'll kill her Or rather, this cunning rascally Brahmana, this old jackal, might perhaps go and hide himself, and behaving like a fox might cheat me So I'll just do this to deceive him ( *He collects some flowers and decorates himself* ) Girl, girl, Vasantasena, come !

VITA—Oh ! He has turned a gallant ! Ah ! Now I feel at ease I'll go now ( *Exit* )

SAK —

I give you gold, speak caressingly, and fall down ( at your feet ) with my head having the turban on. Still, O damsel with pure teeth, why don't you desire to accept me as your servant ? Men, alas, have to suffer anguish ! (31)

---

विजन करोमि । हि यत विविक्ते यो विश्रम्भस्तेन रसो रागो यत्र तथाभूत काम भवति । अर्थान्तरन्यास । उपजातिच्छन्द ॥ ३० ॥ णाशेण न्यासेन विनाशेन च ।

वसन्तसेना—कोऽत्र संदेहः। (अवनतमुखी[1] 'खलचरित' इत्यादि श्लोकद्वय पठति।)

> खलचरित निकृष्ट जातदोष
> कथमिह मा परिलोभसे धनेन।
> सुचरितचरित विशुद्धदेह
> न हि कमल मधुपा परित्यजन्ति॥ ३२॥

> यत्नेन सेवितव्य पुरुष कुलशीलवान्दरिद्रोऽपि।
> शोभा[2] हि पणस्त्रीणां सदृशजनसमाश्रय काम॥ ३३॥

अपि च। सहकारपादप सेवित्वा न पलाशपादपमङ्गीकरिष्यामि। (को एत्थ संदेहो। अवि अ। सहआरपादव सेविअ ण पलासपादव[3] अङ्गीकरिस्सम्।)

शकार—दास्या पुत्रि दरिद्रचारुदत्तक सहकारपादप कृतः। अह पुन पलाशो भणित। किंशुकोऽपि न कृत। एव त्व मह्य गाली ददत्यद्यापि तमेव चारुदत्तक स्मरसि। (दाशीएधीए दलिद्दचालुदत्तके[4] शहआलपादवे कडे। हग्गे उण पलाशे[5] भणिदे। किंशुके वि ण कडे। एव्व तुम मे गालि देन्ती अज्जवि त ज्जेव चालुदत्तक शुमलेशि।)

वसन्तसेना—हृदयगत एव किमिति न स्मर्यते। (हिअअगदो ज्जेव किंत्ति ण सुमरीअदि।)

शकार—अद्यापि ते हृदयगत त्वा च सममेव मोटयामि। तद्दरिद्रसार्थवाहक-मनुष्यकामुकिनि तिष्ठ तिष्ठ। (अज्ज वि दे हिअअगद तुम च शम ज्जेव मोडेमि। ता दलिद्दशत्थवाहअमणुश्शकामुकिणि[6] चिश्ट चिश्ट[7]।)

वसन्तसेना—भण भण पुनरपि भण श्लाघनीयान्येतान्यक्षराणि। (भण भण पुणो वि भण[8] सलाहणिआइ एदाइ अक्खराइ।)

शकार—परित्रायता दास्या पुत्रो दरिद्रचारुदत्तकस्त्वाम्। (पलित्ताअदु[9] दाशीएपुत्ते दलिद्दचालुदत्तके तुमम्।)

वसन्तसेना—परित्रायते यदि मा प्रेक्षते। (परित्ताअदि जदि म पेक्खदि।)

शकार—

> किं स शक्रो वालिपुत्रो महेन्द्रो रम्भापुत्र कालनेमि सुबन्धु।
> रुद्रो राजा द्रोणपुत्रो जटायुश्चाणक्यो वा धुन्धुमारस्त्रिशङ्कु॥ ३४॥

अथ वैतेऽपि त्वा न रक्षन्ति।

---

१ संस्कृतमाश्रित्यावन०  २ शोभा पण्य०.  ३ पलाश.  ४ दत्ताके  ५ पडाशे.  ६ शट्ठघाह, शत्तवाह  ७ चिठ्ठ चिठ्ठ.  ८ भण। सला०  ९ पडिअत्तदु

VAS —What doubt is there about that ?

( *With face bent down she recites these two verses, beginning* 'You man of evil deeds' &c )

You man of evil deeds, you wretch ! Full of sin that you are, why do you tempt me with money, in this matter ? For the bees never abandon a lotus of graceful actions and pure ( beautiful ) form (32)

An effort should be made to serve a man of (good) family and ( virtuous ) character, even though he may be in reduced circumstances For, love for a worthy personage constitutes the glory of courtesans (33)

Moreover, having resorted to the mango-tree, I shall not betake myself to the *Palasa* tree

SAK —You slave-born maid, you've called that penniless Charudatta a mango-tree, while me you have described as a *Palasa*, and not even as a *Kimsuka* ! You, who have been thus calling me names,—still you remember that same Charudatta ?

VAS —When he is enshrined just in my heart, why should he not be remembered ?

SAK —Now I'll crush you, and him who is still stationed in your heart, both together ! So wait, O you who love that penniless merchant-man, wait !

VAS —Speak, speak, speak out once more those charming syllables !

SAK —Now let that slave-born penniless Charudatta save you ( if he can ) !

VAS —He will save me if he will see me !

SAK —

What ! Is he Indra, the great Indra, the son of Vali, or Kalanemi, the son of Rambha, or Subadhu, or King Rudra, or Jatayu, the son of Drona, or Chanakya, or Dhundhumara, or Trisanku ? ( 34 )

Or why ? Even these can't save you !

---

कपटेन चरतीति कापटिकः । कपटेषु कापटिक वञ्चकाग्रणीरित्यर्थ । सुवर्णकमिति । [ सवेष्टनेन सोष्णीषेण । शुद्धदन्ति तथाऽपि मा सेवक किं नेच्छसि । मनुष्या कष्टमया खलु । केचित् किं शे वश इति पदच्छेद कृत्वा ' किं ते वय

चाणक्येन यथा सीता मारिता भारते युगे ।
एव त्वा मोटयिष्यामि जटायुरिव द्रौपदीम् ॥ ३५ ॥

( इति ताडयितुमुद्यत । )

(किं शे शक्के वालिपुत्ते महिन्दे लम्भापुत्ते कालणेमी शुबन्धू ।
लुद्दे लाआ दोणपुत्ते जडाऊ चाणक्के वा धुन्धुमाले तिशङ्कू ॥
अध वा एदे वि दे ण लक्खन्ति ।

चाणक्केण जधा शीदा मालिदा भालदे जुए ।
एव्व दे मोडइश्शामि जडाऊ विअ दोव्वदिम् ॥)

वसन्तसेना—हा मात कुत्रासि । हा आर्यचारुदत्त एष जनोऽसपूर्णमनोरथ एव विपद्यते । तदूर्ध्वमाक्रन्दयिष्यामि । अथ वा वसन्तसेनोर्ध्वमाक्रन्दतीति लज्जनीय खल्वेतत् । नम आर्यचारुदत्ताय । ( हा अत्ते कहिं सि । हा अज्जचारुदत्त एसो जणो असपुण्णमणोरधो ज्जेव विवज्जदि । ता उद्ध अक्कन्दइस्सम् । अध वा वसन्तसेणा उद्ध अक्कन्दति त्ति लज्जणीअ क्खु एदम् । णमो अज्जचारुदत्तस्स ।)

शकार—अद्यापि गर्भदासी तस्यैव पापस्य नाम गृह्णाति । (इति कण्ठे पीडयन् ।) स्मर गर्भदासि स्मर । (अज्जवि गब्भदाशी[1] तश्श ज्जेव पावस्स णाम गेण्णदि । शुमल गब्भदाशि शुमल ।)

वसन्तसेना—नम आर्यचारुदत्ताय । (णमो अज्जचारुदत्तस्स ।)

शकार—म्रियस्व गर्भदासि म्रियस्व । (नाट्येन कण्ठ निपीडयन्मारयति ।) (मल गब्भदाशि मल ।)

(वसन्तसेना मूर्छिता निश्चेष्टा पतति ।)

शकार—(सहर्षम् ।)

एता दोषकरण्डिकामविनयस्यावासभूतां खला
रक्ता तस्य किलागतस्य रमणे कालागतामागताम् ।
किमेष समुदाहरामि निजक बाह्वो शूरत्व
निःश्वासोऽपि म्रियतेऽम्बा सुमृता सीता यथा भारते ॥ ३६ ॥

(एद दोशकलण्डिअ[2] अविणअश्शावाशभूद खल
लत्त तश्श किलागदश्श लमणे कालागद आअदम् ।
किं एशे शमुदाहलामि णिअअ बाहूण शूलत्तण[3]
णीशाशे वि मलेइ[4] अम्ब शुमला शीदा जधा भालदे ॥)

---

१ ०दाशि ..गेण्हसि. २ कलण्डअ. ३ शूलक्खण ४ मले इअ अ सुमला (म्रियते इय च सुमृता)

Just as in the Bharata age Sita was killed by Chanakya, so I'll kill you like Jatayu (killing) Draupadi ! (35)

(*He is about to strike her*).

VAS —O mother, where are you ? O noble Charudatta, this person is now dying, with her desires still unfulfilled ! Now I will cry out loudly (*i. e.* for help) Or no, it would be surely a disgrace that Vasantasena should be crying aloud—Bow to the noble Charudatta !

SAK —Still the born slave is calling out the name of that same villain ! (*He seizes her by the throat*). Remember, thou born slave, remember !

VAS —Bow to the noble Charudatta !

SAK —Die, thou born slave, die ! (*Gesticulates strangling her and killing her*)

Vasantasena *faints and falls down senseless* )

SAK —( *Gleefully* )

(I have killed) that wicked girl, who was a repository of faults and a dwelling place of immodesty, and who, full of love, came to sport with that Charudatta, who had come here, her end being near But why am I thus describing the valour of my arms ? The poor woman dies even when deprived of her breath, so as never to rise again, as did Sita in the Bharat (age) (36)

---

काष्ठमया मनुष्या ' इति च्छायामिच्छन्ति। ते वयं काष्ठमया पुरुषा न तु परमार्थतः इति व्याख्यान्ति च। उपजातिर्वृत्तम्।] किं सेवका कष्टमया मनुष्या. ॥ ३१ ॥ खलचरितेति। [ हे खलचरित दुष्टचरित हे निकृष्ट अधम। इति सबोधनद्वयम्। जातदोष उत्पन्नपाप इह मा कथं धनेन परिलोभसे विलोभयसि। सुचरित चरित आह्लादकरत्वादि यस्य तत्सुचरितचरित विशुद्धदेह भास्वरशरीर कमल मधुपा न परित्यजन्ति हि। अत्र अप्रस्तुतप्रशसया चारुदत्त न परित्यजामीति सूचितम्। पुष्पिताग्रा वृत्तम्।] ॥ ३२ ॥ यत्नेनेति। कुलशीलवान् पुरुष दरिद्रोऽपि यत्नेन सेवितव्य। सदृशजन अनुरूपपुरुष समाश्रयो यस्य तादृश काम पणप्रधाना स्त्रिय पणस्त्रिय वेश्या तासा शोभा हि भूषणावह खलु। आर्या] ॥ ३३ ॥ पलाशपदेन राक्षसोऽप्यभिधीयते। [पल मासमश्नातीति।] गालि देन्ती साक्षेप वदन्ती इति देशीति चिरतनटीका। किं स शक्र इति। शक्वरीविशेषच्छन्दसा श्लोक। [स चारुदत्त किं शक्र वालिपुत्र महेन्द्र। अत्र शक्र महेन्द्र इति पुनरुक्त वालिपुत्र इति आगमविरुद्धम्। अथ वा रम्भापुत्र कालनेमि सुबन्धु।

इच्छन्त मा नेच्छन्तीति गणिका रोषेण मया मारिता
शून्ये पुष्पकरण्डक इति सहसा पाशेनोत्त्रासिता ।
सेवावञ्चितो भ्राता मम पिता मातेव सा द्रौपदी
योऽसौ पश्यति नेदृश व्यवसित पुत्रस्य शूरत्वम् ॥ ३७ ॥

भवतु । साम्प्रत वृद्धश्रृगाल आगमिष्यतीति ततोऽपसृत्य तिष्ठामि । (तथा करोति ।)

(इच्छन्त मम णेच्छति[1] त्ति गणिआ लोशेण[2] मे मालिदा
शुण्णे पुप्फकलण्डके त्ति गहशा पाशेण उत्ताशिदा ।
शेवावञ्चिद भादुके मम पिदा मादेव शा दोप्पदी
जे शे पेक्खदि णेदिश ववशिद पुत्ताह शूलत्तणम् ॥

भोदु शपद[3] बुड्ढखोडे आगमिश्शादित्ति ता ओशलिअ चिश्टामि ।)

( प्रविश्य चेटेन सह । )

विट —अनुनीतो मया स्थावरकश्चेट । तद्यावत्काणेलीमातर पश्यामि । (परिक्रम्यावलोक्य च ।) अये मार्ग एव पादपो[4] निपतित । अनेन च पतता स्त्री व्यापादिता । भो पाप किमिदमकार्यमनुष्ठित त्वया । तवापि पापिन पतनात्स्त्रीवधदर्शनेनातीद पातिता वयम् । अनिमित्तमेतत् । यत्सत्य वसन्तसेना प्रति शङ्कित मे मन । सर्वथा दवता[6] स्वस्ति करिष्यन्ति । ( शकारमुपसृत्य । ) काणेलीमात एव मयाऽनुनीत स्थावरकश्चेट ।

शकार —भाव स्वागत ते । पुत्रक स्थावरक चेट तवापि स्वागतम् । (भावे शाअद दे । पुश्तका[7] थावलका चेडा तवावि शाअदम् ।)

चेट —अथ किं । (अध इ ।)

विट —मदीय न्यासमुपनय ।

शकार —कीदृशो न्यास । (कीदिशो णाशे ।)

---

एवमितरत्रापि आगमविरुद्ध यथायथमूह्यम् । कालनेमि असुरविशेष । सुबन्धु कवि. । धुन्धुमार त्रिशङ्कुश्च राजविशेषौ । शालिनी वृत्तम् ]॥ ३४ ॥ चाणक्येनेत्यादि । भारते युगे भारतावच्छिन्ने समये । [ मोटयिष्यामि मारयिष्यामि ] ॥ ३५ ॥ [ ऊर्ध्वमुच्चै स्वरेण । निश्चेष्टा चलनवलनादिरहिता । ] एतामिति । खला दुर्जनस्वभावाम् । तस्य चारुदत्तस्य रमणे सभोगनिमित्त कालागतामागताम् । काला कृष्णाम् । [ दोषाणा करण्डिका पेटिका अविनयस्य आवासभूता खला रक्ता आगतस्य अथ वा अगतस्य गतिरहितस्य दुर्गतस्येत्यर्थ । तस्य चारुदत्तस्य रमणे रमणार्थं कालागता कालप्राप्ता तथा आगताम् एताम् हतवा-

---

१ णेच्छसि २ पाशेण ३ सपद. ४ पादयोर्नि० ५ दर्शनादतीव ६ देवता .. करिष्यति ७ पुश्थका, पुत्तका

विट —वसन्तसेना ।

शकार —गता । (गडा ।)

विट —क्व ।

शकार —भावस्यैव पृष्ठत । (भावश्श ज्जेव पिश्टदो ।)

विट —(सवितर्कम् ।) न गता खलु सा तया दिशा ।

शकार —त्व कतमया दिशा गत । (तुम कदमाए दिशाए गडे[१] ।)

विट —पूर्वया दिशा ।

शकार —साऽपि दक्षिणया गता । (शा वि दक्खिणाए गडा ।)

विट —अह दक्षिणया ।

शकार —साऽप्युत्तरया । (शा वि उत्तलाए ।)

विट —अत्याकुल कथयसि । न शुध्यति[२] मेऽन्तरात्मा । तत्कथय सत्यम् ।

शकार —शपे भावस्य शीर्षमात्मीयाभ्या पादाभ्याम् । तत सस्थापय हृदयम् । एषा मया मारिता । (शवामि भावश्श शीश अत्तणकेलकेहिं पादेहिं । ता शठावेहि हिअअम् । एशा मए मालिदा ।)

विट —(सविषादम् ।) सत्य त्वया व्यापादिता ।

शकार —यदि मम वचने न प्रत्ययसे तत्पश्य प्रथम राष्ट्रियश्यालसस्थानस्य शूरत्वम् । ( इति दर्शयति । ) (जइ मम वअणे न पत्तिआअशि ता पेक्ख पढम लष्टिअशालशठाणाह शूलत्तणम्[३] ।)

विट —हा हतोऽस्मि मन्दभाग्य । (इति मूर्छित पतति ।)

शकार —ही ही । उपरतो भाव । (ही ही । उवलदे भावे ।)

चेट —समाश्वसितु समाश्वसितु भाव । अविचारित प्रवहणमानयतैव मया प्रथम मारिता । ( शमश्शशदु शमश्शशदु भावे । अविचालिअ पवहण आणन्तेण ज्जेव मए पढम मालिदा ।)

विट —(समाश्वस्य सकरुणम् ।) हा वसन्तसेने ।

दाक्षिण्योदकवाहिनी विगलिता याता स्वदेश रति-
हा हाऽलकृतभूषणे सुवदने क्रीडारसोद्भासिनि[४] ।
हा सौजन्यनदि प्रहासपुलिने हा मादृशामाश्रये[५]
हा हा नश्यति मन्मथस्य विपणि सौभाग्यपण्याकर ॥ ३८ ॥

(सास्रम् ।) कष्ट भो कष्टम् ।

---

१ गदे २ बुध्यति ३ पलक्कम (पराक्रमम् ।) ४ सरोद्भा० ५ आश्रमे

VITA—Vasantasena

SAK —She's gone !

VITA—Where ?

SAK —Just immediately after you ( lit at your back )

VITA—( *Surmisingly* ) Surely, she couldn't have gone in that direction !

SAK —In what direction did you go ?

VITA—In the east

SAK —Well, she went towards the south !

VITA—I went to the south !

SAK —She went to the north !

VITA—You are telling something in great agitation ( *or*, what is extremely contradictory ) My mind does not feel at ease ( entertains a doubt ) So tell ( me ) the truth

SAK —I swaear it by your head and by my feet So compose your heart I killed her !

VITA—( *Sorrowfully* ) You have really killed her ?

SAK —If you don't believe in my words, then observe this first exploit of Samsthanaka, the king's brother-in-law ! ( *Shows* [ *her body* ] )

VITA—Alas, I am undone, unlucky that I am ! ( *Swoons and falls down* )

SAK —Ho, ho ! My friend has breathed his last !

CHETA—Compose yourself, sir, compose yourself ! It was really I who first killled her by thoughtlessly bringing that carriage here

VITA—( *Coming to himself*, *mournfully*) O Vasantasena !

The river of the water in the form of innocence is dried up. Love has departed to its original home ! Alas, alas ! O you who were an adornment of your ornaments, you with that sweet face, you that shone with your fondness for amorous sports ! You that were the river of goodness, with laughter for the sandy bank, the refuge of persons like me ! Alas, alas ! The market of passion, the treasure-house of merchandise of beauty, is now pulled down ! (38)

( *Tearfully* ) Alas, Oh, alas !

किं नु नाम भवेत्कार्यमिदं येन त्वया कृतम् ।
अपापा पापकल्पेन नगरश्रीर्निपातिता ॥ ३९ ॥

(स्वगतम् ।) अये कदाचिदयं पाप[1] इदमकार्यं मयि सङ्क्रामयेत् । भवतु । इतो गच्छामि । (इति परिक्रामति ।)

( शकार उपगम्य धारयति । )

विट —पाप मा[2] मा स्प्राक्षीः । अलं त्वया । गच्छाम्यहम् ।

शकार —अरे वसन्तसेनां स्वयमेव मारयित्वा मां दूषयित्वा कुत्र पलायसे । साम्प्रतमीदृशोऽहमनाथः प्राप्तः । (अले वशन्तशेणिअं शअं ज्जेव मालिअ मं दूशिअ कहिं पलाअशि । शंपद ईदिशे हग्गे अणाधे पाविदे ।)

विट —अपध्वस्तोऽसि ।

शकार —

अर्थं शतं ददामि सुवर्णकं ते कार्षापणं ददामि सवोडिकं ते ।
एष दोषस्थान पराक्रमो मे सामान्यको भवतु मनुष्यकाणाम् ॥ ४० ॥

(अत्थं शदं देमि शुवण्णअं[3] दे कहावणं देमि शवोडिअं[4] दे ।
एशे दुशट्ठाण पलक्कमे[5] मे शामाण्णए भोदु मणुश्शआणम् ॥)

विट —धिक् । तवैवास्तु ।

विट —शान्तं पापम् । (शन्तं पावम् ।)

(शकारो हसति ।

विट —

अप्रीतिर्भवतु[6] विमुच्यतां हि हासो
धिक्प्रीतिं परिभवकारिकामनार्याम् ।
मा भूच्च त्वयि मम संगतं कदाचि-
दाच्छिन्नं धनुरिव निर्गुणं त्यजामि ॥ १ ॥

शकार —भाव प्रसीद प्रसीद । एहि । नलिन्या प्रविश्य क्रीडाव । (भावे पशीद पशीद । एहि । णलिणीए पविशिअ कीलेम्ह ।)

---

सौजन्यस्य नदि । हा मादृशामाश्रये आश्रयभूते । हा हा सौभाग्यमेव पण्य विक्रेय-वस्तुजातं तस्य आकरः खनि मन्मथस्य कामस्य विपणि पण्यवीथिका नश्यति । शार्दूल० वृत्तम् ] ॥ ३८॥ किं न्विति । [ किं नु नाम तत्कार्यं भवेद्येनेदं त्वया कृतम् ।

---

१ पापमिदं २ मां ३ सुवण्णअं ४ शवेडिअं ५ फलक्कमे (फलक्रम ). ६ स्खलतु

What indeed could be the purpose for which you committed this deed ? The sinless beauty of this city has been felled by you who are almost an embodiment of sin ( wickedness ) (39)

( *To himself* ) Ah, this wicked fellow might perhaps shift on me (the guilt of) this criminal deed All right, I'll leave this place. ( *Walks about* )

( Sakara *approaches and holds him* )

VITA—You sinner, don't touch me ! I have had enough of you ! Let me go !

SAK —Ah you ! Having yourself killed Vasantasena, where do you escape now, putting the guilt on me ? Now I have been rendered so very helpless

VITA—Oh, go to the devil !

SAK —

I will give you money to the extent of a hundred gold coins; I will give you a *karshapana*,* together with a *vodi* * Let this my exploit, which is the abode of ( *i e* of the nature of ) crime, be common to all persons ( *i e* do not disclose my name ) (40)

VITA—Fie ! Let it belong to you alone

CHETA—Heaven forbid !

( *Sakara laughs* )

VITA—

Let there be absence of joy ( on your part, *i e* feel sorry ), give up this laughter, fie upon your friendship which is humiliating and dishonourable ! May I never come in contact with you again ! I cast you off, who are without *guna* (virtue), like a broken bow ( without *guna*-string ) (41)

SAK —Friend, please be not angry Come, we'll descend into this lotus-pool and sport ( in its waters )

---

पापकल्पेन पापादीपन्न्यूनेन । अपापा नगरस्य श्री शोभा त्वया निपातिता । ] ॥ ३९ ॥ हे पाप हे पापसकल्प । अयं शतमिति । [ ते शत सुवर्णमयं ददामि । बोडी पणचतुर्थाश तत्सहित सबोडिक कार्षापण षोडशपणात्मक सुवर्णं ते ददामि । ] बोडी विंशतिकपर्दक गौडे प्रसिद्ध । तच्चतुष्टय पण । ते षोडश कार्षापण कहावण इत्येके । साधारणो भवतु । [ उपजातिर्वृत्तम् ] ॥ ४० ॥ अप्रीतिरिति । [ अप्रीति

---

* Names of different coins

विट —

अपतितमपि तावत्सेवमान भवन्त
पतितमिव जनोऽय मन्यते मामनार्यम् ।
कथमहमनुयायां त्वा हतस्त्रीकमेन
पुनरपि [1]नगरस्त्रीशङ्कितार्धाक्षिदृष्टम् ॥ ४२ ॥

(सकरुणम् ।) वसन्तसेने ।

अन्यस्यामपि जातौ मा वश्या भूस्त्व हि सुन्दरि ।
चारित्र्यगुणसपन्ने[2] जायेथा विमले कुले ॥ ४३ ॥

शकार —मदीये पुष्पकरण्डकजीर्णोद्याने वसन्तसेना मारयित्वा कुत्र पलायसे । एहि । मम आवुत्तस्याग्रतो व्यवहार देहि । ( इति धारयति[3] । ) ( ममकेलके[4] पुष्फकलण्डकजिण्णुज्जाणे वशन्तशेणिअ मालिअ कहिं पलाअशि । एहि । मम आवुत्तश्श अग्गदो ववहाल[5] देहि ।)

विट —आ तिष्ठ जाल्म । (इति खड्गमाकर्षति[6] ।)

शकार —( सभयमपसृत्य । ) किं रे भीतोऽसि । तद्गच्छ । ( किं ले भीदेशि । ता गच्छ[7] ।)

विट —(स्वगतम् ।) न युक्तमवस्थातुम् । भवतु । यत्रार्यशर्विलकचन्दनक-[8]प्रभृतय सन्ति तत्र गच्छामि । (इति निष्क्रान्त ।)

शकार —निधन गच्छ । अरे स्थावरक पुत्रक कीदृश मया कृतम् । (णिधण गच्छ । अले थावलका पुत्तका[9] कीलिशे मए कडे ।)

चेट —भट्टक महदकार्यं कृतम् । (भश्टके[10] महन्ते अकज्जे कडे ।)

शकार —अरे चेट किं भणस्यकार्यं कृतमिति । भवतु । एव तावत् । (नाना-भरणान्यवतार्य ।) गृहाणेममलकार मया तावद्दत्तम् । यावत्या वेलायामलकरोमि तावती वेला मम । अन्यदा तव । (अले चेडे किं भणाशि अकज्जे कडेत्ति । भोदु । एव्व दाव । गेण्ह एद अलकारअ मए ताव दिण्ण । जेत्तिके वेले अलकलेमि तेत्तिक वेल मम । अण्ण तव ।)

चेट —भट्टक एवैते शोभन्ते । किं ममैतै । (भश्टके[10] ज्जेव एदे शोहन्ति । किं मम एदेहिं ।)

शकार —तद्गच्छ । एतौ वृषभौ गृहीत्वा मदीयाया प्रासादबालाग्रप्रतोलि-काया तिष्ठ यावदहमागच्छामि । (ता गच्छ । एदाइ गोणाइ गेण्हिअ ममकेलकाए पाशादबालग्गपदोलिकाए[11] चिश्ट जाव हग्गे आअच्छामि ।)

चेट —यद्भट्टक आज्ञापयति । (इति निष्क्रान्त ।) (ज भश्टके आणवेदि ।)

---

१ रश्री २ चारित्र ३ ताडयति ४ केरके ५ ववहाले ६ कर्षयति. ७ गश्छ. ८ चन्दनप्रभृ०. ९ पुत्तका, पुत्थका १० भट्टके ११ पडोलिआए

VITA—

The people (of this city) consider me as if degraded and wicked (*or*, sinful) while serving you even when you had not fallen (so low as now) How, then, can I still follow you, who have now killed a woman, and who will again be fearfully looked at with half closed eyes by the women of this city? (42)

(*Sorrowfully*) Vasantasena!

O fair one, may you never become a courtesan in your next birth, O you possessed of the excellences of character, may you be born in a pure family! (43)

SAK —Where are you now escaping, having killed Vasantasena in my old Pushpakarandaka garden? Come, you must make your deposition before my brother-in-law (the king)! (*Seizes him*)

VITA—Ah, just wait, you villain! (*Draws his sword*)

SAK —(*Moving off in fear*). What, are you afraid? Well, you may go

VITA—(*To himself*) It is not desirable to stay here (longer) All right, I will go to the place where there are the worthy Sarvilaka, Chandanaka, and others (*Exit*)

SAK —Go to perdition! Well, Sthavaraka my son, what sort of a deed have I done?

CHETA—Master, you have committed a most heinous crime!

SAK —What, you slave, what do you say? —That I committed a crime? All right, (I will manage) thus (*Takes off many ornaments*) Take these ornaments, which I hand over to you They are mine during the time that I have to decorate myself, on other occasions they shall be yours

CHETA —These look well on my master's own body, of what use are they to me?

SAK —Well, then, be off, take away those bullocks and stay in the aisle of the elephant corniced upper terrace of my palace, until I come there

CHETA—As my master orders (*Exit*)

---

अनुताप दुःख वा भवतु । हासो विमुच्यता हि । परिभवकारिका अनार्या प्रीति धिक् । त्वयि मम सगत कदाचिदपि मा भूत् । आच्छिन्न शत्रुणा विध्वस्त निर्गुण विगतज्य धनुरिव निर्गुण दयादिगुणरहित त्वा त्यजामि । प्रहर्षिणी वृत्तम् ] ॥४१॥ [ नलिन्या दीर्घिकायाम् । नलानि सन्त्यस्यामिति नलिनी । ] अपतितमपीति ।

शकार—आत्मपरित्राणे भावो गतोऽदर्शनम् । चेटमपि प्रासादबालाग्रप्रतोलिकाया निगडपूरित कृत्वा स्थापयिष्यामि । एव मन्त्रो रक्षितो भवति । तद्गच्छामि । अथ वा पश्यामि तावदेनाम् । किमेषा मृताऽथ वा पुनरपि मारयिष्यामि । (अवलोक्य ।) कथ सुमृता । भवतु । एतेन प्रावरकेण प्रच्छादयाम्येनाम् । अथ वा नामाङ्कित एष । तत्कोऽप्यार्यपुरुष प्रत्यभिज्ञास्यति । भवतु । एनेन वातालीपुञ्जितेन शुष्कपर्णपुटेन प्रच्छादयामि । ( तथा कृत्वा विचिन्त्य । ) भवतु । एव तावत् । साप्रतमधिकरण गत्वा व्यवहार लेखयामि यथाऽर्थस्य कारणात्सार्थवाहकचारुदत्तकेन मदीय पुष्पकरण्डक जीर्णोद्यान प्रवेश्य वसन्तसेना व्यापादितेति । (अत्तपलित्ताणे भावे गदे अदशणम् । चेड वि पाशादबालग्गपदोलिकाए णिगलपूलिद[1] कदुअ थावइश्शम । एव्वं मन्ते लक्खिदे भोदि । ता गच्छामि । अध वा पेक्खामि दाव एदम् । कि एशा मला आदु पुणो वि मालइश्शम् । कध शुमला । भोदु । एदिणा पावालएण पच्छादेमि णम् । अध वा णामङ्किदे एशे । ता के वि अज्जपुलिशे पच्चहिजाणेदि । भोदु । एदिणा वादालीपुञ्जिदेण शुक्खपणपुडेण पच्छादेमि[2] । भोदु । एव्वं दाव । सपद अधिअलण गच्छिअ ववहाल लिहावेमि जहा[3] अत्थश्श कालणादो शत्थवाहचालुदत्ताकेण[4] ममकेलक पुप्फकलण्डक जिण्णुज्जाण पवेशिअ वशन्तशेणिआ वावादिदे त्ति । )

चारुदत्तविनाशाय करोमि कपट नवम् ।
नगर्यां विशुद्धाया पशुघातमिव दारुणम् ॥ ४४ ॥

(चालुदत्तविणाशाय कलेमि कवड णवम् ।
णअलीए विशुद्धाए पशुघाद व्व[5] दालुणम् ॥)

भवतु । गच्छामि । ( इति निष्क्रम्य दृष्ट्वा । सभयम् । ) अविद मादिके । येन येन गच्छामि मार्गेण तेनैवैष दुष्टश्रमणको गृहीतकषायोदक चीवर गृहीत्वाऽऽगच्छति । एष मया नासा छित्त्वा वाहित कृतवैर कदाऽपि मा प्रेक्ष्यैतेन मारितेति प्रकाशयिष्यति । तत्कथं गच्छामि । (अवलोक्य । ) भवतु । एतमर्धपतित प्राकारखण्डमुल्लङ्घ्य गच्छामि । (भोदु । गच्छामि । अविद मादिके । जेण जेण गच्छामि मग्गेण तेण ज्जेव एशे दुश्टशमणके गहिदकशाओदक चीवल आअच्छदि । एशे मए णशि[6] च्छिदिअ वाहिदे किदवेले कदावि म पेक्खिअ एदेण मालिदेत्ति पआशइश्शदि । ता कध गच्छामि । भोदु । एव अद्धपडिद पाआलखण्ड उल्लङ्घिअ गच्छामि ।)

[ अपतितमपि भवन्त सेवमानं मां अय जन अनार्यं पतितमिव मन्यते । एव सति हतस्त्रीक पुनरपि नगरस्त्रीभि शङ्कित सभय यथा स्यात्तथा अर्धाक्षिभि अर्धो-

१ णिअल० २ पश्छा ३ जधा ४ शठुवाहउत्तचा० ५ च. ६ णशितअ ( नासारज्ज्वा ), णशि च्छिअ ( नसिच्छित्वा )

SAK —My friend has made himself scarce to save his own skin Now this slave also I am going to put in fetters and keep (imprisoned) in the elephant corniced terrace room of my palace Thus my secret will be kept safe Now let me go, or no—first let me have a look at her, whether she is dead or whether I shall have to kill her again (*Observing*) How! She is quite dead! Well, now, I'll cover her up with this cloak But, no,—this is marked with my name so some gentleman might recognize it. All right, I'll cover her up with this lot of dried leaves which have been heaped together by the gusts of wind (*Does so, re- ating*), Well I'll now proceed in this way I shall forthwith go to the law-court and file a written charge that the merchant Charudatta enticed Vasantasena into my old garden, Pushpa-karandaka, and killed her for the sake of her money

I'll invent a new fraud, for the destruction of Charudatta, horrible like the slaughter of an animal (*i e* a cow) in a holy city (44)

All right, I'll depart (*Goes out and sees, with fear*) Alack-a day! By whatever path I (try to) leave, by that same path I find this rascally Buddhist medicant coming in, with his garment dyed with red-coloured water He is inimical towards me, as I had bored a hole through his nose and turned him out, seeing me, perhaps he might give out that it was I who killed her So how shall I leave? (*Seeing*) Yes I'll jump over this half fallen broken wall, and take myself off

---

न्मीलितनेत्रै दृष्ट त्वामहं कथमनुयायाम् । मालिनी वृत्तम् ]।। ८२ ।। अन्यस्या मिति । [ हे सुन्दरि त्वमन्यस्या जातौ आगामिनि जन्मनि अपि वेश्या मा भू । हे चारित्र्यमेव गुणस्तेन सपन्ने सुशीले विमले निर्दोषे कुले जायेथा ]।। ४३ ।। आवुत्तश्श भगिनीपते । व्यवहार विचारम । निषन गच्छ त्वमिति विट प्रति । आत्मपरित्राणे आत्मरक्षार्थम् । प्रासादबालाग्रप्रतोलिकाया प्रासादोपरिगृहविशेष इति पश्चाद्व्याख्यातम् । निगलपूरित अतिगुरुबन्धनोक्तिरियम् । प्रावारेण प्रच्छद-पटेन । णामङ्किदे नामाङ्कित वसन्तसेनाया इति शकारस्य वेति लिखिताक्षर. । तथा कृत्वा । पूर्वोक्तेन स्थगिता कृत्वेत्यर्थ । चारुदत्तेति । [ चारुदत्तस्य विनाशाय वधाय नव कपट मार्या करोमि रचयिष्यामि । विशुद्धाया नगर्यां दारुण पशुघात-मिव । गोवधमिव ] ।। ४४ ।। अविद मादिके सभयविस्मये । नश्तिय नासारज्ज्वा बाधित । एषोहमित्यादि । गाथा । [ एषोऽह लङ्कानगर्यां गगने भूम्या पाताले हनूमच्छिखरे महेन्द्र इव त्वरितत्वरितो गच्छन्नस्मि । ] भूमौ पाताले हनूमच्छिखरा-

एषोऽहं त्वरितत्वरितो लङ्कानगर्यां गगने गच्छन् ।
भूम्यां पाताले हनूमच्छिखर इव महेन्द्र ॥ ४५ ॥

(एशे म्हि तुलिदतुलिदे लङ्काणअलीए गअणे गच्छन्ते ।
भूमीए पाआले हणूमशिहले विअ महेन्दे ॥)

(इति निष्क्रान्त ।)

( प्रविश्यापटीक्षेपेण[1] सवाहक । )

भिक्षु —प्रक्षालितमेतन्मया चीवरखण्डम् । किं नु खलु शाखाया शुष्क करिष्यामि । इह वानरा विलुम्पन्ति । किं नु खलु भूम्याम । धूलीदोषो भवति । तत्कुत्र प्रसार्य शुष्क करिष्यामि । (दृष्ट्वा ।) भवतु इह वातालीपुञ्जिने शुष्कपत्र-सचये प्रसारयिष्यामि । ( तथा कृत्वा ।) नमो बुद्धाय । (इत्युपविशति ।) भवतु । धर्माक्षराण्युदाहरामि । (' पञ्चजण जेण मालिदा ' (८।२) इत्यादि पूर्वोक्त पठति । अथ वाऽल ममैतेन स्वर्गेण । यावत्तस्या वसन्तसेनाया बुद्धोपासिकाया प्रत्युपकार न करोमि यया दशाना सुवर्णकाना कृते द्यूतकराभ्या निष्क्रीतस्तत प्रभृति तया क्रीतमिवात्मानमवगच्छामि । (दृष्ट्वा ।) किं नु खलु पर्णोदरे समुच्छ्वसिति । अथ वा । (पक्खालिदे[2] एशे मए चीवलखण्डे । किं णु क्खु शाहाए शुक्खावइश्शम् । इध वाणला विलप्पन्ति । किं णु क्खु भूमीए । धूलीदोशे होदि । ता कहिं पशालिअ शुक्खावइश्शम् । भोदु । इध वादालीपुञ्जिदे[3] शुक्खवत्तसचए पशालइश्शम् । णमो बुद्धश्श । भोदु । धम्मक्खलाइ उदाहलामि । अध वा अल मम एदेण शग्गेण । जाव ताए वसन्तशेणिआए बुद्धोवाशिआए पच्चुवकाल ण कलेमि जाए दशाण शुवण्णकाण किदे जूदिअलेहि णिक्कीदे तदो पहुदि ताए कीदं विअ अत्ताणअ अवगच्छामि । किं णु क्खु पण्णोदले शमुश्शदि । अध वा ।)

वातातपेन तप्तानि चीवरतोयेन स्तिमितानि पत्राणि ।
एतानि विस्तीर्णपत्राणि मन्ये पत्राणीव स्फुरन्ति ॥ ४६ ॥

(वादादवेण तत्ता चीवलतोएण तिम्मिदा पत्ता ।
एदे विथिण्णपत्ता मण्णे पत्ता विअ फुलन्ति[4] ॥

( वसन्तसेना सज्ञा लब्ध्वा हस्त दर्शयति । )

भिक्षु —हा हा शुद्धालकारभूषित स्त्रीहस्तो निष्क्रामति । कथम् । द्वितीयोऽपि हस्त । (बहुविध निर्वर्ण्य ।) प्रत्यभिजानामीवैत हस्तम् । अथ वा किं विचारेण । सत्य स एव हस्तो येन मेऽभय दत्तम् । भवतु । पश्यामि । ( नाटयेनोद्घाटय दृष्ट्वा प्रत्यभिज्ञाय च । ) सैव बुद्धोपासिका । (हा हा शुद्धालकालभूशिदे इत्थि-आहत्थे णिक्कमदि । कधम् । दुदिए वि हत्थे । पच्चभिआणामि विअ एद हत्थम् । अध वा किं विचालेण । शच्च शे ज्जेव हत्थे जेण मे अभअ दिण्णम् । भोदु । पेक्खिश्शम् । शा ज्जेव बुद्धोवाशिआ ।)

---

१ पटाक्षेपेण. २ पच्छाडिदे ३ पुञ्जिदेशु . . सचएशु ४ फुरन्ति

Here I go with very great speed, like (the monkey) Mahendra going to the city of Lanka, through the sky, over the earth, through the nether regions, and over the summit of (the mountain) Hanumat (45) (*Exit*)

(*Entering, with a toss of the curtain,* Samvahaka, *now appearing as*)

A BUDDHIST MENDICANT—I have washed this piece of cloth What, shall I dry it by hanging it on the branch (of some tree) ? Here the monkeys might make off with it Shall I then spread it over the ground ? (There) it would be spoiled by the dust So, where shall I spread it for drying ? (*Seeing*) All right, I'll spread it here on this heap of dry leaves collected together by the gusts of wind (*Does so*) Bow to Buddha ! (*Sits down*) Well, now, let me recite holy words (*He recites the verses beginning with* 'That man most surely attains heaven' &c , *which he had repeated before*) Or no—I have had enough of this (seeking after) heaven, so long as I do not requite the obligations of that Vasantasena, the devotee of Buddha, who bought me off from those two gamesters by paying ten gold-pieces. From that time I consider myself as having been purchased by her [as a slave]. (*Seeing*) Ha ! What may this be, that is heaving inside these leaves ? Or rather —

I think that these leaves are throbbing as they were (first) heated by the hot breezes and (then) moistened by the water of my garment, (the leaves which) resemble wings (of birds) with their feathers extended (46)

(Vasantasena *regains consciousness and puts forth her hand*).

THE M —Ha ! What ! A woman's hand is coming out, adorned with fine ornaments ! What ! Another hand, too ! (*Observes it variously*) I seem to recognize this hand Or why what doubt can there be ? Surely it is that same hand which granted me safety (i e freedom) ! Well, I will see (*Gesticulates uncovering it, observing and recognizing*) It is she, that same devotee of Buddha !

---

दिव महेन्द्र । महेन्द्रशिखरादिव हनूमानिति वक्तव्ये शकारोक्तत्वाद्विपरीतम् । 'अट्ठअ' इति पाठे अष्टकशिखरादित्यर्थः । व्याहृतोपममिद तावत् ॥ ४५ ॥ तथेति प्रसार्य । तदो पहुदि निष्क्रयप्रभृति । वातातपेनेति । गाथा । वातातपेन तप्तानि चीवरतोयेन तिम्मितत्वमार्द्रत्व प्राप्तानि । तिम्मिदा इति भावप्रधानो निर्देश । एतानि

(वसन्तसेना पानीयमाकाङ्क्षति ।)

भिक्षु —कथमुदक याचते । दूरे च दीर्घिका । किमिदानीत्र करिष्यामि । भवतु । एतच्चीवरमस्या उपरि गालयिष्यामि । ( तथा करोति । ) ( कध उदअ मग्गेदि । दूले च दिग्घिआ । किं दाणि एत्थ कलइश्शम् । भोदु । एद चीवल शे उपलि गालइश्शम्' ।)

( वसन्तसेना सज्ञा लब्ध्वोत्तिष्ठति । भिक्षु पटान्तेन वीजयति । )

वसन्तसेना—आर्य कस्त्वम् । (अज्ज को तुमम् ।)

भिक्षु —किं मा न स्मरति बुद्धोपासिका दशसुवर्णनिष्क्रीतम् ।(किं म ण शुमलेदि बुद्धोवाशिआ दशशुवण्णणिक्कीदम् ।)

वसन्तसेना—स्मरामि । न पुनर्यथाऽऽर्यो भणति । वरमहमुपरतैव । ( सुमरामि । ण उण जधा अज्जो भणादि । वर अह उवरदा ज्जेव ।)

भिक्षु —बुद्धोपासके किं न्विदम् । (बुद्धोवाशिए किं ण्णेदम् ।)

वसन्तसेना —(सनिर्वेदम् ।) यत्सदृश वेशभावस्य । (ज सरिस वेसभावस्स ।)

भिक्षु —उत्तिष्ठतूत्तिष्ठतु बुद्धोपासिकैता पादपसमीपजाता लतामवलम्ब्य । ( इति लता नामयति[2] । ) (उट्ठेदु उट्ठेदु बुद्धोवाशिआ एद पादवसमीवजाद लद ओलम्बिअ । )

( वसन्तसेना गृहीत्वोत्तिष्ठति । )

भिक्षु —एतस्मिन्विहारे मम धर्मभगिनी तिष्ठति । तत्र समाश्वस्तमना भूत्वोपासिका गेह गमिष्यति । तच्छनै शनैर्गच्छतु बुद्धोपासिका । (इति परिक्रामति । दृष्ट्वा । ) अपसरत आर्या अपसरत । एषा तरुणी स्त्री एष भिक्षुरिति शुद्धो ममैष धर्म. ।

---

विस्तीर्णं प्राप्त प्रसारित यत्र तानि पत्राण्येव स्फुरन्ति विजृम्भन्ते । [ विस्तीर्णपत्रा प्रसारितपक्षा मन्ये पत्रा पक्षिण इव स्फुरन्ति । इति ल० दी० ] ।। ४६ ।। शुद्ध केवल कटकादि एवालकरण यत्र स । दीर्घिका वापी । गालयिष्यामि जलसेकार्थम् । वरं मनागिष्टम् । हस्तेति । [ स खलु मनुष्य । यो हस्ते हस्तेन वा सयत अकार्यान्निवर्तितहस्त । मुखसयत असत्यवाक्यादेर्निवृत्त । इन्द्रियसयत कामान्निवर्तितेन्द्रियवृत्ति । तस्य राजकुल किं करोति । धर्मनिष्ठस्य तस्य न काऽपि भीतिरिति भाव । तस्य हस्ते परलोको निश्चल ध्रुव ] ।। ४७ ।।

इति मोटनो नामाष्टमोऽङ्क ।

---

१ चाल०. २ नमयति.

( Vasantasena *shows a desire for water* )

THE M —How ! She asks for water ! And the well is far off ! What shall I now do about this ? All right, I will let this garment drip over her ( *Does so* ).

( Vasantasena *regains consciousness and rises* *The* Mendicant *fans her with the hem of his cloak* ).

VAS —Sir, who may you be ?

THE M —What, does not your ladyship, the worshipper of Buddha, remember me ( whom you ) purchased with ten gold-pieces ?

VAS —I do remember (now) But it isn't as you say —It were far better that I was dead !

THE M —O worshipper of Buddha, what may this be ?

VAS —( *With dejection* ) What befits the profession of a courtesan

THE M —Please stand up, O worshipper of Buddha, stand up, by supporting yourself with this creeper growing near this tree ( *Bends down the creeper* )

( Vasantasena *seizes it and stands up* ).

THE M —In this *Vihara* ( convent ) hard by, there dwells ( a nun ), sister of mine by faith You, the devotee ( of Buddha ) should recover the composure of your mind in that place, and then go home So, please walk very slowly, O worshipper of Buddha ! ( *Walks about*, *seeing* ) Make way, worthy sirs, make way ! Here's a young lady, and here's a mendicant, ( still ) this is my righteous ( holy ) duty

हस्तसयतो मुखसयत इन्द्रियसयत स खलु मनुष्य ।
किं करोति राजकुल तस्य परलोको हस्ते निश्चल ॥ ४७ ॥

( एदश्शि[1] विहाले मम धम्मबहिणिआ चिट्ठदि । तहिं शमश्शशिदमणा भविअ उवाशिआ गेहं गमिश्शदि । ता शेण शेण गच्छदु बुद्धोवाशिआ । ओशलध[2] अज्जा ओशलध । एशा तलुणी इत्थिआ एशो भिक्खु त्ति शुद्धे मम एशे धम्मे ।

हत्थशजदो[3] मुहशजदो इन्दियशजदो शो क्खु माणुशे ।
किं कलेदि लाअउले तश्श पललोओ[4] हत्थे णिच्चले ॥)

इति वसन्तसेनामोटनो[5] नामाष्टमोऽङ्कः ।

---

१ एत्थ शिराविहाबले (अत्र श्रावकगृहे) २ ओशलध ओशलध ३ शजद-दे मुहशजद-दे इन्दिअशजद दे. ४ पललोअ ५ ०सेनामारण नाम, इति मृच्छकटिकाया वस०

He is ( really to be called ) a man who is restrained ( in the use of ) his hands, his mouth, and his senses What can the king's ( law— ) court do to him ? The next world lies firmly ( grasped ) in his hand, (47)

( *Exeunt Omnes* )
*Thus ends Act VIII , styled*
' The Killing of Vasantasena '

---

# नवमोऽङ्कः ।

( तत. प्रविशति शोधनक । )

शोधनक —आज्ञप्तोऽस्म्यधिकरणभोजकै —अरे शोधनक व्यवहारमण्डप गत्वाऽऽसनानि सज्जीकुर्विति । तद्यावदधिकरणमण्डप सज्जितु गच्छामि । ( परिक्रम्यावलोक्य च । ) एषोऽधिकरणमण्डप । एष प्रविशामि (प्रविश्य समाज्यासिनमाधाय । ) विविक्त कारितो मयाऽधिकरणमण्डप । विरचितानि मयाऽऽसनानि । तद्यावदधिकरणिकाना पुनर्निवेदयामि । (परिक्रम्यावलोक्य च ।) कथमेष राष्ट्रियश्यालो दुष्टदुर्जनमनुष्य इत एवागच्छति । तद्दृष्टिपथ परिहृत्य गमिष्यामि । ( इत्येकान्ते स्थित । ) (आणत्तम्हि अधिअरणभोइएहिं—अरे सोहणआ ववहारमण्डव[1] गदुअ आसणाइ सज्जीकरेहि त्ति । ता जाव अधिअरणमण्डव सज्जिदु गच्छामि । एद अधिअरणमण्डवम् । एस[2] पविसामि । विवित्त कारिद मए अधिअरणमण्डवम् । विरइदाइ मए आसणाइ । ता जाव अधिअरणिआण उण णिवेदेमि । कध एसो रट्ठिअस्सालो दुट्ठदुज्जणमणुस्सो इदो एव्व आअच्छदि । ता दिट्ठिपध परिहरिअ गमिस्सम् ।)

( तत प्रविश्यत्युज्ज्वलवेषधारी शकार । )

शकार —

स्नातोऽह सलिलजलै पानीयैरुद्यान उपवनकानने निषण्ण ।
नारीभि सह युवतीभि स्त्रीभिर्गन्धर्व इव सुविहितैरङ्गकै ॥ १ ॥
(ण्हादेह[3] सलिलजलेहिं पाणिएहिं उज्जाणे उववणकाणणे णिशण्णे ।
णालीहिं शह जुवदीहिं इश्तिआहिं गन्धव्वेव[4] शुविहिदेहिं अङ्गकेहिं ॥)

[ अधिक्रियते विवादाद्यत्रेत्यधिकरण तस्य भोजयन्ति पालयन्तीति भोजका प्रभवस्तै । व्यवहारो विवाद तस्य मण्डप । 'परस्पर मनुष्याणा स्वार्थविप्रतिपत्तिषु । वाक्यान्न्यायाद्व्यवस्थान व्यवहार उदाहृत ॥' इति मिताक्षरा । ] अधिकरणे न्यायविवादविषये नियुक्तत्वात्तदेषामस्ति । 'अत इनिठनौ' इति ठन् । अपवादो दोषवाच्येति यावत् । स्नातोऽहमिति । प्रहर्षिणीच्छन्दसा । जलेहिं जुवदीहिं शुविहिदएहिं इत्यत्र स्वानुस्वाराणामप्यन्त्याक्षराणा लाघवम् । छन्दोनुरोधात् । स्नातोऽह सलिलजलै स्वच्छै । पाठान्तरे पानीयै । नारीभिर्युवतीभि स्त्रीभि सह उद्याने

१ मण्डप सज्जिदु गच्छेत्ति ता गच्छामि २ ता प० ३ ण्हादोह ४ गन्धव्वेहिं शुविहिदएहिं, गन्धवे विअ शुहिदेहि, गन्धव्वो शुवि०

# ACT IX

( *Then enter* Sodhanaka *the beadle* )

SODHANAKA—The officers of the law court have ordered me : " O Sodhanaka, go to the judicial hall and see that the seats are ready " So then I will just go to the judicial chamber to make them ready ( *Walking about and seeing* ) Here is the court of justice I will just enter it (*Enters, sweeps it and arranges the seats* ) I have swept the court-hall clean and arranged the seats So I will now go and report ( the same ) to the judges ( *Walks about , seeing* ) How now ! Here's that wicked fellow, villain and rogue, the King's brother-in-law, coming in this very direction ! So I will (first) keep out of the range of his sight and then go ( *He stands aside in a corner* )

( *Then enter* Sakara, *dressed in gaudy attire* )

SAK —

I have bathed with water, fluids and liquids, and sat in orchards, gardens and groves in the company of ladies, damsels and women, like a Gandharva having well-shaped ( *or,* well-decorated ) limbs (1)

---

उपवनकानने निषण्ण इति विपर्यस्य योजना । गन्धर्व इव सुविहितैरङ्गकैर्लक्षित । 'गन्धव्वेहिं' इति पाठे तृतीया प्रथमार्थे रूपक च । पौनरुक्त्यादि शकारोक्तत्वात् ॥ १ ॥ **क्षणेनेति** । उपेन्द्रवज्रया । हगे इत्यत्र एकारस्य लघुत्वम् । छन्दोनुरोधात् । एतच्छत्रकमुष्टिक पावालबन्ध इत्येके । क्षणेन ग्रन्थि । पाठान्तरे वृष्टिका । क्षण-जूलिका मे क्षणेन बाला क्षणकुन्तला वा । जनिकाज्वलिकयोर्विशेष (?) । 'चित्ते ण च्रित्तो' इति पाठे चित्र न चित्र यतोऽह राजश्याल इति व्याख्येयम् । राजश्याल त्वेन मयि सर्वं सभाव्यते इति भाव ॥ २ ॥ [ विषग्रन्थ्यभ्यन्तरे प्रविष्ट कीटो यथा विषतापमसहमान बहिर्निर्गमनार्थं रन्ध्र मार्गयते तथा स्वनाशपरिहारायोपाय मार्ग-माणन मया लब्ध उपाय इत्यर्थ । श्रेष्ठी वणिक् । अलकरणादिपरीक्षणधनगणनाद्यर्थं लोकरञ्जनार्थं च तस्याधिकरणे नियोग । तदुक्त कात्यायनेन—'कुलशीलवयो-वृत्तवित्तवद्भिरमत्सरै । वणिग्भि स्यात्कतिपयै कुलभूतैरधिष्ठितम् ॥' इति । कायस्थो व्यवहारलेखक व्यवहारदर्शी । 'व्यवहार प्रतिज्ञोत्तरसशयहेतुपरामर्श-प्रमाणनिर्णयप्रयोजनात्मक ' इति मिताक्षरा । तस्य पराधीनतया अर्थिप्रत्यर्थिसाक्ष्या-

क्षणेन ग्रन्थि क्षणजूटको मे क्षणेन बाला क्षणकुन्तला वा ।
क्षणेन मुक्ता क्षणमूर्ध्वचूडाश्चित्रो विचित्रोऽहं राजश्यालः ॥ २ ॥

अपि च । विषग्रन्थिगर्भप्रविष्टेनेव कीटकेनान्तरं मार्गमाणेण प्राप्तं मया महदन्तरम् । तत्कस्येदं कृपणचेष्टितं पातयिष्यामि । ( स्मृत्वा । ) आ स्मृतं मया । दरिद्रचारुदत्तस्येदं कृपणचेष्टितं पातयिष्यामि । अन्यच्च । दरिद्रः खलु सः । तस्य सर्वं संभाव्यते । भवतु । अधिकरणमण्डपं गत्वाऽग्रतो व्यवहारं लेखयिष्यामि यथा चारुदत्तेन वसन्तसेना मोटयित्वा मारिता । तद्यावदधिकरणमण्डपमेव गच्छामि । (परिक्रम्यावलोक्य च ।) एष सोऽधिकरणमण्डपः । अत्र प्रविशामि । (प्रविश्याव-लोक्य च ।) कथमासनानि दत्तानि तिष्ठन्ति । यावदागच्छन्त्यधिकरणभोजकाः तावदेतस्मिन्दूर्वाचत्वरे मुहूर्तमुपविश्य प्रतिपालयिष्यामि । (तथा स्थितः ।)

(खणेण गण्ठी खणजूलके[1] मे खणेण बाला[2] खणकुन्तले वा ।
खणेण मुक्के खण उद्धचूडे चित्ते विचित्ते हगे लाअशाले ॥

अवि अ । विशगण्ठिगब्भपविश्टेण विअ कीडएण अन्तलं मग्गमाणेण पाविद मए महदन्तलम् । ता कश्श एदं किविणचेश्टिअं पाडइश्शम् । आ शुमलिदं मए । दलिद्दचालुदत्तश्श एदं किविणचेश्टिअं पाडइश्शम् । अण्णं च । दलिद्दे क्खु शे । तश्श शव्वं शभावीअदि । भोदु । अधिअलणमण्डवं गदुअ अग्गदो ववहालं लिहा-वइश्शं जधा चालुदत्ताकेण वशन्तशेणिआ मोडिअ मालिदा । ता जाव अधिअलण-मण्डवं ज्जेव्व गच्छामि । एदं तं अधिअलणमण्डवम् । एत्थ पविशामि । कधं आशणाइं दिण्णाइं चिश्टन्ति । जाव आअश्शन्ति अधिअलणभोइआ दाव एदश्शिं दुव्वचत्तले[3] मुहुत्तअं उवविशिअ पडिवालइश्शम् ।)

**शोधनकः**—( अन्यतः परिक्रम्य । पुरो[4] दृष्ट्वा । ) एतेऽधिकरणिका आग-च्छन्ति । तद्यावदुपसर्पामि । ( इत्युपसर्पति । ) (एदे अधिअरणिआ आअच्छन्ति । ता जाव उपसप्पामि ।)

( ततः प्रविशति श्रेष्ठिकायस्था[5]दिपरिवृतोऽ[6]धिकरणिकः । )

**अधिकरणिकः**—भो भोः श्रेष्ठिकायस्थौ ।

**श्रेष्ठिकायस्थौ**[7]—आज्ञापयत्वार्यः । (आणवेदु अज्जो ।)

**अधिकरणिकः**—अहो व्यवहारपराधीनतया[8] दुष्करं खलु परचित्तग्रहण-मधिकरणिकैः ।

---

१ खण ( क्षण ) जूटिका. २ मे चञ्चलकुन्तले वा. ३ उच्चच० ४ पुरतः ५ स्थादिभिः ६ आधिक०, एवं सर्वत्र ७ तौ, उभौ. ८ हाराधी०

For one moment I have my hair knotted, in the next I wear it matted and bound up (like an ascetic) For one moment I have long, flowing tresses, in another curly hair One moment I keep them loose, in the next I have them rolled up on my crest (Thus) I am a picturesque and a wonderful brother-in-law of the king! (2)

Moreover, I have found a broad way out, like a worm seeking a way, having got within the interior of the knotted root of a poisonous herb So on whom shall I shift this evil deed of mine? (*Recollecting*) Yes, I remember it! I'll lay (the blame of) this vile act on the penniless Charudatta! Moreover, he is known to be poor, everything will be (believed as) possible in his case — All right I'll go to the court of justice and lodge a written complaint, before (anyone else has done so), that Charudatta strangled Vasantasena and murdered her So, then, I'll just repair to the law-court (*Walking about and observing*) Here's that law court! I'll enter it (*Entering and looking on*) How! They have kept the seats ready arranged! So, until the judges arrive, I'll sit down here for a while in this grassy quadrangle, and wait (*Stays accordingly*)

SO —(*Walking in another direction, looking before him*) Here the judges are coming! So then I will approach them (*Draws near*)

(*Then enter a* Judge, *accompanied by a* Sreshthin, *a* Kayastha, *and* others)

THE JUDGE—Sirs, Sreshthin and Kayastha!

SR & K —We await your honour's commands!

THE JUDGE—See, it is verily difficult for judges to find what lies in the minds of others, as a judicial trial is dependent on (a number of) other matters

---

दीना युक्तिनिष्ठतया व्यवहारपराधीनतया । परचित्तग्रहणं परेषामर्थिप्रत्यर्थ्यादीनां चित्तस्य भावस्य ग्रहणं यथार्थज्ञानम् । ] छन्नमिति । [ पुरुषा व्यवहर्तारः न्यायेन प्रत्यक्षादिप्रमाणादिना दूरीकृतं विवर्जितं छन्नं सत्यं कार्यममत्येनाच्छादितमसत्यं च सत्यवत्कृत्वा कार्यमुपक्षिपन्ति निर्णयार्थमुपन्यस्यन्ति । रागाभिभूता स्वकार्यसंपादनप्रसक्त्याऽभिभूता अधिकरणे स्वयं स्वान् दोषान् न कथयन्ति । तैः पक्षापरपक्षाभ्यामर्थिप्रत्यर्थिवादाभ्यां वर्धितं बलं येषां तैः । उपचितैरित्यर्थः । दोषैः नृपः स्पृश्यते । यतो न्यायस्य स एव परमाधिष्ठानम् । तदुक्तं मनुना—' अदण्ड्यान्दण्डयन्राजा

छन्नं कार्यमुपक्षिपन्ति पुरुषा न्यायेन दूरीकृतं
स्वान्दोषान्कथयन्ति नाधिकरणे रागाभिभूताः स्वयम् ।
तैः पक्षापरपक्षवर्धितबलैर्दोषैर्नृप स्पृश्यते
संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥ ३ ॥

अपि च ।

छन्नं दोषमुदाहरन्ति कुपिता न्यायेन दूरीकृताः
स्वान्दोषान्कथयन्ति नाधिकरणे सन्तोऽपि नष्टा ध्रुवम् ।
ये पक्षापरपक्षदोषसहिताः पापानि संकुर्वते
संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥ ४ ॥

यतोऽधिकरणिकः खलु—

शास्त्रज्ञः कपटानुसारकुशलो वक्ता न च क्रोधन-
स्तुल्यो[1] मित्रपरस्वकेषु चरितं[2] दृष्ट्वैव दत्तोत्तरः ।
क्लीबान्पालयिता शठान्व्यथयिता धर्म्यो न लोभान्वितो
द्वार्भावे[3] परतत्त्वबद्धहृदयो[4] राज्ञश्च कोपापहः ॥ ५ ॥

**श्रेष्ठिकायस्थौ**—आर्यस्यापि नाम गुणे दोष इत्युच्यते । यद्येवं तदा चन्द्रालोकेऽप्यन्धकार इत्युच्यते । (अज्जस्स वि णाम गुणे दोसो त्ति वुच्यदि । जइ एव्वं ता चन्दालोए वि अन्धआरो त्ति वुच्चदि ।)

**अधिकरणिकः**—भद्र शोधनक अधिकरणमण्डपस्य मार्गमादेशय ।

**शोधनकः**—एत्वेत्वधिकरणभोजकः एतु । ( एदु एदु अधिअरणभोइओ एदु ।)

( इति परिक्रामन्ति[5] । )

**शोधनकः**—अयमधिकरणमण्डपः । तत्प्रविशन्त्वधिकरणभोजकाः । ( एदं अधिअरणमण्डवम् । ता पविसन्तु अधिअरणभोइआ ।)

( सर्वे च प्रविशन्ति । )

**अधिकरणिकः**—भद्र शोधनक बहिर्निष्क्रम्य ज्ञायतां कः कः कार्यार्थीति ।

**शोधनकः**—यदार्य आज्ञापयति । (इति निष्क्रम्य ।) आर्याः अधिकरणिका भणन्ति—कः क इह कार्यार्थीति । (जं अज्जो आणवेदि । अज्जा अधिअरणिआ भणन्ति—को को इह कज्जत्थी त्ति ।)

---

दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चाधिगच्छति ॥' इति । न्यायदर्शिनस्तु को लाभ इत्याह—संक्षेपात् सारतः । किं बहुनेत्यर्थः । द्रष्टुः प्राड्विवाकस्य अपवादः निन्दा एव सुलभः । गुणः प्रशंसालाभस्तु दूरत एव । न सुखलभ्य इत्यर्थः ।

---

१ ल्योऽमित्र. २ चरिते दृष्टे च ३ द्वाभ्यां वै ४ तन्त्र ५ क्रामति

People ( i e contending parties ) bring up ( for trial ) transactions which are ( i e whose real character is ) hidden and far removed from justice Themselves swayed by self interest, they never tell in the court their own faults (So) the king incurs the blame ( for the failure of justice ), whose intensity is augmented by ( the contentions of ) one party as well as the other In short, nothing but odium is commonly to be got by a judge, appreciation but seldom ( falling to his lot ). (3)

Moreover—

People, completely ignoring law, wrathfully complain of the offences ( of others ), but they never confess in the court their own faults Even learned persons ( counsels ) who commit sin, sharing in the crimes of the contending parties, are verily lost In short, blame is very easy for a judge to get, applause is far removed from him ( seldom falls to his lot ) (4)

Hence, a judge—

Should be learned in law, expert in tracing ( the course of ) fraud, eloquent, never losing his temper, equally impartial towards friends, strangers and relatives, giving his decision only after ( carefully ) investigating the facts, a protector of the weak, a terror to the rogues righteous, free from greed even when the means exist for him ( to take bribes ), sincerely bent in his mind on ( discovering ) the real truth, and able to avert the anger of the king (5)

SR & K —Can they speak of merits as faults, even in your honour's case ? If so, then they would say that there is darkness even when there is moonlight

THE J —Sodhanaka, my good man, point out the way to the court of justice

SO —Please come, come, step ( this way ), your worship !

( *They walk about* ).

SO —Here is the court of justice So may the officers enter

( *Then* all *enter* )

THE J —Sodhanaka, my good man, just go out and ascertain who there are that desire to present cases ( to-day ).

SO —As your worship orders. ( *Going out* ) Gentlemen, the judges ask, who are here that desire to present cases ?

**शकार** —( सहर्षम् । ) उपस्थिता अधिकरणिका । ( साटोप परिक्रम्य । ) अह वरपुरुषो मनुष्यो वासुदेवो राष्ट्रियश्यालो राजश्याल कार्यार्थी । (उवत्थिए अधिअलणिए । हग्गे वलपुलिशे मणुश्शे वाशुदेवे लश्टिअशाले लाअशाले कज्जत्थी ।)

**शोधनक** —(ससभ्रमम् ।) हन्त प्रथममेव राष्ट्रियश्याल कार्यार्थी । भवतु । आर्य मुहूर्तं तिष्ठ । तावदधिकरणिकाना निवेदयामि । ( उपगम्य । ) आर्या एष खलु राष्ट्रियश्याल कार्यार्थी व्यवहारमुपस्थित । (हीमादिके पढम ज्जेव रट्टिअ-सालो कज्जत्थी । भोदु । अज्ज मुहुत्त चिट्ठ । दाव अधिअरणिआण णिवेदेमि । अज्जा एसो क्खु रट्टिअसालो कज्जत्थी ववहार उवत्थिदो ।)

**अधिकरणिक** —कथम् । प्रथममेव राष्ट्रियश्याल कार्यार्थी । यथा सूर्योदय उपरागो महापुरुषनिपातमेव कथयति । शोधनक व्याकुलेनाद्य व्यवहारेण भवि-तव्यम् । भद्र निष्क्रम्योच्यताम्—गच्छाद्य न दृश्यते तव व्यवहार इति ।

**शोधनक** —यदार्य आज्ञापयति । ( इति निष्क्रम्य शकारमुपगम्य । ) आर्य अधिकरणिका भणन्ति—अद्य गच्छ । न दृश्यते तव व्यवहार । (ज अज्जो आणवेदि । अज्ज अधिअरणिआ भणन्ति—अज्ज गच्छ । ण दीशदि तव ववहारो ।)

**शकार** —(सक्रोधम् ।) आ किं न दृश्यते मम व्यवहार । यदि न दृश्यते तदाऽऽवुत्त राजान पालक भगिनीपतिं विज्ञाप्य भगिनी मातर च विज्ञाप्यैतमधि-करणिक दूरीकृत्यात्रान्यमधिकरणिक स्थापयिष्यामि । ( इति गन्तुमिच्छति । ) (आ किं ण दीशदि मम ववहाले । जइ ग दीशदि तदो आवुत्त लाआण पालअ बहिणीवदिं विण्णविअ बहिणिं अत्तिक च विण्णविअ एद अधिअलणिअ दूले फेलिअ एत्थ अण्ण अधिअलणिअ ठावइश्शम् ।)

**शोधनक** —आर्य राष्ट्रियश्याल मुहूर्तं तिष्ठ । तावदधिकरणिकाना निवेद-यामि । ( अधिकरणिकमुपगम्य[1] । ) एष राष्ट्रियश्याल कुपितो भणति—( इति तदुक्त भणति) । ( अज्ज रट्टिअशालअ मुहुत्तअ चिट्ठ । दाव अधिअरणिआण णिवेदेमि । एसो रट्टिअशालो कुविदो भणादि—।)

**अधिकरणिक** —सर्वमस्य मूर्खस्य सभाव्यते । भद्र उच्यताम्—आगच्छ । दृश्यते तव व्यवहार ।

**शोधनक** —(शकारमुपगम्य ।) आर्य अधिकरणिका भणन्ति—आगच्छ । दृश्यते तव व्यवहार । तत्प्रविशत्वार्य । (अज्ज अधिअरणिआ भणन्ति—आअच्छ । दीसदि तव ववहारो । ता पविसदु अज्जो ।)

---

समुच्चयालकार । शार्दूलविक्रीडित वृत्तम् ]॥ ३ ॥ [ उक्तमेवार्थं किंचिद्विशिष्य पुनराह—**छन्नमिति** । न्यायेन दूरीकृता वर्जिता. कुपिता पुरुषा छन्न गूढ दोष

---

१ ०कानुप०

SAK — ( *Joyfully* )  The judges have arrived ! ( *Walking forth arrogantly* ). Here am I, the best of men, a gentleman, ( another ) Krishna ( as it were ), the king's brother-in law, the brother in-law of the king, who want to present a case !

SO — ( *In flurry* )  Ah ! At the very commencement here's the royal brother in law desiring to present a case ! All right Sir, please wait awhile, so that I will just announce ( your presence ) to the judges  ( *Going to them* )  Gentlemen, here is this king's brother-in-law come to the court, who wishes to present a case

THE J — How ! At the very commencement there is the king's brother in-law wanting to present a case ! It is just like an eclipse at sunrise, foretelling the death of some great man ! Sodhanaka, the hearing of cases to-day will prove troublesome ! Go out, my good man, and say to him that he might go away, as his suit can't be heard to-day

SO — As Your Honour orders  ( *Going out and approaching* Sakara )  Sir, the judges say that you might go away as your suit won't be heard to day.

SAK — ( *Wrathfully* )  What, ho ! *My* suit won't be heard ? If it be not heard, then I will inform my brother in law, the king Palaka, who is my sister's husband, and I will tell my sister and my mother, and I'll have this judge removed and another appointed in his place  ( *He is about to leave* )

SO — Sir, royal brother-in law, stay awhile, so that I will just inform the judges ( of what you have said )  ( *Approaching the* Judge )  Our royal brother-in-law here says in anger—( *Repeats what was said by him* )

THE J — Everything is possible in the case of that fool  My good man, say to him that he might come in, and that we will look into his suit

SO — ( *Approaching* Sakara )  Sir, the judges say that you might come in, and that they will look into your suit  Please, sir, you may therefore go in

---

परकीयस्य अधिकरणे उदाहरन्ति । स्वान् दोषान् अधिकरणे न कथयन्ति । ये सन्त पक्षापरपक्षदोषसहिता पापानि सकुर्वंते ते ध्रुव नष्टा । शेष व्याख्यातम् ] ॥ ४ ॥ [ अथाधिकरणिकस्वरूपमाह । अधिकरणिक खलु एव स्यात्—शास्त्रज्ञ इत्यादि ।

**शकार**—प्रथम भणन्ति न दृश्यते साप्रत दृश्यत इति । तन्नाम भीतभीता अधिकरणभोजका । यद्यदहं[1] भणिष्यामि तत्तत्प्रत्याययिष्यामि । भवदु । प्रविशामि । (प्रविश्योपसृत्य ।) सुमुखमस्माक युष्माकमपि सुख ददामि न ददामि च । (पढम[2] भणन्ति ण दीशदि सपद दीशदि त्ति । ता णाम भीदभीदा अधिअलणभोइआ । जेत्तिअ हग्गे भणिश्श तेत्तिअ पत्तिआवइश्शम् । भोदु । पविशामि । शुशुह अम्हाण तुम्हाण पि शुह देमि ण देमि अ ।)

**अधिकरणिक**—(स्वगतम् ।) अहो स्थिरसस्कारता व्यवहारार्थिन । (प्रकाशम । ) उपविश्यताम् ।

**शकार**—आ आत्मीयैषा भूमि । तद्यत्र मह्य रोचते तत्रोपविशामि । (श्रेष्ठिन प्रति । ) एष उपविशामि । ( शोधनक प्रति । ) नन्वत्रोपविशामि । (इत्यधिकरणिकमस्तके हस्त दत्त्वा ।) एष उपविशामि । (इति भूमावुपविशति ।) (आ अत्तणकेलका शे भूमी । ता जहिं मे रोअदि तहिं उवविशामि । एश उव-विशामि । ण एत्थ उवविशामि । एश उवविशामि ।)

**अधिकरणिक**—भवान्कार्यार्थी ।

**शकार**—अथ किम् । (अध इ ।)

**अधिकरणिक**—तत्कार्य कथय ।

**शकार**—कर्णे कार्यं कथयिष्यामि । एव बृहति मल्लकप्रमाणस्य कुलेऽह जात । (कण्णे कज्ज कधइश्शम् । एव्व वड्ढके मल्लक्कप्पमाणाह कुले हग्गे जादे ।)

> **राजश्वशुरो मम पिता राजा तातस्य भवति जामाता ।**
> **राजश्यालोऽह ममापि भगिनीपती राजा ।। ६ ।।**
> (लाअशशुले मम पिदा लाआ तादश्श होइ जामादा ।
> लाअशिआले हग्गे ममावि बहिणिवदी लाआ ।।)

**अधिकरणिक**—सर्वं ज्ञायते ।

> **किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् ।**
> **भवन्ति नितरा स्फीता सुक्षेत्रे कण्टकिद्रुमा[3] ।। ७ ।।**

तदुच्यता कार्यम् ।

---

शास्त्रज्ञ धर्मशास्त्रवित् । कपटस्य वादिप्रतिवादिकृतस्यानुसारे अनुगमने । यथार्थ-ज्ञाने इत्यर्थ । कुशल । वक्ता अवगतार्थप्रतिपादनसमर्थ । न च क्रोधन क्रोधशील । मित्रपरस्वकेषु मित्रशत्रुस्वजनेषु तुल्य समदर्शन । पक्षपातरहित इति यावत् । चरित व्यवहारिणामिति शेष । दृष्ट्वा सम्यग्विचार्य एव दत्तोत्तर उत्तरदायी ।

---

१ यावदह भणिष्यामि तावत्प्रत्येष्यन्ते २ ही पढम भणादि ३ कण्टक.

SAK —First they say that they wouldn't look into it, and now that they would So, obviously, the judges must have got mightily frightened ! Whatever I'll say, the same I'll compel them to accept as true Very well, I'll go in ( *Entering and approaching* ). I am doing very well ! As to you, I can give or not give you happiness ( as I please ) !

THE J —( *To himself* ) Oh ! Even when presenting a complaint, his usual habits do not leave him ( *lit* are firm with him ) ! (*Aloud*) Pray seat yourself

SAK.—Ah ! This place belongs to me, so I'll sit where I like ! ( *To the* Sreshthin ) I'll sit here ! (*To* Sodhanaka) No, I'll sit here ! ( *Then placing his hand on the head of the* Judge ) I'll sit here ! ( *Thereupon he sits on the ground* )

THE J.—So you wish to lodge a complaint ?

SAK —Yes

THE J.—Then tell us what it is.

SAK —I will whisper my business in your ear I am born in a very big family, of the size of a *mallaka* ( cup )

My father is the king's father-in law, the king is the son-in-law of my father I myself am the king's brother-in law, while the king is the husband of my sister. (6)

THE J —All that is known ( to us )

Why describe one's family, since one's own character itself is the determining factor herein ? Even thorny trees grow exceedingly large in a good soil (7)

So describe your business

---

क्लीबान्दुर्बलान् पालयिता । शठान् व्यथयिता तेषा निग्रहात्पीडाकारी । धर्मादनपेतो धर्म्य । न लोभान्वित । द्राभवि द्रारुपाय. तस्य भाव सत्त्व तस्मिन्सति । परतत्त्वे अर्थिप्रत्यर्थिनो याथार्थ्यज्ञाने बद्धहृदय आहितमति । राज्ञश्च वस्तुनो यथार्थस्वरूप-कथनेन सदुपदेशेन च कोपापह कोपमपहन्तीति तथोक्त । शार्दूल० छन्द ] ॥ ५ ॥ [यदुक्त 'सक्षेपादपवाद एव सुलभ ' तदुद्दिश्याह—आर्यस्यापि नाम गुणे दोष इति ।] [उपराग राहुणा सूर्यस्य चन्द्रस्य वा ग्रास । व्याकुलेन विक्षोभितेन ।] आ. कौवे । आवुत्त भगिनीपतिम् । आवुत्तमित्यादावुक्त्वा पुनर्भगिनीपतिमिति पुनरुक्तम् । युष्माक सुख ददामि न ददामि । शकारोक्तेर्व्याकुलता । मल्लक पात्रविशेष । राजश्वशुर इत्यादि । गाथा ॥ ६ ॥ किं कुलेनेत्यादि । [अष्टमाङ्के २९ तम पद्य द्रष्टव्यम् ] ॥ ७ ॥ एतेन यदुक्त भवति तदाह—अपराद्धस्यापि न मे किमपि

**शकार**—एव भणामि । अपराद्धस्यापि न च मे किमपि करिष्यति । ततस्तेन भगिनीपतिना परितुष्टेन मे क्रीडितु रक्षितु सर्वोद्यानानां प्रवर पुष्पकरण्डकजीर्णोद्यान दत्तम् । तत्र च प्रेक्षितुमनुदिवस शुष्क कारयितु शोधयितु पुष्ट कारयितु लून कारयितु गच्छामि । दैवयोगेन पश्यामि न पश्यामि वा स्त्रीशरीर निपतितम् । (एव्व भणामि । अवलद्धाह वि ण अ मे किं पि कलइश्शदि । तदो तेण बहिणीवदिणा परितुश्टेण मे कीलिदु लक्खिदु शव्वुज्जाणाण पवले पुप्फकलण्डकजिण्णुज्जाणे दिण्णे । तहिं च पेक्खिदु अणुदिअह शोशावेदु शोधावेदु पोश्टावेदु लुणावेदु गच्छामि । देव्वजोएण पेक्खामि ण पेक्खामि वा इत्थिआशलील णिवडिदम् ।)

**अधिकरणिक**—अथ ज्ञायते का स्त्री विपन्नेति ।

**शकार**—अहो अधिकरणिकभोजका किमिति न जानामि ता तादृशी नगरमण्डन काञ्चनशतभूषणाम् । केनापि कुपुत्रेणार्थकल्यवर्तस्य कारणाच्छून्य पुष्पकरण्डकजीर्णोद्यान प्रविश्य बाहुपाशबलात्कारेण वसन्तसेना मारिता । न मया । ( इत्यर्धोक्ते मुखमावृणोति । ) ( हहो अधिअलणभोइआ किंत्ति ण जाणामि त तादिशिं णअलमण्डण काञ्चनशदभूशणिअ । केण वि कुपुत्तेण अत्थकल्लवत्तश्श कालणादो शुण्ण पुप्फकलण्डकजिण्णुज्जाण पविशिअ बाहुपाशबलक्कालेण वशन्तशेणिआ मालिदा । ण मए ।)

**अधिकरणिक**—अहो नगररक्षिणा प्रमाद । भो श्रेष्ठिकायस्थौ न मयेति व्यवहारपद प्रथममभिलिख्यताम् ।

**कायस्थ**—यदार्य आज्ञापयति । ( तथा कृत्वा । ) आर्य लिखितम् । ( ज अज्जो आणवेदि । अज्ज लिहिदम् ।)

**शकार**—( स्वगतम् । ) हीमादिके । उत्त्वरायमाणेनेव पायसपिण्डारकेणाद्य मयाऽऽत्मैव निर्नाशित । भवतु । एव तावत् । ( प्रकाशम् । ) अहो अधिकरणभोजका ननु भणामि मयैव दृष्टा । किं कोलाहल कुरुत । (इति पादेन लिखित[1] प्रोञ्छति ।) (हीमादिके । उत्तलाअन्तेण विअ पाअशपिण्डालकेण अज्ज मए अत्ता एव्व णिण्णाशिदो । भोदु । एव्व दाव । अहो अधिअलणभोइआ ण भणामि मए ज्जेव्व दिट्ठा । किं कोलाहल कलेध ।)

**अधिकरणिक**—कथ त्वया ज्ञात यथा खल्वर्थनिमित्त बाहुपाशेन व्यापादिता ।

**शकार**—हहो नून शूनशूनया मोघस्थानया ग्रीवालिकया नि सुवर्णकैराभरणस्थानैस्तर्कयामि । ( हहो णूण शूणशूणाए[2] मोघट्ठाणाए[3] गीवालिआए णिशुवण्णकेहिं आहलणट्ठाणेहि तक्केम्मि ।)

**श्रेष्ठिकायस्थौ**—युज्यत इव । (जुज्जदि विअ ।)

---

१ लिखन २ परिशूणाए. ( परिशून्यया ) ३ मोटणाए(मोटनया)

SAK —I will just tell you (But understand that) he (i e the king) won't do anything to me even if I am guilty! Well, that brother-in law of mine, being pleased with me bestowed upon me the old garden *Pushpakarandaka,* the best of all gardens, for sport as well as for custody And I daily go there, to look after it, to see that it is (properly) drained, and swept, and growing luxuriantly, and trimmed (as necessary) As fate would have it, I saw therein—or no, I didn't see—the body of a woman lying (dead) on the ground

THE J — And could you discover who that dead woman was ?

SAK —O you judges, how could it be that I shouldn't recognize that lady, so well-known, the adornment of our city and wearing hundreds of ornaments ? Vasantasena, who was enticed into the old *Pushpakarandaka* garden, when it was deserted, was killed by some villainous fellow for the sake of filthy lucre after having forcibly strangled her with the noose of his arms, but not by me—(*Leaving it half said, he covers his mouth*)

THE J —What negligence on the part of the city's police! O Sreshthin and Kayastha, first write down the words '*Not by me*' as part of the plaint

K --As your worship orders (*Does so*) Sir, I have written it

SAK —(*To himself*) Hang it all! I have to-day simply brought ruin on my own self, like the beggar gulping down the hot *payasa* (milk preparation) in a hurry Never mind, I will (proceed) in this way (*Aloud*) O judges, what I was saying was that it was by me that she was seen Why do you make such a fuss about it ? (*With his foot he rubs out what was written*)

THE J —How do you know that she was killed for her money, and with the noose of arms ?

SAK.—Well, surely, I could guess it from her neck, which was very much swollen, and bare in the place (where an ornament is worn), and also from her limbs (*lit* places on her body) where ornaments are worn, but which were devoid of golden ornaments

SR & K --It seems quite plausible

---

करिष्यति । जीर्णेति विशेषण विजनत्वख्यापनार्थम् । तत्र च प्रेक्षितुमित्यत्र तत्रेति करणाधिकरणत्वेन विवक्षितत्वात्तदित्येवार्थ [ न गच्छामीति पूर्वोक्तविरुद्ध शकार-

**शकार**—( स्वगतम् । ) दिष्टचा प्रत्युज्जीवितोऽस्मि । अविद मादिके । (दिश्टिआ पच्चुजीविदम्हि । अविद मादिके ।)

**श्रेष्ठिकायस्थौ**— भो कमेष व्यवहारोऽवलम्बते । (भो क एसो ववहारो अवलम्बदि ।)

**अधिकरणिक**—इह हि द्विविधो व्यवहार ।

**श्रेष्ठिकायस्थौ**—कीदृश । (केरिसो ।)

**अधिकरणिक**—वाक्यानुसारेण अर्थानुसारेण च । यस्तावद्वाक्यानुसारेण स खल्वर्थिप्रत्यर्थिभ्य[१] । यश्चार्थानुसारेण स चाधिकरणिकबुद्धिनिष्पाद्य ।

**श्रेष्ठिकायस्थौ**—तद्वसन्तसेनामातरमवलम्बते व्यवहार । (ता वसन्तसेणा-मादर अवलम्बदि ववहारो ।)

**अधिकरणिक**—एवमिदम् । भद्र शोधनक वसन्तसेनामातरमनुद्वेजयन्नाह्वय ।

**शोधनक**—तथा[२] । ( इति निष्क्रम्य गणिकामात्रा[३] सह प्रविश्य । ) एत्वेत्वार्या । (तधा । एदु एदु अज्जा ।)

**वृद्धा**—गता मे दारिका मित्रगृहमात्मना यौवनमनुभवितुम् । एष पुन-र्दीर्घायुर्भणति—आगच्छ । अधिकरणिक आह्वयति । तन्मोहपरवशमिवात्मानमव-गच्छामि । हृदय मे प्रकम्पते । आर्य आदिश मह्यमधिकरणमण्डपस्य मार्गम् । (गदा मे दारिआ मित्तघरअ अत्तणो जोव्वण[४] अणुभविदुम् । एसो उण दीहाऊ भणादि–आअच्छ । अधिअरणिओ सद्दावेदि । ता मोहपरवस विअ अत्ताअण अव-गच्छामि । हिअअ मे थरथरेदि । अज्ज आदेसेहि मे अधिअरणमण्डवस्स मग्गम् । )

**शोधनक**—एत्वेत्वार्या । (एदु एदु अज्जा ।)

( उभौ परिक्रामत । )

**शोधनक**—एषोऽधिकरणमण्डप । अत्र प्रविशत्वार्या । (एद अधिअरण-मण्डवम् । एत्थ पविसदु अज्जा ।)

(इत्युभौ प्रविशत ।)

**वृद्धा**—(उपसृत्य ।) सुख युष्माक भवतु भावमिश्राणाम् । ( सुह तुम्हाण भोदु भावमिस्साणम् । )

**अधिकरणिक**—भद्रे स्वागतम् । आस्यताम् ।

**वृद्धा**—तथा । (इत्युपविष्टा ।) (तधा ।)

**शकार**—(साक्षेपम् ।) आगताऽसि वृद्धकुट्टिनि आगताऽसि । ( आगदाशि बुड्ढकुट्टणि[५] आगदाशि । )

**अधिकरणिक**—अये त्व किल वसन्तसेनाया[६] माता ।

---

१ अर्थं प्रत्यर्थेभ्य २ तथेति नि० ३ गणिकाया ४ जोव्वणसुह ५ कुट्टिणि, कुट्टणिआ ६ सेनामाता

SAK —( *To himself* ) Most fortunate ! I feel I have obtained a new lease of life ! Heigh ho !

SR & K —Sir, on whom does ( the investigation of ) this suit depend ?

THE J —Well, in law the complaints are of two kinds

SR & K —What are they ?

THE J —One depending on arguments ( *or*, oral statements ) and the other on actual facts The one which depends on argument is ( to be settled) by the plaintiff and the defendant (arguing against each other ) And what depends on facts is to be decided by the Judge with the help of his own wisdom

SR & K —So, then, this case depends on the mother of Vasantasena ( giving evidence )

THE J —That's so Sodhanaka, my good man, please call Vasantasena's mother (here), without frightening her

SO —Yes ( *Goes out and comes in with the courtesan's* mother ) Come, come ( this way ), madam !

THE OLD LADY—My daughter has gone to her friend's house to enjoy her youth But this long-lived gentleman says that I am to go ( with him ) as the Judge calls me Therefore I feel as though a faintness is overpowering me, and my heart trembles ( with fear ) Sir, kindly show me the way to the law-court

SO —Come, come (this way), madam

( *Both walk about* )

SO —This is the law-court May madam enter it

( *Thereupon both go in* )

THE OLD LADY—( *Approaching* ) May you be happy, worthy sirs !

THE J —Welcome, good lady ! Please take a seat

THE O L —Yes ( *Sits down* )

SAK —( *Abusively* ) So you have come, you old bawd, have you ?

THE J —Madam, are you the mother of Vasantasena ?

---

वचनत्वात् । बाहुपाशबलात्कारेण । व्रणशून्यत्वाद्बलवद्बाहुपीडनेन । ] न मयेति तस्य बोध्यत्वेन व्यवहारपदम् । [ हीमादिके इति खेदे भये वा । उत्त्वरायमाणेण त्वरया

**वृद्धा**—अथ किम् । (अध इ ।)

**अधिकरणिक**—अथेदानी वसन्तसेना क्व गता ।

**वृद्धा**—मित्रगृहम् । (मित्तघरअम् ।)

**अधिकरणिक**—किंनामधेय तस्या मित्रम् ।

**वृद्धा**—( स्वगतम् । ) हा धिक् हा धिक् । अतिलज्जनीय खल्वेतत् । (प्रकाशम् ।) जनस्य पृच्छनीयोऽयमर्थो न पुनरधिकरणिकस्य । (हद्धी हद्धी । अदिलज्जणीय क्खु एदम् । जणस्स पुच्छणीओ अअ अत्थो ण उण अधिअरणिअस्स ।)

**अधिकरणिक**—अल लज्जया । व्यवहारस्त्वा पृच्छति ।

**श्रेष्ठिकायस्थौ**—व्यवहार पृच्छति । नास्ति दोष । कथय । ( ववहारो पुच्छदि । णत्थि[1] दोसो । कधेहि ।)

**वृद्धा**—कथ व्यवहार । यद्येव तदा शृण्वन्त्वार्यमिश्रा । स खलु सार्थवाहविनयदत्तस्य नप्ता सागरदत्तस्य तनय सुगृहीतनामधेय आर्यचारुदत्तो नाम श्रेष्ठिचत्वरे प्रतिवसति । तत्र मे दारिका यौवनसुखमनुभवति । (कध ववहारो । जइ एव्व ता सुणन्तु अज्जमिस्सा । सो क्खु सत्थवाहविणअदत्तस्स णत्तिओ साअरदत्तस्स तणओ सुगहिदणामहेओ[2] अज्जचारुदत्तो णाम सेट्ठिचत्तरे पडिवसदि । तहिं मे दारिआ जोव्वणसुह अणुभवदि ।)

**शकार**—श्रुतमार्ये । लिख्यन्तामेतान्यक्षराणि । चारुदत्तेन सह मम विवादः । (शुद अज्जेहिं । लिहीअन्तु एदे अक्खला । चालुदत्तेण शह मम विवादे ।)

**श्रेष्ठिकायस्थौ**—चारुदत्तो मित्रमिति नास्ति दोष । (चारुदत्तो मित्तो त्ति णत्थि दोसो ।)

**अधिकरणिक**—व्यवहारोऽय चारुदत्तमवलम्बते ।

**श्रेष्ठिकायस्थौ**—एवमिव । (एव विअ ।)

**अधिकरणिक**—धनदत्त वसन्तसेनाऽऽर्यचारुदत्तस्य गृह गतेति लिख्यता व्यवहारस्य प्रथम पाद । कथमार्यचारुदत्तोऽप्यस्माभिराह्वाययितव्य । अथ वा व्यवहारस्तमाह्वयति । भद्र शोधनक गच्छ । आर्यचारुदत्त स्वैरमसभ्रान्तमनुद्विग्न सादरमाहूय प्रस्तावेन—अधिकरणिकस्त्वा द्रष्टुमिच्छतीति ।

**शोधनक**—यदार्य आज्ञापयति । ( इति निष्क्रान्त । चारुदत्तेन सह प्रविश्य च ।) एत्वेत्वार्य । (ज अज्जो आणवेदि । एदु एदु अज्जो ।)

**चारुदत्त**—(विचिन्त्य ।)

**परिज्ञातस्य मे राज्ञा शीलेन च कुलेन च ।**
**यत्सत्यमिदमाह्वानमवस्थामभिशङ्कते ॥ ८ ॥**

(सवितर्क स्वगतम् ।)

---

१ ण एत्थ २ सुगिहिद

THE O L —Yes

THF J —And where has Vasantasena gone now ?

THE O L —To the house of her friend

THE J —What is her friend's name ?

THE O L —( *To herself* ) Oh, fie ! Oh, fie ! This is truly very shameful ! ( *Aloud* ) This thing may be asked by a (common) person, but not by a judge !

THE J —Do not feel any shame, it is a legal necessity that is asking you

SR & K —It is a legal necessity that is putting the question. There is no harm ( in telling ) (So) please answer

THE O L —What, a legal necessity ! If so, then may you gentlemen hear ! He is that well-known grandson of the merchant Vinayadatta, and the son of Sagaradatta, who is called the worthy Charudatta, and whose name it is auspicious to invoke,— he who dwells in the merchants' quarter With him my daughter is enjoying the pleasures of youth !

SAK —You have heard, gentlemen ! Write down these words ( of hers ) My complaint is against Charudatta !

SR & K —There is no harm in ( the mere fact ) that Charudatta should be her friend

THE J —This suit ( now ) depends on Charudatta ( giving evidence )

SR & K —So it does.

THE J —Dhanadatta, write down, as the first portion of this case, that Vasantasena went to the house of the worthy Charudatta How now ! We have to summon even the worthy Charudatta ! Or rather, it is the law that calls him ( and not we) Sodhanaka, my good man, go and respectfully summon the worthy Charudatta (here), gently, without hurry, and without alarming him, telling him—' the judge wishes to see you '

SO —As Your Worship orders ( *Exit Then entering with* Charudatta ) Come, sir, come ( this way ) !

CHAR —( *Thoughtfully* )

To tell the truth, this summoning of me, who am very well known to the King as regards my character and lineage, bespeaks a suspicion ( on his part ) owing to my ( present ) condition ( of poverty ) (8)

( *Reflecting To himself* )

ज्ञातो नु[1] किं स खलु बन्धनविप्रयुक्तो
मार्गागत[2] प्रवहणेन मयाऽपनीत ।
चारेक्षणस्य नृपते श्रुतिमागतो वा
येनाहमेवमभियुक्त इव प्रयामि ॥ ९ ॥

अथ वा किं विचारितेन । अधिकरणमण्डपमेव गच्छामि । भद्र शोधनक अधिकरणस्य[3] मार्गमादेशय ।

शोधनक —एत्वेत्वार्य । (एदु एदु अज्जो ।)

( इति परिक्रामत । )

चारुदत्त —(सशङ्कम् ।) तत्किमपरम् ।

रूक्षस्वर वाशति[4] वायसोऽयममात्यभृत्या मुहुराह्वयन्ति ।
सव्य च नेत्रं स्फुरति प्रसह्य ममानिमित्तानि हि खेदयन्ति ॥ १० ॥

शोधनक —एत्वेत्वार्य स्वैरमसभ्रान्तम् । (एदु एदु अज्जो सैर असभन्तम् ।)

चारुदत्त —(परिक्रम्याग्रतोऽवलोक्य च ।)

शुष्कवृक्षस्थितो ध्वाङ्क्ष आदित्याभिमुखस्तथा ।
मयि चोदयते वाम [5]चक्षुर्घोरमसशयम् ॥ ११ ॥

(पुनरन्यतोऽवलोक्य ।) अये कथमय सर्प ।

मयि [6]विनिहितदृष्टिर्भिन्ननीलाञ्जनाभ
स्फुरितविततजिह्व शुक्लदंष्ट्राचतुष्क ।
अभिपतति सरोषो जिह्मिताध्मातकुक्षि-
र्भुजगपतिरय मे मार्गमाक्रम्य सुप्त ॥ १२ ॥

---

ऊर्ध्वं निष्क्रामता पायसपिण्डारकेण पायसान्नेन इव । शूनशूनया अतिशोथवत्या । मोषस्थानया ग्रैवेयाद्यलकारहरणाद्रिक्तस्थानया । ग्रीवैव ग्रीवालिका ।] अविद मादिके इत्याश्वासे । [ वाक्यानुरोधादर्थिप्रत्यर्थिनोस्तत्साक्षिणा च वचनानुरोधात् । अर्थानुसारेण वाक्यविप्रतिपत्तौ विषयस्वरूपबोधनेन निर्णय ।] अनुद्वेजयन दुहितृमृत्युवार्ताकथनेनोद्विग्नामकुर्वन् । अर्थो न पुनरधिकरणिकानामिति वेश्यापतिरूपतया ज्ञानेन शिष्टाना लज्जाकरत्वादिति भाव । धनदत्तेति कायस्थसबोधनम् । स्वैर स्वच्छन्दम् । असभ्रान्त सभ्रमशून्यम् । परिज्ञातस्येति । अवस्थामीदृशी दशाम् ॥ ८ ॥ ज्ञात इति । [स मार्गागत आर्यक प्रवहणेन मयाऽपनीत अपवाहित

---

१ हि किं नु. २ मार्गं गत. ३ ०णमण्डपस्य ४ वासति ५ चक्षुश्चौर ६ विनिहत.

Could it be that the King found out that Aryaka, whom I met in the road as he was escaping from custody, was sent off by me in my carriage, or did he, having spies for his eyes, come to hear of him (as being helped by me), that I am now marching thus as if I were an accused person? (9)

Or rather, why should I think over that? I will forthwith repair to the law-court Sodhanaka my good man, show the way to the court

SO —Come, sir, come (this way)

(*They walk about*)

CHAR —(*With apprehension*). And what is this next?

The crow is shrieking in a harsh voice, the ministerial servants are calling out for me repeatedly, and my left eye is throbbing violently These evil omens make me (very) anxious! (10)

SO —Come, sir, come (this way), gently and without hurry.

CHAR —(*Walking about and looking before him*) This crow (here) seated on a withered tree, and facing the sun, is casting his left eye at me There is no doubt that a dire calamity is to befall me (11)

(*Again looking in another direction*) Ah! How is it that here is a snake!

This huge snake, who was lying asleep across my path with his coiled and swollen belly, is now darting at me in rage, with his eyes fixed on me, (his body) looking (dark) like powdered antimony, with his quivering tongue stretched out, and possessing four white fangs. (12)

---

नृपते ज्ञात किम्। अथ वा चारा ईक्षण यस्य तस्य श्रुतिमागतो वा। येनाहमेवमभियुक्त अपराधित्वेन दूषित इव प्रयामि। वसन्ततिलक वृत्तम्] ॥ ९ ॥ रूक्षाति। 'शासृ वासृ शब्दे'। भ्वादि। आत्मनेपदानित्यत्वाच्च परस्मैपदम्। [वायसो रूक्षस्वर वाशति शब्द करोति। लल्लादीक्षितास्तु 'वासति' इति पठित्वा चञ्चुपुटमुद्रास्य विरौति इति व्याख्यान्ति। वायसस्य कर्कशाराव. महाभयद। तदुक्त वराहमिहिरेण—'दारुणनादस्तरुकोटरोगपो वायसो महाभयद' इति। अमात्यानामत्राधिकरणिकाना भृत्या मुहुराह्वयन्ति। सव्य वाम च नेत्र प्रसह्य बलवत्स्फुरति। पुसा वामनेत्रस्फुरणमनिमित्तमनिष्टसूचकम्। एतानि अनिमित्तानि मम मा खेद-

अपि चेदम् ।

स्खलति चरण भूमौ न्यस्त न चार्द्रतमा मही
स्फुरति नयन वामो बाहुर्मुहुश्च विकम्पते ।
शकुनिरपरश्चाय तावद्विरौति हि नैकश
कथयति महाघोर[1] मृत्यु न चात्र विचारणा ।। १३ ।।

सर्वथा देवता स्वस्ति करिष्यन्ति ।

शोधनक —एत्वेत्वार्य । इममधिकरणमण्डप प्रविशत्वार्य (एदु एदु अज्जो। इम अधिअरणमण्डव पविसदु अज्जो ।)

चारुदत्त —( प्रविश्य । समन्तादवलोक्य । ) अहो अधिकरणमण्डपस्य परा श्री । इह हि—

चिन्तासक्तनिमग्नमन्त्रिसलिल दूतोर्मिशङ्खाकुल
पर्यन्तस्थितचार[2]नक्रमकर नागाश्वहिंस्रा[3]श्रयम् ।
नानावाश[4]ककङ्कपक्षिनिचित[5] कायस्थसर्पास्पद
नीतिक्षुण्णतट च राजकरण[6] हिंस्रै समुद्रायते ।। १४ ।।

भवतु । (प्रविशञ्छिरोघातमभिनीय सवितर्कम् । अहह इदमपरम् ।

सव्य मे स्पन्दते चक्षुर्विरौति वायसस्तथा ।
पन्था सर्पेण रुद्धोऽय स्वस्ति चास्मासु दैवत[7] ।। १५ ।।

तावत्प्रविशामि । (इति प्रविशति ।)

अधिकरणिक —अयमसौ चारुदत्त । य एष —

घोणोन्नत मुखमपाङ्गविशालनेत्र
नैतद्धि[8] भाजनमकारणदूषणानाम् ।
नागेषु गोषु तुरगेषु तथा नरेषु
न ह्याकृति सुसदृश विजहाति वृत्तम् ।। १६ ।।

---

यन्ति । ममेति द्वितीयार्थे कर्मण शेषत्वविवक्षया षष्ठी । उपजाति ]।। १० ।। **शुष्केति** । [ ध्वाङ्क्ष काक शुष्कवृक्षस्थितस्तथा आदित्याभिमुख सन् मयि घोर वाम चक्षु असशय यथा तथा चोदयते प्रेरयति । महाभयसूचकमेतत् । तदुक्त बृहत्सहितायाम्— 'छिन्नाग्रेऽङ्गच्छेद कलह शुष्कद्रुमस्थिते ध्वाङ्क्षे । ऐन्द्रादिदिगवलोकी सूर्याभिमुखो रुवन् गृहे गृहिण । राजभयचोरबन्धनकलहा स्यु पशुभय चेति ।।' इति ] ।। ११ ।। [ अपरमपशकुनमाह—**मयीति** । भिन्न सम्यग्मृदित यन्नीलाञ्जन तस्येव आभा यस्य स । स्फुरिता वितता जिह्वा यस्य स । शुक्ल दष्ट्राचतुष्क

---

१ महामृत्यु घोर २ चारु ३ हिंसा ४ वासक ५ रचित, रुचिरम् ६ भवन. ७ दैवता ८ विभाजन.

And moreover, there's this —

My foot planted on the ground slips, and yet the earth is not very wet ( muddy ) My (left) eye throbs, and so does my left arm, again and again And here again is this another bird ( crow *or* vulture ) uttering frequent cries All this indicates most terrible death there's no doubt about it (13)

May the gods grant welfare in all ways !

SO —Come, sir, come ( this way ) May your honour enter this law court

CHAR —( *Entering , looking on all sides* ) Oh the supreme grandeur of the court of justice ! For here—

Owing to its cruel elements, this royal court of justice looks like an ocean , it has water in the shape of the ministers deeply engaged in thought , it is full of waves and conches in the form of the envoys ( *or,* advocotes ) , it has within its environs sharks and alligators in the form of the spies, it is the abode of ferocious animals in the form of elephants and horses, it is thronged with *Kanka* birds in the form of the litigants shouting various complaints, it is the resort of serpents in the form of the Kayasthas ( writers ), and it has its shores cut in by [ the rivers in the form of ] politics ( rules about the conduct of cases ) (14)

Well ( *Trying to enter , gesticulates that his head strikes against the door Reflecting* ) Alack-a day ! Here's another ( additional ill omen ) !

My left eye throbs, and the crow is crying, and just now my way was blocked by that snake May good betide me through fate ! (15)

Let me then get in ( *Enters* )

THE JUDGE—Here's that Charudatta, he who—

[ Possesses ] a face having a prominent nose and eyes with large corners Such a face, surely, could never be the abode of having crimes wantonly attributed to it For in the case of elephants, bullocks, horses and men, the form is never without a corresponding excellence of conduct (16)

---

यस्य स । मे मार्गमाक्रम्य सुप्त अय भुजगपति कृष्णसर्प सरोष जिह्मित वक्रीकृत आध्मात वायुपूरित कुक्षिर्यस्य तथा । मयि विनिहितदृष्टि अभिपतति । एतदपि महाभयसूचकम् । उक्त च बृहत्सहिताया—' फणिनोऽभिमुखागमोऽरिसङ्क

चारुदत्त —भो अधिकृतेभ्य स्वस्ति । हहो नियुक्ता अपि कुशल भवताम् ।

अधिकरणिक —( ससम्भ्रमम् । ) स्वागतमार्यस्य । भद्र शोधनक आर्यस्यासनमुपनय ।

शोधनक —( आसनमुपनीय । ) एतदासनम् । अत्रोपविशत्वार्य । ( एद आसनम् । एत्थ उवविसदु अज्जो । )

(चारुदत्त उपविशति ।)

शकार —( सक्रोधम् । ) आगतोऽसि रे स्त्रीघातक आगतोऽसि । अहो न्याय्यो व्यवहार अहो धर्म्यो व्यवहार यदेतस्मै स्त्रीघातकायासन दीयते । (सगर्वम् ।) भवतु । ननु दीयताम् । ( आगदेशि ले इश्यिआघादआ आगदेशि । अहो णाए ववहाले अहो धम्मे ववहाले ज एदाह इश्यिआघादकाह आशणे दीअदि । भोदु । ण दीअदु ।)

अधिकरणिक —आर्य चारुदत्त अस्ति भवतोऽस्या आर्याया दुहित्रा सह प्रसक्ति प्रणय प्रीतिर्वा ।

चारुदत्त —कस्या ।

अधिकरणिक —अस्या । (इति वसन्तसेनामातर दर्शयति ।)

चारुदत्त —(उत्थाय ।) आर्ये अभिवादये ।

वृद्धा—जात चिर मे जीव । ( स्वगतम् । ) अय स चारुदत्त । सुनिक्षिप्त खलु दारिकया यौवनम् । (जाद चिर मे जीव । अअ सो चारुदत्तो । सुणिक्खित क्खु दारिआए जोव्वणम् ।)

अधिकरणिक —आर्य गणिका तव मित्रम् ।

(चारुदत्तो लज्जा नाटयति ।)

---

कथयति बन्धवधात्यय च यातु.' इति स्वभावोक्ति । मालिनी वृत्तम् ]।। १२ ।। स्खलतीति । [ भूमौ न्यस्त चरण स्खलति । न च मही आर्दतमा अत्यन्तमार्द्रा। एतदपि अनिष्टसूचकम् । तदुक्त वसन्तराजेन—'स्वपादयानस्खलन नृपाणा भङ्ग क्वचिद्यानपलायन च । द्वाराभिघाताध्वगशस्त्रपाता प्रस्थानविघ्न कथयन्ति यातु ॥' इति । नयन वाममित्यर्थात् । स्फुरति । वामो बाहुश्च मुहु विकम्पते अयमपर पूर्वोक्तादन्य गृध्रादि शकुनि तावदनेकश वार वार विरौति विकट शब्दायते । एतत्सर्व महाघोर मृत्यु कथयति । अत्र विचारणा न च । हरिणी वृत्तम् ]।। १३ ।। चिन्तासक्तेति । चिन्तामार्गे [ चिन्ताया कार्यार्थपर्यालोचने आसक्ता ] निमग्नाश्च मन्त्रिण एव सलिलानि यत्र । दूत आह्वायको गतागतनियुक्तो वीरश्च गृहपुरुष । [ दूता एव ऊर्मय शङ्खाश्च । यद्वा ऊर्म्यूढा शङ्खा तैः आकुलम् 'चारा प्रणिधय एव नक्रा मकराश्च यत्र । नागा गजाश्च अश्वाश्च नागाश्वा ते एव हिंस्रा तेषा-

CHAR.—My greetings to the Judges ! Well, assessors, how do you do ?

THE J —( *Hurriedly* ). Welcome to you, noble sir ! Sodhanaka, my good man, bring a seat for the noble one.

SO —( *Bringing a seat* ) Here's a seat. Please, sir, be seated on it

( Charudatta *sits* )

SAK —(*Angrily*) Oh ! You have come, have you, you woman-killer ! Oh, how very fair, how very righteous, is this legal procedure, that a seat should be offered to this woman-killer ! ( *Haughtily* ) Never mind , let him have it.

THE J —Sir Charudatta, have you any close acquaintance with, or affection, or love, for the daughter of this worthy lady ?

CHAR —Of what lady ?

THE J —Of this one, here ( *Points out the mother of* Vasantasena )

CHAR —( *Rising* ) Madam, I bow to you !

THE OLD LADY—May you live long, my son ! ( *To herself* ) Here's that Charudatta ! Verily my daughter has most fittingly bestowed her youth !

THE J —Sir, the courtesan is your friend ?

( Charudatta *betrays shame* )

---

माश्रयमावासभूतम् । नागाना पादतलेन वध्यविनाशार्थं अश्वाना च झटिति सदेशहरणाद्यर्थं तत्र स्थापितत्वात् हिंस्रसाम्यम् । ] नाना बहुप्रकारा [ ये वाश्यन्ते इति वाशका अनेकधा शब्दायमाना अर्थिप्रत्यर्थिजना ते एव ] शब्द कुर्वन्तो ये कङ्कपक्षिणस्तै रचित [ निचित ] व्याप्तम् । पर्यन्तेषु स्थिता अशुभसूचकत्वेन तेषा समवधानमुक्तम् । अब्धिपक्षे तु व्यक्तमेव । 'पक्ष' इति पाठे तेषा पक्षाणा रचितम् । नानाक्रमणिकया निर्मितभेदो यत्रेत्यर्थ । कङ्को मांसाद. पक्षिविशेष । ] कायस्था: एव सर्पा तेषा स्वभावकौटिल्यादसूयापरत्वात् प्राणहरराजशासनलेखनाद्वा सर्पसाम्यम् । तेषामास्पद स्थानम् । नीतिभि नदीभिरिव क्षुण्णतटम् । एवविध राज्ञ. करण न्यायाधिकरण समुद्रायते । समुद्रवद् दुष्प्रवेश्यमित्यर्थ । 'कर्तु क्यङ्—' इत्यनेन क्यङ । रूपकोपमयो सकर । शार्दूलविक्रीडित वृत्तम् ] ॥ १४ ॥ सव्यमिति । [ अस्मासु दैवत भागधेयादेव स्वस्ति अस्तु ] ॥ १५ ॥ घोणेति । घोणा उन्नता यत्र घोणया वा उन्नतमुत्कृष्टम् । अपाङ्गो विशालो यत्र । [ तादृशे नेत्रे यस्य । यद्वा अपाङ्गयो विशाले नेत्रे यस्य तत् । ] एतेन नेत्रविशालत्वमुक्तम् ।

**शकार** —

लज्जया भीरुतया वा चारित्रमलीक निगूहितुम् ।
स्वय मारयित्वाऽर्थकारणादिदानी गूहति न तद्धि भट्टक ॥ १७ ॥
(लज्जाए भीलुदाए वा चालित्त अलिए णिगूहिदुम् ।
शअ मालिअ अत्थकालणा दाणि गुहदि ण त हि भश्टके ॥ )

**श्रेष्ठिकायस्थौ**—आर्य चारुदत्त भण । अल लज्जया । व्यवहार खल्वेष । (अज्ज चारुदत्त भणाहि । अल लज्जाए । ववहारो क्खु एसो ।)

**चारुदत्त** —(सलज्जम् ।) भो अधिकृता मया कथमीदृश वक्तव्य यथा गणिका मम मित्रमिति । अथ वा यौवनमत्रापराध्यति न चारित्र्यम्[1] ।

**अधिकरणिक** —

व्यवहार सविघ्नोऽय त्यज लज्जा हृदि स्थिताम् ।
ब्रूहि सत्यमल धैर्यं छलमत्र न गृह्यते ॥ १८ ॥

अल लज्जया । व्यवहारस्त्वा पृच्छति ।

**चारुदत्त** —अधिकृत[2] केन सह मम व्यवहार ।

**शकार** —(साटोपम् ।) अरे मया सह व्यवहार· । (अले मए शह ववहाले ।)

**चारुदत्त** —त्वया सह मम व्यवहार सुदु सह ।

**शकार** — अरे स्त्रीघातक ता तादृशी रत्नशतभूषणा वसन्तसेना मारयित्वा साप्रत कपटकापटिको भूत्वा निगूहसि । ( अले इश्थिआघादआ त तादिशि लअणशदभूशणिअ वशन्तशेणिअ मालिअ शपद कवडकावडिके भविअ णिगूहेशि ।)

---

[ एवविधमेतन्मुखमकारणदूषणाना अकारणेन हठेन दूषणाना भाजन न भवति हि । यत नागेषु गोषु तुरगेषु तथा नरेषु आकृति रम्याकार सुसदृश आकारसदृश रमणीय वृत्त न विजहाति त्यजति । सुरूपाकृतिर्गुणविसवादिनी न भवतीति भाव । वसन्ततिलक वृत्तम् ] ॥ १६ ॥ प्रसक्ति [ सङ्ग सपर्को वा ] प्रणयो रागानुबन्ध प्रीति स्नेहमात्रम् । लज्जयेत्यादि । वैतालीयम् । एइ इति सबिन्दुविकारो लघुः छन्दोनुरोधात् । लज्जया भीरुकतया च लक्षित । त्वमित्यर्थात् । कुत एवमित्याह स्वय मारयित्वाऽर्थनिमित्तमिदानी गृह्णाति न नष्टके । अपि तु नष्ट एव । 'नष्टके' इत्यपि पाठ । [ अर्थकारणात् स्वय वसन्तसेना मारयित्वा लज्जया भीरुतया वा अलीक चरित्र निगूहितु यतसे इति शेष । किं तु भट्टक राजा पालक अधिकरणिको वा तन्न गूहति हि । 'अलीको निगूहतु' इति पाठ साधीयान् ] ॥ १७ ॥ **व्यवहार इति** । [ अय व्यवहार सविघ्न । हृदि स्थिता लज्जा त्यज । सत्य ब्रूहि । धैर्य-

---

१ चारित्रम् २ अधिकृता

**चारुदत्त**—असबद्ध खल्वसि ।

**अधिकरणिक**—आर्य चारुदत्त अलमनेन । ब्रूहि सत्यम् । अपि गणिका तव मित्रम् ।

**चारुदत्त**—एवमेव ।

**अधिकरणिक**—आर्य वसन्तसेना क्व ।

**चारुदत्त**—गृह गता ।

**श्रेष्ठिकायस्थौ**—कथ गता कदा गता गच्छन्ती वा केनानुगता । (कथ गदा कदा गदा गच्छन्ती वा केण अणुगदा ।)

**चारुदत्त**—(स्वगतम् ।) कि प्रच्छन्न गतेति ब्रवीमि ।

**श्रेष्ठिकायस्थौ**—आर्य कथय । (अज्ज कधेहि ।)

**चारुदत्त**—गृह गता । किमन्यद्ब्रवीमि ।

**शकार**—मदीय पुष्पकरण्डकजीर्णोद्यान प्रवेश्यार्थनिमित्त बाहुपाशबलात्कारेण मारिता । अये साप्रत वदसि गृह गतेति । ( ममकेलक पुप्फकलण्डकजिण्णुज्जाण पवेशिअ अत्थणिमित्त बाहुपाशबलक्कालेण मालिदा । अये शपद वदशि घल गदे त्ति ।)

**चारुदत्त**—आ असबद्धप्रलापिन् ।

> अभ्युक्षितोऽसि सलिलैर्न बलाहकाना
> चाषाग्रपक्षसदृश भृशमन्तराले ।
> मिथ्यैतदाननमिद भवतस्तथा हि
> हेमन्तपद्ममिव निष्प्रभतामुपैति ॥ १९ ॥

**अधिकरणिक**—( जनान्तिकम् । )

> तुलन चाद्रिराजस्य समुद्रस्य च तारणम् ।
> ग्रहण चानिलस्येव[1] चारुदत्तस्य दूषणम् ॥ २० ॥

( प्रकाशम् । ) आर्यचारुदत्त खल्वसौ कथमिदमकार्य[2] करिष्यति । ( 'घोणा— ( ९।१६ ) इत्यादि पठति ।)

**शकार**—कि पक्षपातेन व्यवहारो दृश्यते । ( कि पक्खवादेण ववहाले दीशदि । )

---

उद्धृतरत्नत्वात् । अनपेक्षितानि दानशौण्डत्वान्मुक्तहस्तानि धनानि दत्तानि । स श्रेयसा एकनिधि महात्मा धनार्थं अवीरजुष्ट कृपणसेवित पाप कथ करिष्यति ' अवैरिजुष्टम ' इति पाठे वैरिभिरप्यसेवितमित्यर्थ । वसन्त० वृत्तम् ] ॥ २२ ॥

---

१ वाऽनिल० २ कथमकार्यं

CHAR —You are surely talking nonsense !

THE J —Noble Charudatta, never mind him Tell us the truth. Is that courtesan your friend ?

CHAR —That's so

THE J —Well, where is Vasantasena ( at present ) ?

CHAR —She has gone home

SR & K —How did she go ? When did she go ? And who accompanied her when she went ?

CHAR —( *To himself* ) What ! Shall I say that she went unobserved ?

SR & K —Sir tell it ( please ).

CHAR —She went home What more should I tell ?

SAK —You enticed her to my old *Pushpakarandaka* garden and killed her for her money by forcibly strangling her with the noose of your arms Ah and now you say that she went home ?

CHAR —Ah, you, talker of nonsense !

You are not thoroughly wetted by the waters of the clouds in the sky like the tips of the wings of a *chasha* bird, ( and still your face is darkened, without any cause ) What you assert is false For, this face of yours loses its lustre like the lotus in winter. ( 19 )

THE J —( *Aside, to the* assessors )

Imputing a crime to Charudatta is like weighing the Himalaya mountain, or like crossing the ocean ( by swimming ), or like capturing the wind (20)

( *Aloud* ) He is, indeed the 'noble' Charudatta ! How would he do this evil deed ? ( *Repeats the verse beginning* 'A face having a prominent nose' &c )

SAK —What ! Are you investigating this case with ( such ) partiality ?

---

पादेत्यादि । गाथा । पादप्रहारेण परिभव आक्रम स एव विमानना तया बद्ध-गुरुकवैरस्य । अनुशोचमानस्येय कथमपि रात्रि प्रभाताऽपगता मम ॥ २३ ॥ एष इति । [ भो इति खेदे । एष निर्मला ज्योत्स्ना यस्य स निर्मलज्योत्स्न शशी । निर्दोषश्चारुदत्त इत्यर्थः । कलुषायते आविल भवति । अपवादेन दुष्यति इत्यर्थः । रूपकातिशयोक्ति. ] ॥ २४ ॥ यत्नेति । [ इद चारुदत्तवृत्त यथ यथा निपुण

अधिकरणिक —अपेहि[1] मूर्ख ।

वेदार्थान्प्राकृतस्त्व वदसि न च ते जिह्वा निपतिता[2]
मध्याह्ने वीक्षसेऽर्कं[3] न तव सहसा दृष्टिर्विचलिता ।
दीप्ताग्नौ पाणिमन्त क्षिपसि स[4] च ते दग्धो भवति नो
चारित्र्याच्चारुदत्त चलयसि[5] न ते देह हरति भू ॥ २१ ॥

आर्यचारुदत्त कथमकार्यं[6] करिष्यति ।

कृत्वा समुद्रमुदकोच्छ्रयमात्रशेष
दत्तानि येन हि धनान्यनपेक्षितानि ।
स श्रेयसा कथमिवैकनिधिर्महात्मा
पाप करिष्यति धनार्थमवैरजुष्टम्[7] ॥ २२ ॥

वृद्धा[8]—हताश यस्तदानी न्यासीकृत सुवर्णभाण्ड रात्रौ चौरैरपहृतमिति तस्य कारणाच्चतु समुद्रसारभूता रत्नावली ददाति स इदानीमर्थकल्यवर्तस्य कारणादिदमकार्यं करोति । हा जाते एहि मे पुत्रि । ( इति रोदिति । ) ( हदास जो तदाणि णासीकिद सुवण्णभण्डअ रत्ति चोरेहि अवहिद त्ति तस्स कारणादो चदुस्समुद्दसारभूद रअणावलि देदि सो दाणि अत्थकल्लवत्तस्स[9] कारणादो इम अकज्ज करेदि । हा जादे एहि मे पुत्ति ।)

अधिकरणिक —आर्य चारुदत्त किमसौ पद्भ्या गता उत प्रवहणेनेति ।

चारुदत्त —ननु मम प्रत्यक्ष न गता । तन्न जाने कि पद्भ्या गता उत प्रवहणेनेति ।

( प्रविश्य सामर्ष । )

वीरक —

पादप्रहारपरिभवविमाननाबद्धगुरुकवैरस्य ।
अनुशोचत इय कथमपि रात्रि प्रभाता मे ॥ २३ ॥

तद्यावदधिकरणमण्डपमुपसर्पामि । (प्रवेष्टकेन ।) सुखमार्यमिश्राणाम् ।

(पादप्पहारपरिभवविमाणणाबद्धगरुअवेरस्स[10] ।
अणुसोअन्तस्स इय कध पि रत्ती पभादा मे ॥
ता जाव अधिअरणमण्डव उवसप्पामि । सुह अज्जमिस्साणम् ।)

अधिकरणिक —अये नगररक्षाधिकृतो वीरक । वीरक किमागमनप्रयोजनम् ।

---

१ अवेहि २ निपतति ३ सेऽर्के ४ न च ते तत्क्षण दह्यतेऽसौ ५ छलयसि ६ कथमयम० ७ ०मवैरि० ८ अस्मात्प्राक्–शकार –कि पक्खवादेण ववहालो दीशदि ९ अत्थकारणादो. १० लद्ध (लब्ध)

THE J —Begone, you fool !

You, a low cast fellow, are explaing the sense of the Vedas, and ( yet ) your tongue does not fall off ! You are gazing at the sun at mid day, and ( still ) your eyes are not suddenly struck blind ! You are putting your hand inside the blazing fire, and ( yet ) that hand of yours is not burnt ! You are depriving Charudatta of his good name, and ( still ) the Earth does not ( yawn and ) gulp down your body ! (21)

How can the noble Charudatta do an evil deed ?

He who left only the mass of waters in the ocean ( which was the repository of jewels ), and gave away undreamt quantities of money,—how can that high-souled person, the unique abode of all noble qualities, commit, for the sake of money, a crime that is committed only by mean persons ? (22)

THE OLD L —You wretch ! He who, on that occasion, gave a jewel-necklace, the essence ( as it were ) of the four oceans, in return for the golden ornaments deposited with him because they were stolen at night by thieves,—would he now commit this evil deed for the sake of filthy lucre ? oh, my daughter ! Come (to me ), my daughter ! ( *weeps* )

THE J —Worthy Charudatta, did she go walking or in a carriage ?

CHAR —Well, she did not leave in my presence So I do not know whether she went walking or in a carriage

( *Entering enraged* )

VIRAKA—

Nursing a bitter hatred ( towards Chandanaka ) for humiliating me with the insult of striking me with foot, as I lay ( awake ) brooding over it all this night, it has somehow dawned (23)

So, then, let me just repair to the law court ( *Entering* ) Good day, gentlemen !

THE J —Ah, ( here's ) Viraka, the officer appointed to keep guard over the city Well, Viraka, what brings you here ?

---

सूक्ष्मतया विचार्यते विमृश्यते तथा तथा सकटमकुशलपरिणामि एव दृश्यते । अहो व्यवहारनीतय व्यवहारन्याया सुमन्ना सुसहता ।] सुसन्ना व्यवहारनीतय इति सामान्यविशेषभावेन विशेषणम् । [ मे मतिस्तु पङ्कगता गौ इव सीदति । न तु उत्थातु शक्नोति । निर्दोषमपि चारुदत्त मोक्तु न शक्नोतीत्यर्थ । वशस्थ वृत्तम् ]

**वीरक**—ही ही बन्धनभेदनसभ्रम आर्यकमन्वेषयन् अपवारित प्रवहण व्रजतीति विचार कुर्वन्नन्वेषयन् अरे त्वयाऽप्यालोकित मयाऽप्यालोकितव्यमिति भणन्नेव चन्दनमहत्तरकेण पादेन ताडितोऽस्मि। एतच्छ्रुत्वाऽऽर्यमिश्रा प्रमाणम्। (ही ही बन्धणभेअणसभमे अज्जकं अण्णेसन्तो ओवाडिद पवहण वच्चदि त्ति विआर करन्तो अण्णेसन्तो अरे तुए वि आलोइदे मए वि आलोइदव्वो त्ति भणन्तो ज्जेव्व चन्दणमहत्तरएण पादेण ताडिदो म्हि। एद सुणिअ अज्जमिस्सा पमाणम्।)

**अधिकरणिक**—भद्र जानीषे कस्य तत्प्रवहणमिति।

**वीरक**—अस्यार्यचारुदत्तस्य। वसन्तसेनाऽऽरूढा पुष्पकरण्डकजीर्णोद्यान क्रीडितु नीयत इति प्रवहणवाहकेन कथितम्। (इमस्स अज्जचारुदत्तस्स। वसन्तसेणा आरूढा पुप्फकरण्डकजिण्णुज्जाण कीलिदु णीअदि त्ति पवहणवाहएण कहिदम्।)

**शकार**—पुनरपि श्रुतमार्यैः। (पुणो वि शुद अज्जेहिं[1]।)

**अधिकरणिक**—

> **एष भो निर्मलज्योत्स्नो राहुणा ग्रस्यते शशी।**
> **जल कूलावपातेन प्रसन्न कलुषायते॥ २४॥**

वीरक पश्चादिह भवतो न्याय द्रक्ष्याम। य एषोऽधिकरणद्वार्यश्वस्तिष्ठति तमेनमारुह्य गत्वा पुष्पकरण्डकोद्यान दृश्यतामस्ति तत्र काचिद्विपन्ना[2] स्त्री न वेति।

**वीरक**—यदार्य आज्ञापयति। (इति निष्क्रान्त। प्रविश्य च।) गतोऽस्मि तत्र। दृष्ट च मया स्त्रीकलेवर श्वापदैर्विलुप्यमानम्। (ज अज्जो आणवेदि। गदो म्हि तहिं। दिट्ठ च मए इत्थिआकलेवर सावदेहिं विलुप्पन्तम्।)

**श्रेष्ठिकायस्थौ**—कथ त्वया ज्ञात स्त्रीकलेवरमिति। (कध तुए जाणिद इत्थिआकलेवर त्ति।)

**वीरक**—सावशेषैः केशहस्तपाणिपादैरुपलक्षित मया। (सावसेसेहिं केसहत्थपाणिपादेहिं उवलक्खिद मए।)

**अधिकरणिक**—अहो विग्वैषम्य लोकव्यवहारस्य।

> **यथा यथेद निपुण विचार्यते तथा तथा सकटमेव दृश्यते।**
> **अहो सुसन्ना व्यवहारनीतयो मतिस्तु गौः पङ्कगतेव सीदति॥ २५॥**

**चारुदत्त**—(स्वगतम्।)

> **यथैव पुष्प प्रथमे विकाशे समेत्य पातु मधुपा पतन्ति।**
> **एव मनुष्यस्य विपत्तिकाले छिद्रेष्वनर्था बहुलीभवन्ति॥ २६॥**

**अधिकरणिक**—आर्यचारुदत्त सत्यमभिधीयताम्।

---

१ अज्जमिश्शेहिं २ काचित्स्त्री विपन्ना

VIR —Oh ! Oh ! While I was hunting for Aryaka in the tumult following his escape from prison, I grew suspicious about a closed carriage that was passing along, and was going to search it; but then, just as I said—'Oh, although you have inspected (the carriage) I too wish to inspect it,' I was kicked by captain Chandanaka Having heard this, may your honours decide (what to do)

THE J —Well, my good man, do you know to whom that carriage belonged ?

VIR —To this gentleman, the worthy Charudatta (And) the carriage-driver said that Vasantsena was inside, and that she was being taken to the old garden *Pushpakarandaka* for sporting (with him)

SAK —You have (now) once more heard it (the same story), gentlemen !

THE J —

Alas, here is the moon, shedding a pure light, being eclipsed by Rahu ! The clear water is being rendered muddy by the falling in of the banks ! (24)

Viraka, we'll look into this complaint of yours afterwards (For the present) just mount this horse which is standing outside near the entrance to the court, and go to the *Pushpakarandaka* garden and see if there is any woman lying dead there, or not

VIR —As Your Honour orders (*Exit Then entering again*) I have just been there Well, I *did* see a woman's corpse that the jackals (*lit* beasts) were eating up

SR & K —How did you know that it was a woman's corpse ?

VIR —I found it out by the remains (portions) of the hair, arms, hands and legs (that were uneaten)

THE J —Oh, fie upon the intricacy of wordly transactions ! (*Or*, how difficult is the investigation of law-suits !)

The more carefully is the (case) looked into, the darker it appears Alas ! The points of law (proof) are very clear (*lit* well connected), but my judgment finds it difficult to proceed (*lit* sinks), like a cow in a quagmire (25)

CHAR —(*To himself*)

Just as, at its first blooming the bees come in swarm to a flower to suck its honey, so, in times of calamity, a man's troubles multiply when there are weak points (26)

THE J —Noble Charudatta, tell the truth

चारुदत्त —

दुष्टात्मा परगुणमत्सरी मनुष्यो
रागान्ध परमिह हन्तुकामबुध्दि. ।
किं यो यद्वदति मृषैव जातिदोषा-
त्तद्ग्राह्य भवति न तद्विचारणीयम् ।। २७ ।।

अपि च ।

योऽह लता कुसुमितामपि पुष्पहेतो-
राकृष्य नैव कुसुमावचय करोमि ।
सोऽह कथ भ्रमरपक्षरुचौ सुदीर्घे
केशे प्रगृह्य[१] रुदतीं प्रमदा निहन्मि ।। २८ ।।

**शकार** —हहो अधिकरणभोजका किं यूय पक्षपातेन व्यवहार पश्यत येनाद्याप्येष हताशचारुदत्त आसने धार्यते । ( हहो अधिअलणभोइआ किं तुम्हे पक्खवादेण ववहाल पेक्खध ज्जेण अज्ज वि एशे हदाशचालुदत्ते आशणे धालीअदि ।)

**अधिकरणिक** —भद्र शोधनक एव क्रियताम् ।

(शोधनकस्तथा करोति ।)

**चारुदत्त** —विचार्यताम् । भो अधिकृता[२] विचार्यताम् । (इत्यासनादवतीर्य भूमावुपविशति ।)

**शकार** —(स्वगतम् । सहर्षं नर्तित्वा ।) ही अनेन मया कृत पापमन्यस्य मस्तके निपतितम् । तद्यत्र चारुदत्त उपविशति तत्राहमुपविशामि । (तथा कृत्वा ।) चारुदत्त पश्य पश्य माम् । तद्भूण भण मया मारितेति । (ही अणेण मए कडे पावे अण्णश्श मश्तके निवडिदे । ता जहिं चालुदत्ताके[३] उवविशदि तहिं हग्गे उवविशामि । चालुदत्ता पेक्ख पेक्ख मम् । ता भण भण मए मालेदि त्ति ।)

**चारुदत्त** —भो अधिकृता । ('दुष्टात्मा–' (९।२७) इति पूर्वोक्त पठति । सनि श्वासम् स्वगतम् ।)

मैत्रेय भो किमिदमद्य ममोपघातो
हा ब्राह्मणि[४] द्विजकुले विमले प्रसूता ।
हा रोहसेन न हि पश्यसि मे विपत्ति
मिथ्यैव नन्दसि [५]परव्यसनेन नित्यम् ।। २९ ।।

प्रेषितश्च मया तद्वार्तान्वेषणाय मैत्रेयो वसन्तसेनासकाशं शकटिकानिमित्त च तस्य प्रदत्तान्यलंकरणानि प्रत्यर्पयितुम् । तत्कथ चिरयते ।

१ विगृह्य २ अधिकृते ३ चालुदत्ते ४ ब्राह्मणी निजकुले ५ परिव्यस०.

CHAR —

Whatever a person, who is evil-souled, jealous of another's virtues, blinded by passion, and desirous of ruining another, tells falsely here ( i e , in the law-court ), through the evil bent of his very nature,—is all that to be accepted ( as true ) ? Is it not to be investigated ?* (27)

Moreover :—

I, who do not even bend down a flowering creeper for plucking its blossoms, and never gather its flowers thus,—how could that I ever kill a weeping woman, seizing her by her long tresses having the ( dark ) shine of bees' wings ? (28)

SAK —You judges, do you conduct your proceedings with partiality, that you allow this wretch, Charudatta, to occupy a seat even now ?

THE J —Sodhanaka, my good man, do as he says

( Sodhanaka *does accordingly* )

CHAR —Consider, O judges, consider ( what you are doing ! ) ( *He then leaves his seat and sits on the bare ground* )

SAK —( *To himself Dancing in joy* ) Heigh-ho ! By this the sinful deed done by me has fallen on another's head ! So I'll sit where Charudatta sat ( *Does so* ). Charudatta, look, look at me ! Say, then, say that you killed her !

CHAR —Sirs, judges ! ( *Repeats what he had said before, viz* 'Whatever a person who is evil souled', &c *Then heaving a sigh, to himself* )

O Maitreya, what is this ( going on ) ? It will end to-day in my destruction ! O my wife, born in a spotless Brahmana family ! O Rohasena ! you do not certainly see my calamity ! You are ever cheerful, calamities being far aff ( from us ), but it is in vain ( that you do so ) (29)

I have sent Maitreya to get news of Rohasena, and also to Vasantasena, to return to her the ornaments given by her to him for ( making ) a golden toy-cart ( out of them ) But why is he late ?

---

* Or, that should not be accepted as true , it should be considered

(तत प्रविशति गृहीताभरणो विदूषक ।)

**विदूषक** –प्रेषितोऽस्म्यार्यचारुदत्तेन वसन्तसेनासकाश तत्रालकरणानि गृहीन्वा यथा—आर्य मैत्रेय वसन्तसेनया वत्सो रोहसेन आत्मनोलङ्कारेणालङ्कृत्य जननी-सकाश प्रेषित । अस्या आभरण दातव्य न पुनर्ग्रहीतव्यम् । तत्समर्पयेति । तद्यावद्वसन्तसेनासकाशमेव गच्छामि । ( परिक्रम्य अवलोक्य च । आकाशे । ) कथ भावरेभिल । भो भावरेभिल किंनिमित्त त्वमुद्विग्न उद्विग्न इव लक्ष्यसे । (आकर्ण्य ।) किं भणसि—प्रियवयस्यश्चारुदत्तोऽधिकरणमण्डप आहूत इति । तन्न खल्वल्पेन कार्येण भवितव्यम् । (विचिन्त्य ।) तत्पश्चाद्वसन्तसेनासकाश गमिष्यामि । अधि-करणमण्डप तावद्गमिष्यामि । ( परिक्रम्यावलोक्य च । ) अयमधिकरणमण्डप । तद्यावत्प्रविशामि । (प्रविश्य ।) सुखमधिकरणभोजकानाम् । कुत्र मम प्रियवयस्य । (पेसिदोम्हि अज्जचारुदत्तेण वसन्तसेणासआस तहिं अलकरणाइ गेण्हिअ जधा-अज्ज मित्तेअ वसन्तसेणाए वच्छो रोहसेणो अत्तणो अलकारेण अलकरिअ जणणीसआस पेसिदो । इमस्स आहरण दादव्व ण उण गेण्हिदव्वम् । ता समप्पेहि त्ति । ता जाव वसन्तसेणासआस ज्जेव्व गच्छामि । कध भावरेभिलो । भो भावरेभिल किंणिमित्त तुम उव्विग्गो उव्विग्गो विअ लक्खीअसि । कि भणासि—पिअवअस्सो चारुदत्तो अधि-अरणमण्डवे सद्दाइदो त्ति । ता ण हु अप्पेण कज्जेण होदव्वम् । ता पच्छा वसन्त-सेणासआस[1] गमिस्सम् । अधिअरणमण्डव दाव गमिस्सम् । इद अधिअरणमण्डवम् । ता जाव पविसामि । मुह अधिअरणभोइआणम् । कहिं मम पिअवअस्सो ।)

**अधिकरणिक** —नन्वेष तिष्ठति ।

**विदूषक** —वयस्य स्वस्ति ते । (वअस्स सोत्थि दे ।)

**चारुदत्त** – भविष्यति ।

**विदूषक** —अपि क्षेम ते । (अवि क्खेम दे ।)

**चारुदत्त** —एतदपि भविष्यति ।

**विदूषक** —भो वयस्य किंनिमित्तमुद्विग्न उद्विग्न इव लक्ष्यसे । कुतो वाऽऽहूत । (भो वअस्स किंणिमित्त [2]उव्विग्गो उव्विग्गो विअ लक्खीअसि । कुदो वा सद्दाइदो ।)

**चारुदत्त** —वयस्य ।

> **मया खलु नृशसेन परलोकमजानता ।**
> **स्त्री रतिर्वाऽविशेषेण[3] शेषमेषोऽभिधास्यति ॥ ३० ॥**

**विदूषक** —कि किम् । (कि किम् ।)

**चारुदत्त** —(कर्णे ।) एवमेवम्[4] ।

---

१ गेह २ उण उव्वि० ३ रतिश्चावि० ४ एवमिति

( *Then enter* Vidushaka, *carrying the ornaments* )

VID —The worthy Charudatta has sent me to Vasantasena, to go to her place, with the ornaments, saying—"Worthy Maitreya, Vasantasena sent dear Rohasena to his mother, after adorning him with her own ornaments It was all right for her to give those ornaments, but not ( for us ) to accept them So please return them ( to her )" So, then, I'll just go to Vasantasena ( *Walking about and observing, in the Void* ) How ! Here is friend Rebhila ! Ho, sir Rebhila, why do you look as if you were exceedingly distressed ? ( *Listening* ) What do you say ?—that my dear friend Charudatta has been summoned to ( appear in ) the law-court ? Ah, then, surely, it could not have been on any ordinary business ! ( *Pondering* ) Well, I'll go to Vasantasena afterwards Let me first proceed to the law-court ( *Walking about and looking on* ) Here is the court of justice, let me then enter it ( *Entering* ) Hail to you, judges ! Where is my dear friend ?

THE J —Here he is !

VID —Friend, happiness to you !

CHAR —That will be

VID —( Why ), I hope you are all right ?

CHAR —That, too, will be

VID —O friend, why are you looking as if you were extremely distressed ? And why have you been summoned here ?

CHAR —Friend,

Verily, by me, who am cruel and ignorant of (the existence of) the next world, a woman,—or rather, Rati herself, without any distinction, The rest this person will tell (30)

VID —What, what is it ?

CHAR —( *Whispering in his ear* ) Thus, like this

---

॥ २५ ॥ **यथैवेति** । [ यथा एव प्रथमे विकासे विकासारम्भे एव पुष्प लक्षणया तन्मकरन्द पातु मधुपा भ्रमरा· समेत्य सघात कृत्वा पतन्ति । एव मनुष्यस्य विपत्तिकाले छिद्रेषु सत्सु अनर्था बहुलीभवन्ति विपुला भवन्ति । उपमाऽप्रस्तुत-प्रशसालङ्कारौ । उपजातिर्वृत्तम् ॥ २६ ॥ **दुष्टेति** । [ इहास्मिन्नधिकरणे य नर दुष्टात्मा परगुणेषु मत्सरोऽस्यास्तीति मत्सर्यमर्षण रागान्ध परं हन्तुकामबुद्धि जातिदोपात् हीनजातित्वात् मृषैव यद्वदति तत् किं ग्राह्य भवति । नैवेत्यर्थ । तत्

**विदूषक** —क एव भणति । (को एव्व भणादि ।)

**चारुदत्त** —( सज्ञया शकार दर्शयति[1] । ) नन्वेष तपस्वी हेतुभूत कृतान्तो मा व्याहरति ।

**विदूषक** —( जनान्तिकम् । ) एव किमर्थं न भण्यते गृह गतेति । (एव्व कीस ण भणीअदि गेह गदे त्ति ।)

**चारुदत्त** —उच्यमानमप्यवस्थादोषान्न गृह्यते ।

**विदूषक** —भो भो आर्या येन तावत्पुरस्थापनविहारारामदेवालयतडागकूपयूपैरलकृता नगर्युज्जयिनी सोऽनीशोऽर्थकल्यवर्तकारणादीदृशमकार्यमनुतिष्ठतीति। (सक्राधम् ।) अरे रे कुलटापुत्र राजश्यालसस्थानक उच्छृङ्खलक कृतजनदोषभण्ड बहुसुवर्णमण्डितमर्कटक भण भण ममाग्रत । य इदानी मम प्रियवयस्य कुसुमिता माधवीलतामप्याकृष्य कुसुमावचय न करोति कदाचिदाकृष्टतया पल्लवच्छेदो भवतीति स कथमीदृशमकार्यमुभयलोकविरुद्ध करोति । तिष्ठ रे कुट्टनीपुत्र तिष्ठ । यावदेतेन तव हृदयकुटिलेन दण्डकाष्ठेन मस्तक ते शतखण्ड करोमि । (भो भो अज्जा जेण दाव पुरट्ठावणविहारारामदेउलतडागकूवजूवेहिं[2] अलकिदा णअरी उज्जइणी सो अणीसो अत्थकल्लवत्तकारणादो एरिस अकज्ज अणुचिट्ठदि त्ति । अरे रे काणेलीसुदा राअश्शालसठाणआ [3]उस्सुड्खलआ किदजणदोसभण्डआ बहुसुवण्णमण्डिदमक्कडआ भण भण मम अग्गदो । जो दाणिं मम f अवअस्सो कुसुमिद माधवीलद पि आकिट्ठिअ[4] कुसुमावचअ ण करेदि कदा वि आकिट्ठिदाए पल्लवच्छेदो भोदि त्ति सो कध एरिम अकज्ज उहअलोअविरुद्ध करेदि । चिट्ठ रे कुट्टणिपुत्ता चिट्ठ । जाव एदिणा तव हिअअकुडिलेण दण्डअठ्ठेण मत्थअ दे सदखण्ड करेमि ।)

**शकार** —(सक्रोधम् ।) शृण्वन्तु शृण्वन्त्वार्यमिश्रा । चारुदत्तेन सह मम विवादो व्यवहारो वा । तत्किमर्थमेष काकपदशीर्षमस्तको मम शिर शतखण्ड करोति । मा तावत् । रे दास्या पुत्र दुष्टबटुक । (शुणन्तु शुणन्तु अज्जमिश्शा । चालुदत्ताकेण शह मम विवादे ववहाले वा । ता कीश एशे काकपदशीशमश्तका मए शिले शदखण्डे कलेदि । मा दा । ले दाशीएपुत्ता दुट्टबडुका ।)

(विदूषको दण्डकाष्ठमुद्यम्य पूर्वोक्त पठति । शकार सक्रोधमुत्थाय ताडयति । विदूषक प्रतीप ताडयति । अन्योन्य ताडयत । विदूषकस्य कक्षादेशादाभरणानि[5] पतन्ति ।)

---

कि न विचारणायम् । अपि तु सदसद्वेति विमशनीयमेव । प्रहर्षिणी वृत्तम् ] ॥ २७ ॥ **योऽहमिति** । [ योऽह कुसुमान्यस्या सजातानि असौ कुसुमिता ता लता पुष्पहेतो आकृष्य इ० । साऽह भ्रमरपक्षयोरिव रुचि कान्तिर्यस्य तस्मिन्भ्रमरवन्नीले केशे

---

१ निर्दिशति २ देउलेहिं ३ दुस्सकणआ (दु शङ्कन) ४ आअबिअ ५ कक्षदे०

VID —Who says so ?

CHAR.—( *Points out* Sakara *by a sign* ) Why, this poor fellow, who has been the instrument of the god of Death says so of me !

VID —( *Aside, to* Charudatta ) Why don't you tell them that she went home ?

CHAR —Although told it is not believed in, owing to my poverty ( *lit* the fault of my condition )

VID —O you gentlemen! He who adorned this city of Ujjayini by founding suburbs, and by means of monasteries, gardens, temples, tanks, wells, and sacrificial posts —would he, because he is poor, commit such an evil deed for the sake of filthy lucre ? ( *Wrathfully* ) Oh, you, a whore's son, royal brother-in law, Samsthanaka, a lost libertine, you scoundrel imputing crimes to people, you monkey decked with numerous golden ornaments, say it in *my* presence ! This dear friend of mine, who does not even bend down the *madhavi* creeper in bloom and thereby gather flowers, for fear that perchance its leaves might get torn ( off the stalk ) when it is bent,—how could he commit such an evil deed, despicable in both the worlds ? Wait, you son of a bawd, just wait ! I will just break your head into a hundred pieces with this wooden staff, which is as crooked as your heart !

SAK —( *Angrily* ) Listen, listen, ye gentlemen ! It is with Charudatta that I have a quarrel, or a suit Why then should this crow-foot pated fellow break my head into a hundred pieces ? You can't do it, you slave born, knavish Brahmana !

( Vidushaka *raises his wooden staff and repeats what he had said before* Sakara *gets up in anger, and beats him* Vidushaka *beats* Sakara *in return They both beat each other The ornaments drop down from under* Vid's *arm pit* )

---

प्रगृह्य बलाद् गृहीत्वा रुदती प्राणत्राणार्थं क्रोशन्ती प्रमदा कथ निहन्मि। न हन्यामेव। वसन्ततिलक वृत्तम् ] ॥ २८ ॥ अथ मित्रभार्यापुत्रान् बुद्ध्युपस्थापितानुद्दिश्याह—मैत्रेयेति। [ भो मैत्रेय किमिदम्। अद्य ममोपघात विनाश प्राप्त। हा इति खेदे। ब्राह्मणि त्व विमले द्विजकुले प्रसूताऽसि। अत तव पत्युरीदृशो विनाशस्तेऽनुचित इति भाव। हा रोहसेन मे प्राणविपत्ति न पश्यसि हि नैव जानासि। पर दूरम्। अज्ञातमिति यावत्। च तद् व्यसन न तेन नित्य नन्दसि किं तु तन्मिथ्यव। परेण श्रेष्ठेन व्यसनेन उपस्थितपितृघातरूपेणोपलक्षितस्त्वमिति

**शकार**—(तानि गृहीत्वा दृष्ट्वा ससाध्वसम् ।) पश्यन्तु पश्यन्त्वार्या । एते खलु तस्यास्तपस्विन्या अलकारा । (चारुदत्तमुद्दिश्य ।) अस्यार्थकल्यवर्तस्य कारणादेषा मारिता व्यापादिता च । (पेक्खन्तु पेक्खन्तु अज्जा । एदे क्खु ताए तवश्शिणीएकेलका अलकाला । इमश्श अत्थकल्लवत्तश्श कालणादो एशा मालिदा वावादिदा अ ।)

(अधिकृता सर्वेऽधोमुखा स्थिता ।)

**चारुदत्त**—(जनान्तिकम् ।)

**अयमेवविधे काले दृष्टो भूषणविस्तर ।**
**अस्माक भाग्यवैषम्यात्पतित पातयिष्यति ॥ ३१ ॥**

**विदूषक**—भो किमर्थं भूतार्थो न निवेद्यते । (भो कीस भूदत्थ ण णिवेदीअदि ।)

**चारुदत्त**—वयस्य ।

**दुर्बल नृपतेश्चक्षुर्नैतत्तत्त्व निरीक्षते ।**
**केवल वदतो दैन्यमश्लाघ्य मरण भवेत् ॥ ३२ ॥**

**अधिकरणिक**—कष्ट भो कष्टम् ।

**अङ्गारकविरुद्धस्य प्रक्षीणस्य बृहस्पते ।**
**ग्रहोऽयमपर पार्श्वे धूमकेतुरिवोत्थित ॥ ३३ ॥**

**श्रेष्ठिकायस्थौ**—(विलोक्य । वसन्तसेनामातरमुद्दिश्य ।) अवहिता ताव दार्येद सुवर्णभाण्डमवलोकयतु तदेवेद न वेति । (अवहिदा दाव अज्जा एद सुवण्णभण्डअ अवलोएदु सो ज्जेव एसो ण वेत्ति ।)

**वृद्धा**—(अवलोक्य ।) सदृशमेतत् । न पुनस्तत् । (सरिसो एसो । ण उण सो ।)

**शकार**—आ वृद्धकुट्टनि अक्षिभ्या मन्त्रित वाचा मूकितम् । (आ बुड्ढ॰ कुट्टणि अक्खीहिं मन्तिद वाआए मूकिदम् ।)

**वृद्धा**—हताश अपेहि । (हदास अवेहि ।)

**श्रेष्ठिकायस्थौ**—अप्रमत्त कथय तदेवैतन्न वेति । (अप्पमत्त कधेहि सो ज्जेव एसो ण वेत्ति ।)

---

परेण केवलेन व्यसनेन बाल्योचितक्रीडनेन इति च केचिद्व्याख्यान्ति । वसन्त-तिलक वृत्तम् ] ॥ २९ ॥ **मयेति** । [ परलोकमजानता नृशसेन घातुकेन मया खलु स्त्री सामान्या योषित् वा अथ वा अविशेषेण रति स्वरूपेण कामप्रिया वा मूर्तिमती प्रीतिर्वा । हतेति वक्तुमसमर्थ आह—शेषमिति । एष शकार । ] ॥ ३० ॥ [ तपस्वी शोच्य । कृतान्त विधि । मम दुर्दैवमित्यर्थ । पुरस्थापन पुरा-

SAK —( *Picking them up and looking at them , showing fear* ) Look, gentlemen look! These are verily the ornaments of that poor girl! ( *Pointing to* Charudatta ). For the sake of this filthy lucre he strangled and killed her!

( *The* officers *all bend down their faces* ).

CHAR —( *Aside , to* Vid )

This group of ornaments, seen at such a time, and dropped ( from your person ) owing to my ill-luck, will ruin me (31)

VID —Well, why don't you tell them the truth ?

CHAR —Friend,

The royal eye is weak, and it cannot perceive the truth in this matter If I were to tell, it would be ( simply ) humiliation, and there would be inglorious death (32)

THE J —Alas, Oh, alas!

By the side of Jupiter, powerless and opposed by Mars, there has appeared this another planet, like a comet (33)

SR & K —( *Observing, and addressing* Vasantasena's mother ) Madam, please just inspect these golden ornaments carefully, ( and find out ) if they are the same or not

THE OLD L —( *Seeing* ) They are similar, but they are not the same

SAK —Ha ! You old bawd, your eyes have spoken, if your tongue has concealed it!

THE O L —Off with you, you wretch!

SR & K —Please answer, without making any mistake, whether these are the same or not

---

वस्थिति । पुरनिर्माणमिति यावत् । विहारा सौगतावसथा । आरामा उपवनानि । यूप कृतस्य यज्ञस्य चिह्नभूत अनीश दरिद्रता गतोऽपि । उच्छृङ्खलक स्वैरवृत्त । कृतजनदोषश्चासौ भण्डश्चेति विशेषणसमास । कुट्टनीपुत्र असतीपुत्र । अयमिति । [ एवविधे काले दोषारोपसमये अस्माक भाग्यवैषम्याद्विरे वक्रतया पतित अय भूषणविस्तर आभरणसमूह दृष्ट मा पातयिष्यति ] ।। ३१ ।। दुर्बलमिति । [नृपते चक्षु अधिकरणादिरूप दुर्बलमर्थस्य याथार्थ्यग्रहणासमर्थम् । एतत् चक्षु तत्त्व न निरीक्षते । बहि प्रमाणान्येवाश्रयते इत्यर्थ । अत वदत परमार्थवादिन दैन्यमेव केवल निश्चितम् । अश्लाघ्य मरण च भवेत् । ] ।। ३२ ।। अङ्गारकेति । [ अङ्गारको मङ्गलग्रह विरुद्धो यस्य तस्य । यद्वा अङ्गारकेण विरुद्धस्य । प्रक्षीणस्य क्षीणबलस्य अथ वा नीचस्थानस्थितत्वाद्दुर्बलस्य । बृहस्पते सौम्यग्रहस्य पार्श्वे अयमलकार- पातोऽपरो धूमकेतुरिवोत्थित । एकदेशविवर्तिना वाक्यार्थोपमालकार ] ।। ३३ ।।

**वृद्धा**—आर्यं शिल्पिकुशलतयाऽवबध्नाति दृष्टिम् । न पुनस्तत् । ( अज्ज सिप्पिकुसलदाए ओबन्धेदि दिट्टिम् । ण उण सो ।)

**अधिकरणिक** —भद्रे अपि जानास्येतान्याभरणानि ।

**वृद्धा**—ननु भणामि न खलु न खल्वनभिज्ञात । अथ वा कदाऽपि शिल्पिना घटितो भवेत् । (ण भणामि ण हु ण हु अणभिजाणिदो[1] । अह वा कदा वि सिप्पिणा घडिदो भवे ।)

**अधिकरणिक** —पश्य श्रेष्ठिन् ।

> **वस्त्वन्तराणि सदृशानि भवन्ति नून**
> **रूपस्य भूषणगुणस्य च कृत्रिमस्य ।**
> **दृष्ट्वा क्रियामनुकरोति हि शिल्पिवर्ग**
> **सादृश्यमेव कृतहस्ततया च दृष्टम्** ॥ ३४ ॥

**श्रेष्ठिकायस्थौ**–[2]आर्यचारुदत्तीयान्येतानि । (अज्जचारुदत्तस्स केरकाइ एदाइ ।)

**चारुदत्त** —न खलु न खलु ।

**श्रेष्ठिकायस्थौ**—तदा कस्य । ( ता कस्स । )

**चारुदत्त** —इहात्रभवत्या दुहितु ।

**श्रेष्ठिकायस्थौ**—कथमेतानि तस्या वियोग गतानि । ( कध एदाइ ताए विओअ गदाइ ।)

**चारुदत्त** —एव गतानि । आ इदम् ।

**श्रेष्ठिकायस्थौ**—आर्य चारुदत्त अत्र सत्य वक्तव्यम् । पश्य पश्य ।

> **सत्येन सुख खलु लभ्यते सत्यालापे न भवति पातकम् ।**
> **सत्यमिति द्वे अप्यक्षरे मा सत्यमलीकेन गूहय** ॥ ३५ ॥

> (अज्ज चारुदत्त एत्थ सच्च वत्तव्वम् । पेक्ख पेक्ख ।
> सच्चेण सुह क्खु लब्भइ सच्चालावे ण होइ पावम् ।
> सच्च त्ति दुवे वि अक्खरा मा सच्च अलिएण गूहेहि ।।)

**चारुदत्त** —आभरणान्याभरणानीति न जाने । किं त्वस्मद्गृहादानीतानीति जाने ।

**शकार** —उद्यान प्रवेश्य प्रथम मारयसि । कपटकापटिकतया साम्प्रत निगूहसि । (उज्जाण पवेशिअ पढम मालेशि । कवडकावडिआए । शपद णिगूहेशि ।)

**अधिकरणिक** —आर्य चारुदत्त सत्यमभिधीयताम् ।

---

१ अणणदो अह कदापि (अन्यतोऽथ कदाऽपि) २ **चारुदत्तस्य.**

THE O L —Sir, owing to the workman's skill, they captivate my sight, but they are not the same

THE J —Madam, do you recognize these ornaments ?

THE O L —I say that I do not, I do not, indeed They are not recognized by me Or perhaps they might have been made by the same workman

THE J —See, Sreshthin —

Surely different articles ( ornaments ) resemble each other in form and beauty which are imparted by human art For all workmen copy the model which they have seen, and perfect resemblance itself is seen on account of their skilled handiwork (34)

SR & K —Then they belong to the noble Charudatta

CHAR —No, surely not !

SR & K —Then to whom do they belong ?

CHAR —To the daughter of this worthy dame here

SR & K —How did they come to be separated from her person ?

CHAR —They did in this way Oh, this—

SR. & K —Sir Charudatta, you should tell the truth in this matter For see, see—

Verily, happiness is got by ( telling ) the truth By telling the truth one does not incur sin *Sa* and *Tya* ( Truth ) only two syllables ( *akshara* ) are these, but they are imperishable ( *akshara* ) Do not hide the truth by telling a lie (35)

CHAR —I don't know this much fuss about ornaments, I only know that they were brought ( here ) from my house

SAK —First you kill her by enticing her into the garden, and now you hide it by your deceitful cunning !

THE J —Noble Charudatta, please tell the truth

---

वस्त्वन्तराणीति । [ कृत्रिमस्य कार्येण निर्वृत्तस्य रूपस्य भूषणगुणस्य अलकार-सौष्ठवस्य दस्त्वन्तराणि सदृशानि नून भवन्ति । हि शिल्पिवर्ग कारुजन दृष्ट्वा क्रियामनुकरोति । अत शिल्पिवर्गस्य कृतहस्ततया हस्तकौशलेन इति हेतुना सादृश्य शिल्पकौशलमेव दृष्टम् । काव्यलिङ्गमलकार । वसन्ततिलकम् वृत्तम् ] ॥ ३४ ॥ एव आ इद एवमिद स्मर्यते । सत्येनेत्यादि । वैतालीयम् । सत्येन सन्याश्रयणेन । सत्यालापे । सत्यमालापयतीति क्विपि सत्यालाप. । तत्र । न भवति पापकम् ।

इदानी सुकुमारेऽस्मिन्नि शङ्कं[1] कर्कशा कशा ।
तव गात्रे पतिष्यन्ति [2]सहास्माक मनोरथैः ॥ ३६ ॥

चारुदत्त —

अपापाना कुले जाते मयि पाप न विद्यते ।
यदि सभाव्यते पापमपापेन च किं मया ॥ ३७ ॥

( स्वगतम् । ) न च मे वसन्तसेनाविरहितस्य जीवितेन कृत्यम् । ( प्रकाशम् । ) भो किं बहुना ।

मया किल[3] नृशसेन लोकद्वयमजानता[4] ।
स्त्रीरत्न[5] च विशेषेण शेषमेषोऽभिधास्यति ॥ ३८ ॥

**शकार** —व्यापादिता । अरे त्वमपि भण मया व्यापादितेति । (वावादिदा । अले तुम पि भण मए वावादिदेत्ति ।)

**चारुदत्त** —त्वयैवोक्तम् ।

**शकार** —शृणुत शृणुत भट्टारका एतेन मारिता । एतेनैव सशयश्छिन्न । एतस्य दरिद्रचारुदत्तस्य शारीरो दण्डो धार्यताम् । (शुणेध शुणेध भट्टारका एदेण मालिदा । एदेण ज्जेव शशए छिण्णे । एदश्श दलिद्दचालुदत्तश्श शालीले दण्डे धालीअदु ।)

**अधिकरणिक** —शोधनक यथाऽऽह राष्ट्रिय । भो राजपुरुषा गृह्यतामय चारुदत्त ।

(राजपुरुषा गृह्णन्ति ।)

**वृद्धा**—प्रसीदन्तु प्रसीदन्त्वार्यमिश्रा । ('जो तदाणिं .चोरेहि अवहिदत्ति .' इत्यादि पूर्वोक्त पठति ।) तद्यदि व्यापादिता मम दारिका व्यापादिता । जीवतु मे दीर्घायु । अन्यच्च । अर्थिप्रत्यर्थिनोर्व्यवहार । अहमर्थिनी । तन्मुञ्चतैतम् । (पसीदन्तु पसीदन्तु अज्जमिस्सा । ता जदि वावादिदा मम दारिआ वावादिदा । जीवदु मे दीहाऊ । अण्ण च । अत्थिपच्चत्थिण्ण ववहारो । अहं अत्थिणी । ता मुञ्चध एदम् ।)

**शकार** —अपेहि गर्भदासि गच्छ । किं तवैतेन । (अवेहि गब्भदाशि गच्छ । किं तव एदिणा ।)

**वृद्धा**—हा जात हा पुत्रक । (इति रुदती निष्क्रान्ता ।) (हा जाद हा पुत्तअ ।)

**शकार** —( स्वगतम् । ) कृत मयैतस्यात्मन सदृशम् । साप्रत गच्छामि । (इति निष्क्रान्त ।) (कड मए एदश्श अत्तणो शलिशम् । शपद गच्छामि ।)

---

१ निःशङ्का २ सदा. ३ खलु ४ परलोक. ५ स्त्री रतिश्च

(For) now, most assuredly, the heavy lashes (of punishment) will fall on this delicate body of yours, and so, too, will our wishes (to acquit you as innocent fall to the ground (36)

CHAR.—

I who am born in a family of sinless persons have committed no sin But if sin is thought to be committed by me, then what avails my being sinless ? (37)

'*To himself*' And life is without purpose to me, now that I am separated (for ever) from Vasantasena (*Aloud*) Gentlemen what more need I say ?

As is said, by me who am cruel and know neither of the two worlds, a woman and especially a jewel (among women), The rest this person will say (38)

SAK —"Was killed." Oh ! say you too—"By me (she) was killed"

CHAR —You yourself have said it !

SAK —Listen, gentleman, listen ! She was killed by him ! He himself has removed your doubt ! So let capital punishment be inflicted upon this penniless Charudatta.

THE J —Sodhanaka, (it shall be) as the King's brother-in-law says Well, guards, arrest this Charudatta !

(*The guards arrest him*).

THE OLD L —Be kind, gentlemen, please be merciful (*Repeats what she had said before, viz* "*He who on that occasion because it was stolen by thieves* " *&c*) So, if my daughter has been killed, well, she has been killed But let my long-lived one, Charudatta, live Moreover, a suit lies between the complainant and the defendant, and *I* am the (real) complainant (in this matter) So please release him

SAK —Get away, you born slave, off with you ! What have you to do with him ?

THE J —Madam, you may go (now) Guards, please show her out

THE O L —O my dear, my child ! (*Exit weeping*)

---

सत्यमिति द्वे अप्यक्षरे इति स्वरूपोक्ति । 'न भवति पापस्य निमित्तमिति यस्मात्' इति प्राचीनटीका । अलीक कर्तृ । सत्यापेक्षया बह्वक्षरमपीत्यर्थ । सत्य पूर्वोक्त-स्वरूपत्वाद्द्व्यक्षरमपि कर्मभूतम् । मा निगूहय मा सवृणु इति ॥ ३५ ॥ [गृहादा-

**अधिकरणिक**—आर्य चारुदत्त निर्णये वय प्रमाणम् । शेष तु[१] राजा । तथाऽपि शोधनक विज्ञाप्यता राजा पालक—

**अय हि पातकी विप्रो न वध्यो मनुरब्रवीत् ।**
**राष्ट्रादस्मात्तु निर्वास्यो [२]विभवैरक्षतै सह ॥ ३९ ॥**

**शोधनक**—यदार्य आज्ञापयति । (इति निष्क्रम्य पुन प्रविश्य । सास्रम् ।) आर्या गतोऽस्मि तत्र । राजा पालको भणति—येनार्थकल्यवर्तस्य कारणाद्वसन्तसेना व्यापादिता त तान्येवाभरणानि गले बद्ध्वा डिण्डिम ताडयित्वा दक्षिणश्मशान नीत्वा शूले भङ्क्तेति । य कोऽप्यपर ईदृशमकार्यमनुतिष्ठति स एतेन सनिकार-दण्डेन शास्यते । ( ज अज्जो आणवेदि । अज्जा गदम्हि तहिं । राआ पालओ भणादि—जेण अत्थकल्लवत्तस्स कालदाणो वसन्तसेणा वावादिदा त ताइ[३] ज्जेव आहरणाइ गले बन्धिअ डिण्डिम ताडिअ दक्खिणमसाण णइअ सूले भज्जेवत्ति । जो को वि अवरो एरिस अकज्ज अणुचिट्ठदि सो एदिणा सणिआरदण्डेन सासीअदि ।)

**चारुदत्त**—अहो अविमृश्यकारी[४] राजा पालक । अथ वा ।

**ईदृशे व्यवहाराग्नौ मन्त्रिभि परिपातिता ।**
**स्थाने खलु महीपाला गच्छन्ति कृपणा [५]दशाम् ॥ ४० ॥**

अपि च ।

**ईदृशै श्वेतकाकीयै राज्ञ शासनदूषकै ।**
**अपापानां सहस्राणि हन्यन्ते च हतानि च ॥ ४१ ॥**

सखे मैत्रेय गच्छ । मद्[६]वचनादम्बाम[७]पश्चिमममभिवादयस्व । पुत्र च मे रोहसेन परिपालयस्व ।

**विदूषक**—मूले छिन्ने कुत पादपस्य पालनम् । (मूले छिण्णे कुदो पादवस्स पालणम् ।)

**चारुदत्त**—मा मैवम् ।

**नृणा लोकान्तरस्थाना[८] देहप्रतिकृति सुत ।**
**मयि यो वै तव स्नेहो रोहसेने स युज्यताम् ॥ ४२**

---

नीतानि न तु पुष्पकरण्डकोद्यानादिति रहस्यम् । ] अतिकापटिकतया निगूहसि । **इदानीमिति** । कशा अश्वताडिनी । [ता पतिष्यन्ति । सत्यख्यापनार्थमिति भाव । अस्माक मनोरथै तव दोषवारणरूपै ] ॥ ३६ ॥ **अपापानामिति** । [ यदि पाप सभाव्यते युष्माभि । अपापेन मया किम् । युष्माक निर्णय एव प्रमाणमित्यर्थ ] ॥ ३७ ॥ **मयेति** । स्त्री रत्नमिव । उत्कृष्टा स्त्री ॥ ३८ ॥ **अयमिति** । [अय विप्र

---

१ एतन्नास्ति क्वचित् २ रक्षितै ३ तर्हि (तत्र) ४ अविवेको अविमृ०. ५ श्रियम् ६ मम ७ अम्बा मम पश्चि०, अम्बामपि मम अभिवा०. ८ लोकोत्तर.

SAK —(*To himself*) I have done to him something which is worthy of myself ! Now I'll go (*Exit*)

THE J —Sir Charudatta, we are authorized ( merely ) to give our decision ( in a case ), but the rest ( *i e* the actual punishment ) depends on the King Still, O Sodhanaka, let king Palaka be informed ( in these words ) —

" He is a sinner But Manu has laid down that a Brahmana is not to be killed, ( so ) he might be banished from this country together with all his property intact " (39)

SO —As Your Honour orders ( *Goes out and again comes back, tearfully* ) Gentlemen, I had gone there But king Palaka says—" Tie those very ornaments round the neck of him who killed Vasantasena for the sake of a paltry sum of money, and, beating the drum, take him to the southern burning ground and have him impaled there Whoever else commits a similar crime will be visited with this ( same ) punishment, accompanied by great disgrace "

CHAR —Ah ! How thoughtlessly has king Palaka acted ! Or rather—

It is but right that kings ( *lit.* the protectors of the earth ) are reduced to pitiable plight, when pushed into such a fire of legal trials by their counsellors (40)

Also—

By such-like men ( *i e.* judges ), who would even believe that a crow ( which is black ) is white, and who disgrace the king's ( judicial ) administration, thousands of sinless ( innocent ) persons are being, and have been, killed (41)

Friend Maitreya, please go, and at my request give, for the last time, my salute to my dear mother And please look after my son, Rohasena

VID —When the root itself is cut off, how can the tree be looked after ?

CHAR —Nay, say not so

The son is the physical substitute of persons who have departed to the other world So please bestow on Rohasena that very affection which you had for me (42)

---

पातकी स्थापितदोष हि । तथाऽपि विप्र न वध्य इति मनुरब्रवीत् । तस्मादक्षतै यथास्थितै विभवै सहास्माद्राष्ट्रान्निर्वास्य विवासयितव्य । अत्र मनु —'न जातु ब्राह्मण हन्यात्सर्वपापेष्वपि स्थितम् । राष्ट्रादेन बहि कुर्यात्समग्रधनमक्षतम् ॥

विदूषक —भो वयस्य अहं ते प्रियवयस्यो भूत्वा त्वया विरहितान्प्राणा-न्धारयामि । (भो वअस्स अहं ते पिअवअस्सो भविअ तुए विरहिदाइं पाणाइं धारेमि ।)

चारुदत्त —रोहसेनमपि[1] तावद्दर्शय ।

विदूषक —एवम् युज्यते । (एव्वम् जुज्जदि ।)

अधिकरणिक —भद्र शोधनक अपसार्यतामयं बटु[2] ।

(शोधनकस्तथा करोति ।)

अधिकरणिक —क कोऽत्र भो । चाण्डालाना[3] दीयतामादेश. ।

(इति चारुदत्तं विसृज्य[4] निष्क्रान्ता सर्वे राजपुरुषा ।)

शोधनक —इत आगच्छत्वार्य । (इदो आअच्छदु अज्जो ।)

चारुदत्त —( सकरुणम् 'मैत्रेय भो किमिदमद्य' (९।२९) इत्यादि पठति । आकाशे । )

विषसलिलतुलाग्निप्रार्थिते मे विचारे
क्रकचमिह शरीरे वीक्ष्य दातव्यमद्य ।
अथ रिपुवचनाद्वा ब्राह्मणं मां निहंसि
पतसि नरकमध्ये पुत्रपौत्रै समेत ॥ ४३ ॥

अयमागतोऽस्मि ।

( इति निष्क्रान्ता सर्वे । )

[5]इति व्यवहारो नाम नवमोऽङ्क[6] ।

---

मौण्ड्य प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते ।' इति ॥ ३९ ॥ निकार विप्रकार । अधिक्षेप इति यावत् । तेन सहित दण्ड तेन । ] ईदृश इति । [ ईदृशे व्यवहार एव अग्नि तस्मिन् । कुदृष्टव्यवहाररूपाग्नौ इत्यर्थं । मन्त्रिभि परिपातिता महीपाला कृपणा दीना दशा गच्छन्ति इति स्थाने युक्त खलु ] ॥ ४० ॥ ईदृशै रिति । [ ईदृशै श्वेतकाकीयै श्वेत काक इति वितताथँ वाक्य श्वेतकाकीयम् । 'इवे प्रतिकृतौ' इत्यधिकारस्थितेन 'समासाच्च तद्विषयात्' इत्यनेन छप्रत्यय । तद्वा-दिन श्वेतकाकीया विततार्थदर्शिनस्तै । शासनदूषकै । अधिकरणिकै । एतन्मनसि कृत्वैवोक्त प्रथमाङ्के 'व्यवहारदुष्टता' इति । अपापानामनपराधिना सहस्राणि हन्यन्ते हतानि च । 'श्वा च एत हरिणश्च काकश्च तत्सदृशै । सादृश्य च स्वामिसेवापरत्वभयचकितत्वेङ्गितज्ञत्वैर्बोध्यम्' इति केचित् । उत्पातकल्पैरिति पृथ्वीधर ] ॥ ४१ ॥ नृणामिति । [ लोकान्तरस्थाना मृतानाम् । सुत देहप्रतिकृति स्वप्रतिनिधि तथा च श्रुति —'सा जाया जाया भवति यदस्या जायते पुन ' इति ।

---

१ मपि च २ बहि ३ चण्डा०, ४ विसर्ज्य ५ इति मृच्छकटिके प्र०, ०कटिकप्र०, ६ अङ्क समाप्त

VID.—O friend, shall I ( be able to ) support life separated from you, having been your dear friend ( so long ) ?

CHAR —At any rate, please let me have a sight of Rohasena

VID —Quite so, that is all right.

THE J —Well, Sodhanaka, let this fellow be removed ( from here )

( Sodhanaka *does so* )

THE J —Ho ! Who is there ? Let orders be issued to the Chandalas

( *Then exeunt all the* officers *leaving alone* Charudatta )

SO —Sir, please come this way

CHAR —( *Sorroufutly recites the verse beginning 'O Maitreya, what is this to day' etc Then in the void* )—

After my case had been investigated ( decided ), by means of ( the ordeals of ) poison, water, balance, and fire, then with justice you might have to-day ordered a saw to be used on this body of mine But as you are killing me, a Brahmana, relying simply on the words of my enemy, you will ( surely ) fall into hell, along with your sons and grandsons ! (43)

Here I am coming !

( *Exeunt all* )

*Thus ends Act IX , styled*

'The Trial'

---

'अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरद शतम् ॥' इति च ] ॥ ४२ ॥ विषसलिलेति । अथ विचारनिरपेक्ष नृपति हृदि स्वीकृत्य वदति । [ विष विषपान सलिल सलिलमज्जन तुला तुलारोहण अग्नि अग्निधारणमित्येतै दिव्यै प्रार्थिते निर्णयार्हे इत्यर्थ । मे मम विचारे व्यवहार विमर्शे । इह मम शरीरे क्रकच वीक्ष्य दातव्यम् । अथ वा रिपुवचनात् शकार-वचनात् मा ब्राह्मण निहसि अत पुत्रपौत्रै समेत नरकमध्ये पतसि पतिष्यसि । अनेन भावि मरण सूच्यते । मालिनी छन्द ] विषादिपरीक्षाप्रार्थितेऽन्विष्टे । विचारे । क्रकच दातव्यम् । अहं नव्य ॥ ४३ ॥

इति व्यवहारो नाम नवमोऽङ्क ।

# दशमोऽङ्कः ।

(तत प्रविशति [1]चाण्डालद्वयेनानुगम्यमानश्चारुदत्त ।)

**उभौ**—

**तत्किं न कलय कारण नववधबन्धनयने निपुणौ ।**
**अचिरेण शीर्षच्छेदनशूलारोपेषु कुशलौ स्व ॥ १ ॥**

अपसरतार्या अपसरत । एष आर्यचारुदत्त —

**दत्तकरवीरदामा गृहीत आवाभ्या वध्यपुरुषाभ्याम् ।**
**दीप इव मन्दस्नेह स्तोक स्तोक क्षय याति ॥ २ ॥**

(तक्कि ण कलअ कालण णववहबन्धणअणे णिउणा ।
अचिलेण[2] शीशछेअणशूलालोवेशु कुशल ॥
ओशलध अज्जा ओशलध । एशे अज्जचालुदत्ते—
दिण्णकलवीलदामे गहिदे अम्हेहिं बज्झपुलिसेहिं[3] ।
दीवे व्व मन्दणेहे थोअ थोअ खअ जादि ॥)

**चारुदत्त** —(सविषादम् ।)

**नयनसलिलसिक्त पांशुरूक्षीकृताङ्ग[4]**
**पितृवनसुमनोभिर्वेष्टित मे शरीरम् ।**
**विरसमिह रटन्तो[5] रक्तगन्धानुलिप्त**
**बलिमिव परिभोक्तु वायसास्तर्कयन्ति ॥ ३ ॥**

---

[ इत समाप्ति यावत्कार्यफलयोगरूप निर्वहणसधि । वसन्तसेनासज्ञालाभेन चारुदत्तस्य मोक्ष आर्यकस्य राज्यप्राप्ति शर्विलकस्य सगमेन चारुदत्तस्य सर्वार्थसिद्धिश्चाङ्कस्य प्रतिपाद्यविषय । तत्र तावद्वध्यभूमि नीयमानस्य चारुदत्तस्य प्रवेश प्रस्तूयते—तत प्रविशतीत्यादिना । तत्र चाण्डालावन्योन्य वदत । **तत्किमिति** । तत् किमिति कारण वधनिमित्त न कलय विचारय । नव वध बन्धश्च तयो । यद्वा नव वधाय बन्धस्तस्य नयने प्रापणे निपुणौ स्व । स्पष्टमन्यत् ॥ १ ॥ **दत्तेति** दत्त करवीराणा दाम वध्यस्रक् यस्य स । आवाभ्या वधे नियुक्त वध्य । वध्यौ पुरुषौ वध्यपुरुषौ । यद्वा वध्यग्राहकौ पुरुषौ इति मध्यमपदलोपी समास । ताभ्या गृहीत । मन्दस्नेहाऽल्पतैलो दीप इव स्तोक स्तोक क्षय नाश याति ॥ २ ॥

---

१ चण्डा० २ अइलेण ३ वज्ज ४ रुक्षी० ५ लगन्त

# ACT X.

( *Then enter* Charudatta, *accompanied by two Chandalas* ).

BOTH—

What then ! Seek not the reason ( It is this, that ) we are experts in chaining and leading a recently condemned criminal to the gallows, and are skilled in cutting off his head or impaling him without loss of time (1)

Make way, gentlemen, make way ! Here's the worthy Charudatta—

On whom are put garlands of *karavira* flowers and who is in the custody of us two, his executioners, he is now slowly losing lustre, like a lamp with its oil exhausted (2)

CHAR —( *Mournfully* )

These crows, cawing harshly near by, are expecting to feed on my body as though it were an oblation,—my body which is drenched with tears, has its limbs soiled with dust, is covered with ( garlands of ) funeral flowers, and is besmeared with red sandal paste (3)

---

**नयनेति** । इह विरस कर्कश यथा तथा रटन्त शब्दायमाना वायसा नयनसलिलै-रश्रुभि सिक्त पाशुना रथ्याधूल्या रूक्षीकृतानि अङ्गानि यस्य तत्तथा । पितृवन श्मशान तत्सबन्धिसुमनोभि पुष्पमालाभि वेष्टित मे शरीर बलिमिव परिभोक्तु तर्कयन्ति उत्प्रेक्षन्ते । मालिनी वृत्तम् ] ॥ ३ ॥ **किमिति** । [ काल कृतान्त स एव परशु तस्य धाराभि छिद्यमान सत्पुरुषम् । अपि च सुजना एव शकुना पक्षिण स्तेषामधिवासम् । पुरुष एव द्रुम पुरुषद्रुम । सज्जनाना छायाकरत्वात्पुरुषद्रुम । तमेत किं पश्यत ॥ ४ ॥ **सवति** । सर्वगात्रेषु विन्यस्तैर्दत्तै रक्तचन्दनहस्तकै पञ्चाङ्गुलिचिह्नै । हस्ता एव हस्तका । इवार्थे कन् । पिष्टचूण । पिष्टरजोभि अवकीर्ण । ‘ पिष्टचूर्णाभ्यामवकीर्ण व्याप्त । पिष्ट तण्डुलाना चूर्ण तिलानाम् ’ इति लल्लादीक्षिता । पिष्टचूर्ण श्यामतण्डुलचूर्णमिति पृथ्वीधर । अह पुरुप सन् पशूकृत । अपशु पशुयथा सपद्यते तथा कृत । ] पशुदेवतार्थ छागादि ॥ ५ ॥ **अमी इति** । [ अमी हि पौरा मदुपेत मया प्राप्तमेतद्वचमन दृष्ट्वा मर्त्यं मनुष्य-धर्माण धिगस्तु इति उक्त्वा उपजातबाष्पा मा व्यसनाद्रक्षितुमशक्नुवन्त स्वर्गं लभस्वेति वदन्ति । ] मदिति पञ्चम्येकवचनान्तकम् । मदुपगतमीदृशमवस्थान्तर

**चाण्डालौ**—अपसरतार्या अपसरत ।

किं पश्यथ छिद्यमानं सत्पुरुषं कालपरशुधाराभिः ।
सुजनशकुनाधिवासं सज्जनपुरुषद्रुममेतम् ॥ ४ ॥

आगच्छ रे चारुदत्त आगच्छ । (ओशलध अज्जा ओशलध ।)

(किं पेक्खध छिज्जन्तं शप्पुलिशं कालपलशुधालाहिं ।
शुअणशउणाधिवाशं शज्जणपुलिशद्दुमं एदम् ॥

आअच्छ ले चालुदत्ता आअच्छ ।)

**चारुदत्तः**—पुरुषभाग्यानाम[1]चिन्त्या[2] खलु व्यापारा यदहमीदृशीं दशामनुप्राप्तः ।

सर्वगात्रेषु विन्यस्तै रक्तचन्दनहस्तकैः ।
पिष्टचूर्णावकीर्णश्च पुरुषोऽहं पशूकृतः ॥ ५ ॥

(अग्रतो निरूप्य ।) अहो तारतम्यं नराणाम् । (सकरुणम् ।)

अमी हि दृष्ट्वा [3]मदुपेतमेतन्मर्त्यं धिगस्त्वित्युपजातबाष्पाः[4] ।
अशक्नुवन्तः परिरक्षितुं मां स्वर्गं लभस्वेति वदन्ति पौराः ॥ ६ ॥

**चाण्डालौ**—अपसरतार्या अपसरत । किं पश्यथ ।

इन्द्रः प्रवाह्यमाणो गोप्रसवः संक्रमश्च ताराणाम् ।
सुपुरुषप्राणविपत्तिश्चत्वार इमे न द्रष्टव्याः ॥ ७ ॥

(ओशलध अज्जा ओशलध । किं पेक्खध ।
इन्दे प्पवाहिअन्ते गोप्पसवे शकमे[5] च तालाणम् ।
शुपुलिशपाणविपत्ती चत्तालि इमे ण दट्टव्वा ॥)

**एकः**—अरे आहीन्त पश्य पश्य ।

नगरीप्रधानभूते वध्यमाने कृतान्ताज्ञया ।
किं रोदित्यन्तरिक्षमथ [6]वाऽनभ्रे पतति वज्रम् ॥ ८ ॥

(हण्ड[7] आहिन्ता पेक्ख पेक्ख ।
णअलीपधाणभूदे वज्झीअन्ते कदन्तअण्णाए ।
किं लुअदि अन्तलिक्खे अणब्भे पडदि वज्जे ॥)

**द्वितीयः**—अरे गोह ।

---

दृष्ट्वेति वाऽर्थः ॥ ६ ॥ इन्द्र इत्यादि । गाथा । इन्द्रः [इन्द्रध्वजः] प्रवास्यमानो यद्वा प्रवाह्यमाणः न द्रष्टव्यः । [ 'उत्थापयेत्तूर्यरवैः सर्वलोकस्य वै पुरः । रहो विसर्जयेत्केतुं विशेषोऽयं प्रपूजने ॥ ' इति ।] गोप्रसवो [गोप्रसूतिः] नितरां च

---

१ भावाना २ अविचिन्त्या ३ मम देहमेत ४ खेदा ५ सकम. ६ अनभ्रे ७ हण्डे.

CH —Make way, gentlemen, make way !

Why should you look at this good man being hewn asunder by the edge of Death's axe, this tree in the shape of a righteous man, being the residence of birds in the form of virtuous persons ? ( 4 )

Come, O Charudatta, come away !

CHAR —The workings of a person's destiny are verily inscrutable, since I have been reduced to such a condition

By the prints of ( the extended ) hand dipped in red-sandal paste, impressed over all my limbs and covered over with rice flour and sesamum-powder, I, a man, am turned into an animal ( about to be slaughtered ) (5)

( *Looking before him* ) Oh, the commonsense of the people ! (*mournfully* )

Here these citizens, seeing the state to which I have now fallen, are saying ' Fie upon this moral lot,' with tears welling up ( in their eyes ), and being unable to save me, are blessing me with words ' May you go to heaven !' ( 6 )

THE TWO CH —Make way, sirs, make way ! What are you seeing ?

The Indra pole being carried away, the delivery of a cow, the falling of a star, and the execution of a virtuous man,—these four ought not to be looked at ! ( 7 )

ONE CH —Eh, Ahinta see, see !

When the chief man of the city is about to be slain by the fiat of the Fate, is the sky weeping, or is the thunderbolt falling ( even ) though there are no clouds ? ( 8 )

THE SECOND CH —O Goha

---

ताराणाम् । सत्पुरुषस्य प्राणविपत्तिर्नाश । चत्वार इमे न द्रष्टव्या ॥ ७ ॥ हण्डे इति नीचसबोधने । **नगरीत्यादि** । गाथा । नगरीप्रधानभूते [ चारुदत्ते ] कृतान्ताज्ञया [ विधिनियोगेन । यद्वा कृतान्तसदृशपालकाज्ञया । किं अन्तरिक्ष रोदिति अथ वा अनभ्र मेघरहित तथा यथा वज्र पतति । ] वध्यमाने नगरीप्रधानवधो वज्र इवे-त्युत्प्रेक्षा ॥ ८ ॥ **न चेनि** । गाथा । स्त्रीसमूहमेघान्निपतति । नयनाम्बु कर्तृ । धाराभि ॥ ९ ॥ **वध्ये नीयमान इति** । आर्या । वध्ये वध्यभूमि नीयमाने । रेणु रथ्यातो नोन्नमति नोद्गच्छति ॥ १० ॥ एता इति । [ एता हर्म्यगता स्त्रिय पुन वातायनार्धेन वातायनैकदेशेन विनिसृतानि आस्यानि यासा ता निर्गतवदना हा

न च रोदित्यन्तरिक्ष नैवानभ्र पतति वज्रम् ।
महिलासमूहमेघान्निपतति नयनाम्बु धाराभि ॥ ९ ॥

अपि च ।

वध्ये नीयमाने जनस्य सर्वस्य रुदत ।
नयनसलिलै सिक्तो रथ्यातो नोन्नमति रेणु ॥ १० ॥

(अले[1] गोहा ।

ण अ लुअदि अन्तलिक्खे णेअ अणब्भे पडदि वज्जे ।
महिलाशमूहमेहे निवडदि णअणम्बु धाराहि ॥

अवि अ ।

वज्झम्मि णीअमाणे जणश्श शव्वश्श लोदमाणश्श ।
णअणशलिलेहि शित्ते लच्छादो णं उण्णमइ लेणू ॥)

**चारुदत्त** —(निरूप्य सकरुणम् ।)

एता पुनर्हर्म्यगता स्त्रियो मा वातायनार्धेन विनि सृतास्या[2] ।
हा चारुदत्तेत्यभिभाषमाणा बाष्प प्रणालीभिरिवोत्सृजन्ति ॥ ११ ॥

**चाण्डालौ**—आगच्छ रे चारुदत्त आगच्छ । इद घोषणस्थानम् । आहत डिण्डिमम् । घोषयत घोषणाम् । (आअच्छ ले चालुदत्ता आअच्छ । इम घोषणट्ठाणम् । आहणध डिण्डिमम् । घोशेध घोषणम् ।)

**उभौ**—श्रृणुतार्या श्रृणुत । एष सार्थवाहविनयदत्तस्य नप्ता सागरदत्तस्य पुत्रक आर्यचारुदत्तो नाम । एतेन किलाकार्यकारिणा गणिका वसन्तसेनाऽर्थकल्यवर्तस्य कारणाच्छून्य पुष्पकरण्डकजीर्णोद्यान प्रवेश्य बाहुपाशबलात्कारेण मारितेत्येष सलोप्त्रो गृहीत स्वय च प्रतिपन्न । ततो राज्ञा पालकेन वयमाज्ञप्ता एत मारयितुम् । यद्यपर ईदृशमुभयलोकविरुद्धमकार्यं करोति तमपि राजा पालक एवमेव शास्ति । ( शुणाध[3] अज्जा शुणाध । एशे शत्थवाहविणअदत्तश्श णत्थिके शाअलदत्तश्श पुत्तके[4] अज्जचालुदत्ते णाम । एदिणा किल अकज्जकालिणा गणिआ वशन्तशेणा अत्थकल्लवत्तश्श कालणादो शुण्ण पुप्फकलण्डअजिण्णुज्जाण पवेशिअ बाहुपाशबलक्कालेण मालिदे त्ति एशे शलोत्ते गहिदे शअ अ पडिवण्णे । तदो लण्णा पालएण अम्हे आणत्ता एद मालेदुम् । जदि अवले ईदिश उभअलोअविलुद्ध अकज्ज कलेदि त पि लाआ पालए एव्व ज्जेव शाशदि ।)

**चारुदत्त** —(सनिर्वेद स्वगतम् ।)

---

चारुदत्तेति अभिभाषमाणा प्रणालीभिरिव स्थूलधाराभिरित्यर्थ । बाष्पमुद्गिरन्ति उत्सृजन्ति । इन्द्रवज्रा वृत्तम् ] ॥ ११ ॥ [ मखेति । मखाना यज्ञाना शतै परिपूत

---

१ अले ले. २ विनि शृताक्ष्य ३ शुणध ४ पुश्तके

The sky is not weeping, nor is the thunderbolt falling in the absence of clouds (But) these are the tears, flowing in torrents, from the clouds in the form of the assembled ladies (9)

Moreover —

As the condemned man is being led on, the dust does not rise up from the streets, being sprinkled over with the tears of all people who are weeping (10)

CHAR —( *Observing, mournfully* )

And these ladies in their mansions, putting forth their faces through the (lower) halves of the windows, are saying, with reference to me, 'Alas, O Charudatta!' and are shedding tears by conduits as it were (*i e* in profusion) (11)

THE TWO CH —Come, O Charudatta, come along! Here's a proclamation station Beat the drum, and repeat aloud the proclamation!

BOTH—Listen gentlemen, listen! This is the grandson of the merchant Vinayadatta, and the son of Sagaradatta, who is called the worthy Charudatta By him, who has done an evil deed, the courtesan Vasantasena was enticed into the old deserted *Pushpakarandaka* garden for the sake of a trifle, *viz* her money, and was there killed by being forcibly strangled with the noose of his arms, then he was caught with the booty, and himself also confessed (his crime) Thereupon King Palaka ordered us to slay him If anyone else commits a similar crime, which is good neither for this world nor for the next, him too King Palaka will condemn similarly (to death)

CHAR —( *With dejection, to himself* )

---

पवित्र मे गोत्रं पुरस्तात्पूर्वस्मिन्काले सदसि यज्ञमण्डपे निबिडानि घनानि चैत्यानि आयतनानि तत्र ब्रह्मणा वेदाना घोषै । चित्यस्य चयनीयस्याग्ने सबन्धिभिश्चैत्यै इति केचित् । उद्भासितम् । मरणदशाया वर्तमानस्य मम तद्गोत्र पापै असदृशमनुष्यै नीचैश्चाण्डालै घोषणायामपराधप्रख्यापनस्थाने घुष्यते । मालिनी वृत्तम् ] ॥ १२ ॥ उद्वीज्य उद्वेग कृत्वा । शशीति । [ शशिन चन्द्रस्य विमलमयूखा धवलकिरणा इव शुभ्रा दन्ता यस्यास्तत्सबुद्धि । सुरुचिरो य विद्रुम प्रवाल तत्सदृश अधरोष्ठो यस्यास्तादृशि । तव वदनोत्पन्नममृत निपीय अवश परवशोऽह अयशोरूप विष कथ पिबामि । विषमालङ्कार । पुष्पिताग्रा वृत्तम् ] ॥ १३ ॥ एष इति । [ एष चारुदत्त गुणा एव रत्नानि तेषा निधि । सज्जनदुखानामुत्तरण-

मखशतपरिपूत गोत्रमुद्भासित मे
सदसि निबिडचैत्यब्रह्मघोषै पुरस्तात् ।
मम मरणदशाया वर्तमानस्य पापै-
स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ।। १२ ।।

(उद्वीज्य[1] कर्णौ पिधाय ।) हा प्रिये वसन्तसेने ।

शशिविमलमयूखशुभ्रदन्ति[2] सुरुचिरविद्रुमसनिभाधरोष्ठि[3] ।
तव वदनभवामृत निपीय कथमवशो ह्ययशोविष पिबामि ।। १३ ।।

उभौ—अपसरतार्या अपसरत ।

एष गुणरत्ननिधि सज्जनदु खानामुत्तरणसेतु ।
असुवर्ण मण्डनकमपनीयतेऽद्य नगरीत ।। १४ ।।

अन्यच्च ।

सर्व खलु भवति लोके लोक सुखसस्थिताना चिन्तायुक्त ।
विनिपतिताना नराणा प्रियकारी दुर्लभो भवति ।। १५ ।।

(ओशलध अज्जा ओशलध

एशे गुणलअणणिही शज्जणदुक्खाण उत्तलणशेदू ।
अशुवण्ण मण्डणअ अवणीअदि अज्ज णअलीदो ।।

अण्ण च ।

शव्वे क्खु होइ लोए लोए शुहशठिदाण तत्तिल्ले[4] ।
विणिवडिदाण[5] णलाण पिअकाली दुल्लहो होदि ।।)

**चारुदत्त**—(सर्वतोऽवलोक्य ।)

अमी हि वस्त्रान्तनिरुद्धवक्त्रा[6] प्रयान्ति मे दूरतर वयस्या ।
परोऽपि बन्धु समसस्थितस्य मित्र न कश्चिद्विषमस्थितस्य ।। १६ ।।

**चाडालौ**—अपसारण कृतम् । विविक्तो राजमार्ग । तदानयतैत दत्तवध्य-चिह्नम् । (ओशालण किदम् । विवित्त लाअमग्गम् । ता आणेध एद दिण्णवज्झ-चिण्हम् ।)

(चारुदत्तो नि श्वस्य 'मैत्रेय भो किमिदमद्य' (९।२९) इत्यादि पठति ।)

(नेपथ्ये ।)

हा तात हा प्रियवयस्य । (हा ताद हा पिअवअस्स ।)

**चारुदत्त**—(आकर्ण्य सकरुणम् ।) भो स्वजातिमहत्तर इच्छाम्यह भवत सकाशात्प्रतिग्रह कर्तुम् ।)

---

१ उद्वीक्ष्य २ दन्त ३ धरोष्ठ, धरोष्ठि ४ तत्तिल्ला ५ वडिदाण ६ न्तररुद्ध०

My family, which was formerly sanctified by ( the performance of ) hundreds of sacrifices, and made illustrious by the chanting of Vedic hymns in crowded halls in sacrificial assemblies, is now being loudly named in the proclamation and polluted by ( such ) persons, unholy and quite different from them ( my ancestors ), as I am now a man condemned to death ( 12 )

( *Shuddering and covering up his ears* ) Oh, dear Vasantasena !

O you, with teeth white like the pure rays of the moon and with the lower lip resembling the beautiful coral, having drunk the nectar from your mouth, how can I, who am ( so ) helpless, ( now ) swallow the poison ( in the form ) of ignominy ? ( 13 )

BOTH—Make way, sirs, make way !

This store of the jewels ( *or* ocean ) of virtues, ( this ) bridge for the good to cross ( the ocean of ) their miseries, ( this ) ornament, though not one of gold,—this person is to-day being taken away from the city ( 14 )

Moreover —

Verily, in this world, all interest themselves in other persons when these ( latter ) are in easy circumstances But it is difficult to find one who will show kindness to men who have fallen (15)

CHAR —( *Looking on all sides* )

These friends of mine, covering up their faces with the ends of their garments, are going further away from me Even a stranger is ( *i e* behaves like ) a relative towards a person in normal circumstances, but no one befriends a man whose circumstances are reversed ( 16 )

THE TWO CH —We have turned away ( the crowd ) The high road is now clear So bring him up, with the signs of the condemned put on

( Charudatta *sighs and recites the verse beginning ' O Maitreya, what is this to day ' &c* )

( *Behind the curtain* )

Alas, father ! Alas, dear friend !

CHAR —( *Listening, mournfully* ) O you, the chief of your caste, I wish to ask a favour at your hands

**चाण्डालौ**—किमस्माक हस्तात्प्रतिग्रह करोषि । ( किं अम्हाण हत्थादो पडिग्गह कलेशि ।)

**चारुदत्त** —शान्त पापम । नापरीक्ष्यकारी[1] दुराचार पालक इव चाण्डाल । तत्परलोकार्थं[2] पुत्रमुख द्रष्टुमभ्यर्थये ।

**चाण्डालौ**—एव क्रियताम् । (एव्व कलीअदु ।)

(नेपथ्ये ।)

हा तात हा पित । (हा ताद हा आवुक ।)

(चारुदत्त श्रुत्वा सकरुण 'भो स्वजातिमहत्तर' इत्यादि पठति ।)

**चाण्डालौ**—अरे पौरा क्षणमन्तर दत्त । एष आर्यचारुदत्त पुत्रमुख पश्यतु । (नेपथ्याभिमुखम् ।) आर्य इत इत । आगच्छ रे दारक आगच्छ । (अले पउला[3] खण अन्तल देध । एशे अज्जचालुदत्ते पुत्तमुह पेक्खदु । अज्ज इदो इदो । आअच्छ ले दालआ आअच्छ ।)

(तत प्रविशति दारकमादाय विदूषक ।)

**विदूषक** —त्वरता त्वरता भद्रमुख । पिता ते मारयितु नीयते । ( तुवरदु तुवरदु भद्दमुहो । पिदा दे मारिदु णीअदि ।)

**दारक** —हा तात हा पित । (हा ताद हा आवुक ।)

**विदूषक** —हा प्रियवयस्य कुत्र मया त्व द्रष्टव्य. । ( हा पिअवअस्स कहिं मए तुम पेक्खिदव्वो ।)

**चारुदत्त** —( पुत्र मित्र च वीक्ष्य । ) हा पुत्र हा मैत्रेय । ( सकरुणम् । ) भो कष्टम् ।

**चिर खलु भविष्यामि परलोके पिपासित ।**
**अत्यल्पमिदमस्माक निवापोदकभोजनम्[4] ॥ १७ ॥**

किं पुत्राय प्रयच्छामि । ( आत्मानमवलोक्य[5]। यज्ञोपवीत दृष्ट्वा ।) आ इद तावदस्ति मम च ।

**अमौक्तिकमसौवर्णं ब्राह्मणाना विभूषणम् ।**
**देवताना पितृणा च भागो येन प्रदीयते ॥ १८ ॥**

( इति यज्ञोपवीत ददाति । )

---

सेतु उत्तरणसाधनम् । असुवर्णं मण्डनमद्य नगरीतोऽपनीयते ॥१४॥ **सर्व इति** । लोके सर्व खलु सुखसस्थिताना सुखिना चिन्तायुक्त क्षेमचिन्तनपर भवति । चिन्तापर उपयुक्त इत्यर्थ इति पृथ्वीधर । विनिपतितानामापन्नाना नराणा प्रियकारी दुर्लभ

---

१ नापरीक्षितकारी. २ ०कार्थे ३ पउला जणा ४ भाजनम् ५ वीक्ष्य

THE TWO CH —What ! You would take a favour from *our* hands ?

CHAR.—Heaven forbid ! ( Still ), a Chandala is not like the ill behaved king Palaka, who acts without due investigation So, I request you for getting a ( last ) sight of my son's face, so that I might ( easily ) obtain heaven,

THE TWO CH —You may do so

( *Behind the curtain* )

Alas, Alas, father !

( Charudatta, *hearing it, mournfully repeats—' O you the chief of your caste ' &c* )

THE TWO CH —Ye citizens, make room for a moment Let this worthy Charudatta have a look at his son s face ( *Facing the curtain* ) Sir, ( come ) this way, in this direction ! Come, boy, come up here !

( *Then enter* Vidushaka *with the* boy )

VID —Make haste, my sweet-faced one, make haste , your father is being taken for being killed !

THE SON—Oh, papa ! Oh, father !

VID —Oh, dear friend ! Where shall I see you ( again ) ?

CHAR —( *Seeing his* son *and his* friend ) Ah, my son ! Ah, Maitreya ! ( *Mournfully* ) Oh ! Alas !

Verily I shall have to remain thirsty for a long time in the next world , ( for ) very small, indeed, would be this libation of water offered to me after death ( as the boy's hands are so small ) (17)

What shall I bequeath to my son ? ( *Looking over his own body and seeing his sacred thread* ) Ah, yes ! Here's a thing which I do possess—

Which is an ornament to the Brahmanas, though not made of pearls or of gold, and through which oblations are offered to the gods and the manes (18)

( *He hands over his sacred thread* )

---

भवति ।] ॥ १५ ॥ [अमी होति । अमी हि मे वयस्या वस्त्रान्तेन निरुद्ध सवृत वक्त्र यैस्तथा सन्त दूरतर प्रयान्ति । समसस्थितस्य सुखावस्थात्रस्थितस्य परोऽपि बन्धुर्भवति । उपजाति ]॥१६॥ हा आनुक पित.। चिरमिति । [पिपासित तृषित ।

**चाण्डाल** —आगच्छ रे चारुदत्त आगच्छ। (आअच्छ ले चालुदत्ता आअच्छ।)

**द्वितीय** —अरे आर्यचारुदत्त निरुपपदेन नाम्नाऽऽलपसि। अरे पश्य।

> **अभ्युदयेऽवसाने तथैव रात्रिदिवमहतमार्गा।**
> **उद्दामेव किशोरी नियति खलु प्रत्येषितु याति ॥ १९ ॥**

अन्यच्च।

> **शुष्का व्यपदेशा अस्य कि विनमितमस्तक न कर्तव्यम्।**
> **राहुगृहीतोऽपि चन्द्रो न वन्दनीयो जनपदस्य ॥ २० ॥**

(अले अज्जचालुदत्त णिलुववदेण णामेण आलवेशि। अले पेक्ख[1]।

> अब्भुदए अवशाणे तहेअ[2] लत्तिदिव अहदमग्गा।
> उद्दामे व्व किशोली णिअदी क्खु पडिच्छिदु[3] जादि ॥

अण्ण च।

> शुक्खा ववदेशा[4] शे किं विणमिअमत्थए[5] ण काअव्वम्।
> लाहुगहिदे वि चन्दे ण वन्दणीए जणपदश्श ॥)

**दारक** —अरे रे चाण्डालौ कुत्र मम पितर नयथ। (अरे[6] रे चाण्डाला कहिं मे आवुक णेध।)

**चारुदत्त** — वत्स।

> **असेन बिभ्रत्करवीरमाला स्कन्धेन शूल हृदयेन शोकम्।**
> **आघातमद्याहमनुप्रयामि शामित्रमालब्धु[7]मिवाध्वरेऽज ॥ २१ ॥**

**चाण्डाल** —दारक।

> **न खल्वावा चाण्डालौ चाण्डालकुले जातपूर्वावपि।**
> **येऽभिभवन्ति साधु ते पापास्ते च चाण्डाला ॥ २२ ॥**

(दालआ

> ण हु अम्हे [8]चाण्डाला चाण्डालकुलम्मि जादपुव्वा वि।
> जे अहिभवन्ति शाहु ते पावा ते अ चाण्डाला ॥)

**दारक** —तत्किमर्थं मारयथ पितरम्। (ता कीस मारेध आवुकम्।)

**चाण्डाल**.—दीर्घायु अत्र राजनियोग खल्वपराध्यति न खल्वावाम्। (दीहाओ अत्त लाअणिओओ क्खु अवलज्झदि ण क्खु अम्हे।)

---

१ पेक्ख पेक्ख २ तह अ (तथा च) ३ पडिक्खिदु (परीक्षितु) ४ वि वदेशा (अपि प्रदेशा). ५ मत्थएण (मस्तकेन), पणमिअ मत्थके (प्रणम्य मस्तके) ६ अले ले ७ आलब्ध ८ चण्डाला

CH —Come, O Charudatta, come along !

THE SEC CH —Ah, you are calling the worthy Charudatta without his title ( of *Arya*, 'the worthy' ) ? See, you !—

Unchecked in its course, like a female colt broken loose from the reins, Fate verily comes ( thundering along ) in pursuit of a man, by day and by night, in prosperity as well as in adversity (19)

Moreover—

Have his titles ( noble appellations ) become empty ? Should we not bow down our heads to him ? ( We should ) Does not the moon, though eclipsed by Rahu, deserve to be saluted by the people in general ? ( 20 )

THE SON—Oh, you Chandalas, where are you taking my father ?

CHAR —Child !

Bearing the garland of *karavira* flowers round my neck, the iron spike on my shoulder and grief in my heart, I am to day going to the place of execution, like the goat ( at a sacrifice being led ) to the place of immolation for being killed ( 21 )

CH —Boy !

Verily we are not ( to be called ) Chandalas, though we have been born in a Chandala family Those who presecute a virtuous man,—*they* are the sinners, and *they* the Chandalas ( 22 )

SON—Then why are you killing my father ?

CH —My long-lived boy, it is the king's command that commits the wrong ( is to blame ), and not we two

---

इद पुत्रदत्त निवापोदकमेव भोजनमस्माकमत्यल्पमपर्याप्त भविष्यति ] ।। १७ ।। **अमौक्तिकमिति** । [असौवर्णमसुवर्णघटितम् । येन उपवीतेन प्राचीनोपवीतरूपेण] ।।१८।। निरुपपदेन आर्य इत्यादिविशेषणशून्येन । **अभ्युदय इत्यादि**। गाथा। [अवसाने सपदुपरमे आपदि इत्यर्थं । तथैव रात्रिदिवमहतमार्गा । अव्याहतप्रसिक्ता इत्यर्थ । उद्दामा उच्छिन्नबन्धना किशोरी बालाश्वा इव नियतिर्दैव खलु प्रत्येषितु पुरुषमाक्रमितु यानि । प्रतीष्ट (इष्ट पुरुष) इति केचिच्छायामिच्छन्ति] ।। १९ ।। **शुष्का इत्यादि**। गाथा। [अस्य चारुदत्तस्य व्यपदेशा शोभननामादय कि शुष्का अनेनापवादेन क्षीणा । अस्य विनमितमस्तक किं न कर्तव्यम् । कर्तव्यमेव। राहुगृहीतश्चन्द्रो जनपदस्य न वन्दनीय इति काकु । वन्दनीय एवे यर्थं । ] शुष्का अपि प्रदेशा अङ्गानि।

**दारक**—व्यापादयत माम् । मुञ्चत पितरम् । ( वावादेध मम् । मुञ्चध आवुकम् । )

**चाण्डाल**—दीर्घायु एव भणश्चिर मे जीव । (दीहाओ एव भणन्ते चिल मे जीव ।)

**चारुदत्त**—(सास्र पुत्र कण्ठे गृहीत्वा ।)

**इद तन्स्नेहसर्वस्व सममाढ्यदरिद्रयो ।**
**[1]अचान्दनमनौशीर हृदयस्यानुलेपनम् ॥ २३ ॥**

( 'असेन बिभ्रत्—' ( १०।२१ ) इत्यादि पुन पठति । अवलोक्य स्वगतम् । 'अमी हि वस्त्रान्तनिरुद्धवक्त्रा ' (१०।१६) इत्यादि पुन पठति ।)

**विदूषक**—भो भद्रमुखौ मुञ्चत प्रियवयस्य चारुदत्तम् । मा व्यापादयतम् । (भो भद्दमुहा मुञ्चव पिअवअस्स चालुदत्तम् । म वावादेध ।)

**चारुदत्त**—शान्त पापम्[2] ।(दृष्ट्वा स्वगतम् ।) अद्यावगच्छामि । ('परोऽपि समसस्थितस्य' (१०।१६) इत्यादि पठति । प्रकाशम् । 'एता पुनर्हर्म्यगता स्त्रियो माम्' (१०।११) इत्यादि पुन पठति ।)

**चाण्डाल**—अपसरतार्या अपसरत ।

**कि पश्यथ सत्पुरुषमयशोवशेन प्रनष्टजीवाशम् ।**
**कूपे खण्डितपाश काञ्चनकलशमिव मज्जन्तम् ॥ २४ ॥**

(ओशलध अज्जा ओशलध ।

कि पेक्खध शप्पुलिश अजशवशेण प्पणट्टजीवाशम् ।
कूवे[3] खण्डिदपाश कञ्चणकलश व्वि डुब्बन्तम् ॥)

(चारुदत्त सकरुणम् ' शशिविमलमयूख–' (१०।१३) इत्यादि पठति ।)

**अपर**—अरे पुनरपि घोषय । (अले पुणोवि घोशेहि ।)

(चाण्डालस्तथा करोति ।)

कि विनमितमस्तकेन अवनतशिरसा कि कर्तव्यम् । अस्य स्त्रीहणस्य लज्जया नतशिरसोऽपि न कुत्सेत्यर्थ । कुत एवमित्यत आह—राहुगृहीत इव चन्द्रो वन्दनीयो जनपदस्य । किंशब्द आवर्त्योभयोरर्धयोर्योज्य इत्याहु ॥ २० ॥ **असेनेति** । आघात अधिकरणवधस्थानम । 'शमिता यज्ञे' इति पाणिने सूत्रम् । शमितुरिद शामित्रम् । यज्ञे पशुघातस्थानम् । आलब्धोऽभिमन्त्रित । मारित इत्येके । **अज इवाह प्रयामि** । इन्द्रवज्रा वृत्तम् ] ॥ २१ ॥ **न खल्विति** । जानपूर्वौ अपि । जन्मना चाण्डालौ न कर्मणेत्यर्थ । ते पापा इत्यनेन पालक शकारश्च लक्षितौ ] ॥ २२ ॥ **इदमिति** ।

१ अचन्दन २ पाप शान्त पापम् ३ कूवम्मि खुडिदपाश

SON—Kill me, and let my papa go !

CH —My long lived child, may you that speak thus (*i e* so nobly) live long !

CHAR —(*Embracing his weeping* son *around the neck*)

This is the all-in-all of love, equally accessible to both, the rich and the poor ! It is a soothing ointment (balm) to the heart, though containing neither sandal nor *usira* paste (23)

(*He again recites the verse beginning 'Bearing round my neck' &c, then he observes, and again repeats to himself the verse beginning 'And these with their faces covered up with the ends of their garments' &c*)

VID —You gentle ones, let go my dear friend Charudatta, and kill me (in his stead) !

CHAR —Heaven forbid ! (*Observing, to himself*), Now I learnt it ! (*He recites again 'Of one in happy circumstances' &c, then aloud—he recites again the verse beginning 'And these ladies in their mansions' &c*).

CH —Make way, sirs, make way !

Why should you throng to look at a virtuous man who has lost all hope of life owing to (*i e* in consequence of) ignominy (an infamous deed), like a golden jar sinking in a well when its rope is snapped ? (24)

Charudatta *mournfully recites the verse beginning 'O you with teeth pure like the rays of the moon' &c*)

THE OTHER CH —Eh, proclaim it once more !

(*The* Chandala *does so*).

---

[ इद तत्पुत्रालिङ्गनजन्य सुख आढ्य श्रीमान् दरिद्रश्च तयो सम स्नेहसर्वस्वम् । अचान्दन अनौशीर उशीरजादन्यत् हृदयस्यानुलेपनम् ] ॥ २३ ॥ किमिति । गाथा । अयशोवशेन वसन्तसेनाघातजन्यापवादात् । प्रनष्टा जीवाशा यस्य त पुरुषम् । खण्डित विच्छिन्न पाश रज्जु यस्य तादृश कूपे मज्जन्तम् ] ॥ २४ ॥ प्राप्त इति । [अह व्यसनेन कृतामापज्जनितामनार्या गर्ह्या दशा प्राप्त । यत्रेद जीवितावसान मरणरूप फलमपि । घोषणा मदपराधख्यापना । प्रहर्षिणी वृत्तम् ] ॥ २५ ॥ आक्रन्दामि विरौमि । बालाग्रप्रतोलीत प्रासादभागादित्यर्थ । कोऽयमिति । [ कालपाशस्थिते मृत्युगोचरे । द्रोणमेघ शस्यवृद्धिकर पुष्करावर्तकाद्यन्यतम मेघविशेष । तदुक्त ज्योतिस्तत्त्वे—' त्रियुते शाकवर्षे तु चतुर्भि शेषित क्रमात् । आवर्तं विद्धि

**चारुदत्त** —

**प्राप्तोऽहं व्यसनकृतां[1] दशामनार्यां**
**यत्रेदं फलमपि जीवितावसानम्[2] ।**
**एषा च व्यथयति घोषणा मनो मे**
**श्रोतव्यं यदिदमसौ मया[3] हतेति ॥ २५ ॥**

(ततः प्रविशति प्रासादस्थो बद्धः स्थावरकः)

**स्थावरक** —([4]घोषणामाकर्ण्य सवैक्लव्यम् ।) कथमपापश्चारुदत्तो व्यापाद्यते। अहं निगडेन स्वामिना बद्धः । भवतु । आक्रन्दामि । शृणुतार्याः शृणुत । अस्तीदानीं मया पापेन प्रवहणपरिवर्तेन पुष्पकरण्डकजीर्णोद्यानं वसन्तसेना नीता । ततो मम स्वामिना मां न कामयस इति कृत्वा बाहुपाशबलात्कारेण मारिता न पुनरेतेनार्येण। कथम् । विदूरतया न कोऽपि शृणोति । तत्किं करोमि । आत्मानं पातयामि । (विचिन्त्य ।) यद्येवं करोमि तदाऽऽर्यचारुदत्तो न व्यापाद्यते । भवतु । अस्यात् प्रासादबालाग्रप्रतोलिकात एतेन जीर्णगवाक्षेणात्मानं निक्षिपामि । वरमहमुपरतो न पुनरेष कुलपुत्रविहगानां वासपादप आर्यचारुदत्तः । एवं यदि विपद्ये लब्धो मया परलोकः । (इत्यात्मानं पातयित्वा ।) आश्चर्यम् । नोपरतोऽस्मि । भग्नो मे दण्डनिगडः । तच्चाण्डालघोषं समन्विष्यामि । (दृष्ट्वोपसृत्य ।) हं हो चाण्डालौ अन्तरमन्तरम् । (कधं अपावे चालुदत्ते वावादीअदि । हग्गे णिअलेण शामिणा बन्धिदे । भोदु । आक्कन्दामि । शुणाध अज्जा शुणाध । अत्थि दाणिं मए पावेण पवहणपडिवत्तेण पुप्फकलण्डअजिण्णुज्जाणं वसन्तशेणा णीदा । तदो मम शामिणा मं ण कामेशित्ति कदुअ बाहुपाशबलक्कालेण मालिदा ण उण एदिणा अज्जेण । कधम् । विदूलदाए ण को वि शुणादि । ता किं कलेमि। अत्ताणअं पाडेमि। जइ एव्वं कलेमि तदा अज्जचालुदत्ते ण वावादीअदि । भोदु । इमादो पाशादबालग्गपदोलिकादो एदिणा जिण्णगवक्खेण अत्ताणअं णिक्खिवामि। वलं हग्गे उवलदे ण उण एशे कुलपुत्तविहगाणं[5] वाशपादवे अज्जचालुदत्ते । एव्वं जइ विवज्जामि लद्धे मए पललोए। ही ही । ण उवलदम्हि । भग्गे मे दण्डणिअले । ता चाण्डालघोशं शमण्णेशामि । हहो चाण्डाला अन्तलं अन्तलम् ।)

**चाण्डालौ**—अरे कोऽन्तरं याचते । (अले के अन्तलं मग्गेदि ।)

(चेटः 'शुणाध' इति पूर्वोक्तं पठति ।)

**चारुदत्त** —अये ।

**कोऽयमेवंविधे काले कालपाशस्थिते मयि ।**
**अनावृष्टिहते सस्ये द्रोणमेघ इवोदितः[6] ॥ २६ ॥**

---

१ कृशां. २ पमानम् ३ त्वया ४ घोषणं ५ विहगाणं ६ वोत्थित

भो श्रुत भवद्भि ।

न भीतो मरणादस्मि केवल दूषित यश ।
विशुद्धस्य हि मे मृत्यु पुत्रजन्मसमो भवेत् ॥ २७ ॥

अन्यच्च ।

तेनास्म्यकृतवैरेण क्षुद्रेणात्यल्पबुद्धिना ।
शरेणेव[1] विषाक्तेन दूषितेनापि दूषित ॥ २८ ॥

चाण्डालौ—स्थावरक अपि सत्य भणसि । (थावलक अवि शच्च[2] भणाशि।)

चेट —सत्यम् । अहमपि मा कस्यापि कथयिष्यसीति प्रासादबालाग्रप्रतोलिकाया दण्डनिगडेन बद्ध्वा निक्षिप्त । (शच्चम् । हग्गे वि मा कश्श वि कधइश्शशित्ति पाशादबालग्गपदोलिकाए दण्डणिअलेण बन्धिअ णिक्खित्ते ।)

(प्रविश्य ।)

शकार —(सहर्षम् ।)

मासेन तिक्ताम्लेन भक्त शाकेन सूपेन समत्स्यकेन ।
भुक्त मयाऽऽत्मनो गेहे शालीयकूरेण गुडौदनेन ॥ २९ ॥

( कर्णं दत्त्वा । ) भिन्नकास्यखड्खणायाश्चाण्डालवाचाया स्वरसयोग । यथा चैष उद्गीतो वध्यडिण्डिमशब्द पटहाना च श्रूयते तथा तर्कयामि दरिद्रचारुदत्तको वध्यस्थान नीयत इति । तत्प्रेक्षिष्ये । शत्रुविनाशो नाम मम महान्हृदयस्य परितोषो भवति । श्रुत च मया योऽपि किल शत्रु व्यापाद्यमान पश्यति तस्यान्यस्मिञ्जन्मान्तरेऽक्षिरोगो न भवति । मया खलु विषग्रन्थिगर्भप्रविष्टेनेव कीटकेन किमप्यन्तर मृगयमाणेनोत्पादितस्तस्य दरिद्रचारुदत्तस्य विनाश । साम्प्रतमात्मीयाया प्रासादबालाग्रप्रतोलिकायामधिरुह्यात्मन पराक्रम पश्यामि ।

---

विषाक्तेन शरेण इव दूषिताऽस्मि ] ॥ २८ ॥ मासेनेति । उपजातिच्छन्द । [ मया आत्मनो गेहे तिक्ताम्लेन तिक्ताम्लरसोपेतेन मासेन समत्स्यकेन शाकेन शालीयकूरेण शाल्युत्पन्नेनान्नेन गुडौदनेन सह भक्त भुक्तम । ] तप्नश केन शालेर्भक्तेन गुडौदनेन ॥२९॥ भिन्नकास्यवत्खड्खणाया कटुस्वराया विकृतध्वन्याश्चाण्डालवाच स्वरसयोग । यथा चैष उत्खालित उद्गन पटहाना च शब्दस्तथा तर्कये । य शत्रु व्यापाद्यमान प्रेक्षते तस्याक्षिणी शीतलायेते । विपकण्डिकाम-यप्रविष्टेन इव कीटकेन । ही विस्मये । कथमित्यर्थ । एवड्ढे एतावान्महान् । नवबलीवर्द इव नववृषभ इव मण्डित । वृपभशब्द सभवन्नपि शकारभापा-वात्यक्त । अपसरतेति । [तूष्णीका मौनिन । अविनय एव तीक्ष्णा निशित विपाण शृङ्ग यस्य स । दुष्ट बलीवर्द

---

१ शरेणैव २ सच्च

Well, Sirs, have you heard ( all that ) ?

I am not afraid of death, only my fair name is tarnished [and this is what pains me] Death to me if ( proved ) pure ( free from guilt ) will be like ( i e as welcome as ) the birth of a son ( 27 )

Moreover —

By that mean fellow ( Sakara ), whose enemy I never was and who is extremely narrow minded, I was charged with crime —though he himself was the criminal—as with a poison-besmeared arrow ( 28 )

THE TWO CH —Sthavaraka, are you telling the truth ?

CHETA—( Yes ), the truth And he also put me in chains linked together, and kept me, imprisoned in the elephant-corniced terrace of his palace, saying '( now ) you will not tell any one '

( *Entering* )

SAK —( *Gleefully* )

In my palace I have dined on rice, and meat seasoned with pungent and sour sauces, and vegetables, soup and fish, and rice-cakes and treacled rice ( 29 )

( *Listening* ) It seems to be the voice of a Chandala speaking, as it has the ring of cracked bell metal And, since this loud noise of drums and kettle drums beaten at the time of execution is heard, I guess that the penniless Charudatta is ( now ) being taken to the place of execution So I shall ( go and ) have a good look at it The destruction of an enemy, in sooth, affords my heart very great pleasure And I have heard that whoever witnesses the killing of an enemy will not suffer from any eye disease in his next birth I have indeed managed to bring about the ruin of that pauper Charudatta, after having sought a ( broad ) way out, like a warm stationed in the inside of the root of a poisonous herb Now I'll ascend to the elephant corniced upper terrace of my palace and ( from there ) witness my own exploit

---

शकार ] ॥ ३० ॥ [ लल्लादीक्षितास्तु सत्यकमपि -इति पठित्वा 'प्रशस्त सत्य सत्यकम् । प्रशसाया कन्' इति व्याख्यान्ति । विभव सामर्थ्यम् ] । उत्तिष्ठेति । [ भो पतित आपद्ग्रस्त य साधुजनस्तस्य अनुकम्पिन् निष्कारणोपगतबान्धव धर्मशील धार्मिक उत्तिष्ठ । त्वया मम मोक्षणाय सुमहान् यत्न कृतोऽपि यद्यपि कृत तथाऽपि दैव न संवदति अनुकूलत्वेनानुवर्तते । त्वयाऽद्य किं न कृतम् । सर्वं

(तथा कृत्वा दृष्ट्वा च।) ही ही एतस्य दरिद्रचारुदत्तस्य वध्य नीयमानस्यैता-वाञ्जनसमर्द। यस्या वेलायामस्मादृश प्रवरो वरमानुषो वध्य नीयते तस्या वेलाया कीदृशो भवेत्। (निरीक्ष्य।) कथम्। एष स नवबलीवर्द इव मण्डितो दक्षिणा दिश नीयते। अथ किंनिमित्त मदीयाया प्रासादबालाग्रप्रतोलिकाया समीपे घोषणा निपतिता निवारिता च। (विलोक्य।) कथ स्थावरकश्चेटोऽपि नास्तीह। मा नाम तेनेतो गत्वा मन्त्रभेद कृतो भविष्यति। तद्यावदेनमन्विष्यामि। (इत्यवतीर्योपसर्पति।)

(मशेण तिक्खामिलकेण भत्ते शाकेण शूपेण शमच्छकेण।
भुत्त मए अत्तणअश्श गेहे शालिश्शकूलेण गुलोदणेण॥

भिण्णकशखड्खणाए चाण्डालवाआए शलगजोए। जधा अ एशे उक्खालिदे[1] वज्झ-डिण्डिमशद्दे पडहाण अ शुणीअदि तथा तक्केमि दलिद्दचालुदत्ताके वज्झट्ठाण णीअदि त्ति। ता पेक्खिश्शम्। शत्तुविणाशे णाम मम महन्ते हलवकश्श पलिदोशे होदि। शुद अ मए जे वि किल शत्तु वावादअन्त पेक्खदि तश्श अण्णंशि जम्मन्तले अक्खिलोगे ण होदि। मए क्खु विशगण्ठिगब्भपविट्ठेण विअ कीडएण किं पि अन्तल मग्गमाणेण उप्पाडिदे ताह दलिद्दचारुदत्ताह विणाशे। शपद अत्तणकेलिकाए पाशादबालग्गपदोलिकाए अहिलुहिअ अत्तणो पलक्कम पेक्खामि। ही ही एदाह दलिद्दचालुदत्ताह वज्झ णीअमाणाह एत्तड्ढे[2] जणशमद्दे। ज वेल अम्हालिशे पबले वलमणुश्शे वज्झ णीअदि त वेल कीदिशे[3] भवे। कधम्। एशे शे णवबलद्दके विअ मण्डिदे दक्खिण दिश णीअदि। अध किणिमित्त ममकेलिकाए पाशादबालग्गपदोलि-काए शमीवे घोशणा णिवडिदा णिवालिदा अ। कध थावलके चेडे वि णत्थि इध। मा णाम तेण इदो गदुअ मन्तभेदे कडे भविश्शदि। ता जाव ण अण्णेशामि।)

**चेट**—(दृष्ट्वा।) भट्टारका एष स आगत। (भट्टालका एशे शे आगदे।)

**चाण्डालौ**—

**अपसरत दत्त मार्गं द्वार पिधत्त भवन तूष्णीका।**
**अविनयतीक्ष्णविषाणो दुष्टबलीवर्द इत एति॥ ३०॥**
(ओशलध देध मग्ग दाल ढक्केध होध तुण्हीआ।
अविणअतिक्खविशाणे दुटटबइल्ले इदो एदि॥)

**शकार**—अरे अरे अन्तरमन्तर दत्त। (उपसृत्य।) पुत्रक स्थावरक चेट एहि गच्छाव। (अले अले अन्तल अन्तल देध। पुत्तका थावलका चेडा एहि। गच्छम्ह।)

**चेट**—ही ही अनार्य वसन्तसेना मारयित्वा न परितुष्टोऽसि। साप्रत प्रणयिजनकल्पपादपमार्यचारुदत्त मारयितु व्यवसितोऽसि। (ही ही अणज्ज वशन्त-शेणिअ मालिअ ण पलितुट्टे शि। शपद पणइजणकप्पपादव अज्जचालुदत्त मालइदु ववशिदेशि।)

**शकार**—न हि रत्नकुम्भसदृशोऽह स्त्रियं व्यापादयामि। (ण हि लअणकुम्भ-शलिशे हग्गे इत्थिअ वावादेमि।)

---

१ उस्कालिदे　२ ऐशे वड्ढे (एष वृद्ध).　३ कीदिश.

( *Does so, seeing* ) Ha, ha ! There is so large a crowd of people when this beggar Charudatta is being taken to the execution ground, how large then would it be when a mighty high personage like myself would be taken to be executed ? (*Peering*) How ! Here he is, decked like a newly-trained bullock, being taken in the southern direction ! But why is it that the proclamation was made in the neighbourhood of the elephant corniced terrace of my palace, and stopped ( suddenly ) ? ( *Observing* ) How ! The slave Sthavaraka, too, is not to be seen here ! Could he have gone from this place and divulged the facts ? Let me then first seek him out

( *Descends and approaches* )

CHETA—(*Seeing him*) Gentlemen, here he comes !

CH —

Move off and make way ! Shut the doors and remain silent ! For here comes this mad bull having sharp horns ( in the form ) of his arrogant deeds ! ( 30 )

SAK —Ho, there ! Make way, make way ! ( *Approaching* ) My son, Sthavaraka, my slave, come, let us be off !

CHETA —Oh, you villain ! You were not satisfied by the murder of Vasantasena, and ( in addition ) now you want to murder the noble Charudatta also, the wish granting tree of all supplicants !

SAK —Never shall I, who am like a pot filled with jewels ( *i e* very rich ), murder a woman ( for the sake of her money ) !

---

कृतमित्यर्थ । वसन्ततिलक वृत्तम् ] ।। ३१ ।। आश्रममिति । [ वत्स मातर गृहीत्वा अद्यैव आश्रम कस्यापि मुने तपोवन वा गन्तव्यम् । पुत्र पितृदोषेण त्वमपि एवमहमिव मृत्यु मा गमिष्यसि ] ।। ३२ ।। किं **ओहशशीत्यादि** । गाथा । किमवहमसि हे शक पुरुष दृष्ट्वा दैवपर्यस्तम् । विदित न त्वमत्पीवत हे दुर्जन कृतान्तदष्ट्रामापुरोहपि (?) ।। पराणेमि परानयामि व्यावर्तयामि । एताए एतावता । एवमेवेत्यर्थ । इदानीमित्येके । सङ्खल्लेन वध्यपटहवादनदण्डेन प्राप्येति । [ एतद्वचसनमेव महार्णवस्तत्र प्रपात प्राप्य । त्रासो भीति । जनापवाद वसन्तसेनावधायशोरूप स एव वह्नि ] ।। ३३ ।। वज्झपालिआ **बधपर्याय** । बीरक इति चाण्डालनाम । **बन्ध** खण्डेदि बन्धमाच्छिद्य प्रसरति । **प्रभवतीति** । प्रबलपुरुष नयनिर्णेतार । तेषा वाक्यैर्भाग्यदोषाददूषितस्य यदि मे धर्म [पुण्यसचय ] प्रभवति तदा सुरपतिभवनस्था कदाचिज्जीवन्ती यत्र तत्र स्थिता वा सैव वसन्तसेनैव

**सर्वे**—अहो त्वया मारिता। नार्यचारुदत्तेन। ( अहो तुए मारिदा। ण अज्जचारुदत्तेण। )

**शकार**—क एव भणति। (के एव्व भणादि।)

**सर्वे**—(चेटमुद्दिश्य।) नन्वेष साधु (ण एसो साहू।)

**शकार**—( अपवार्य सभयम्। ) हन्त कथ स्थावरकश्चेट सुष्ठु न मया सयत। एष खलु ममाकार्यस्य साक्षी। ( विचिन्त्य। ) एव तावत्करिष्यामि। ( प्रकाशम्। ) अलीक भट्टारका। अहो एष चेट सुवर्णचोरिकया मया गृहीतस्ताडितो मारितो बद्धश्च। तत्कृतवैर एष यद्भणति किं सत्यम्। ( अपवारितकेन चेटस्य कटक प्रयच्छति। स्वैरकम्। ) पुत्रक स्थावरक चेट एतद्गृहीत्वाऽन्यथा भण। (अविदमादिके अविवमादिके कध थावलके चेडे शुश्ठु ण मए शजदे। एशे क्खु मम अकज्जश्श शक्खी। एव्व दाव कलइश्शम्। अलीअ भश्टालका। हहो एशे चेडे शुवण्णचोलिआए मए गहिदे पिश्टिदे मालिदे बद्धे अ। ता किदवेले एशे ज भणादि किं शच्चम्। पुश्तका[१] थावलका चेडा एद गेण्हिअ अण्णधा भणाहि।)

**चेट**—(गृहीत्वा।) पश्यत पश्यत भट्टारका अहो सुवर्णेन मा प्रलोभयति। (पेक्खध पेक्खध भट्टालका। हहो शुवण्णेण म पलोभेदि।)

**शकार**—( कटकमाच्छिद्य। ) एतत्तत्सुवर्णक यस्य कारणान्मया बद्ध। ( सक्रोधम्। ) हहो चाण्डालौ मया खल्वेष सुवर्णभाण्डारे नियुक्त सुवर्ण चोरयन्मारितस्ताडित। तद्यदि न प्रत्ययेथे तदा पृष्ठ तावत्पश्यतम्। (एशे शे शुवण्णके जश्श कालणादो मए बद्धे[२]। हहो चाण्डाला[३] मए क्खु एशे शुवण्णभण्डाले णिउत्ते शुवण्ण[४] चोलअन्ते मालिदे पिश्टिदे। ता जदि ण पत्तिआअध ता पिश्टि दाव पेक्खध।)

**चाण्डालौ**—( दृष्ट्वा। ) शोभन भणति। वितप्तश्चेट किं न प्रलपति। (शोहण भणादि। वितत्ते[५] चेडे किं ण प्पलवदि[६]।)

**चेट**—हन्त ईदृशो दासभावो यत्सत्य कमपि न प्रत्याययति। ( सकरुणम्। ) आर्य चारुदत्त एतावान्मे विभव। ( इति पादयो पतति। ) ( हीमादिके ईदिशे दाशभावे ज शच्च[७] कपि ण पत्तिआअदि। अज्जचालुदत्त एत्तिके मे विहवे।)

**चारुदत्त**—(सकरुणम्।)

> **उत्तिष्ठ भो पतितसाधुजनानुकम्पि-**
> **न्निष्कारणोपगतबान्धव धर्मशील।**
> **यत्न कृतोऽपि सुमहान्मम मोक्षणाय**
> **दैव न सवदति किं न कृत त्वयाऽद्य॥ ३१॥**

**चाण्डालौ**—भट्टक ताडयित्वैत चेट निष्कासय। (भट्टके[८] पिट्ठिअ एद चेड णिक्कालेहि।)

---

१ पुश्यका २ वड्ढे ३ चाण्डालआ ४ शुवण्णअ ५ विडत्ते ६ प्पडवदि ७ सच्चक पि (सत्यकमपि न प्रत्याय्यते) ८ भश्टके

ALL—Oh, but she was murdered by *you*, and not by the worthy Charudatta!

SAK.—Who says so?

ALL.—(*Pointing to* Cheta.) Why, this good man!

SAK.—(*Alarmed, to himself.*) Hang it! How is it that I failed to properly secure the slave Sthavaraka? For he is the (sole) witness of my crime. (*Pondering.*) Well I'll manage it thus. (*Aloud.*) It is a lie, gentlemen! For see, this slave was caught by me as he was stealing my gold, and beaten and cudgelled and imprisoned. So, having become my enemy, whatever he tells you—could it be the truth? (*Aside. Gives a golden bangle to* Cheta. *Whispering.*) Sthavaraka, my son, my slave, take this and contradict what you have said (*lit.* speak otherwise.)

CHETA.—(*Taking it.*) Look, masters, look! Oh, (here) he is tempting me with gold!

SAK.—(*Snatching away the bangle.*) Here's that golden ornament for which he was put in chains! (*Angrily.*) Oh you Chandalas, I really did beat and cudgel him as he was stealing my gold when appointed to guard my treasury. And, if you don't believe me, you may just inspect his back.

CH.—(*Seeing.*) What he says is right. What will a slave when exasperated (*lit.* scorched) not prattle?

CHETA.—Alas! Slavery is such a (cursed) thing that nobody believes the truth (told by a slave). (*Mournfully.*) Sir Charudatta, (only) thus far lay my power! (*He prostrates himself at his feet.*)

CHAR.—(*Mournfully.*)

Rise, O you who took pity on a fallen innocent man, who came to me as a disinterested friend, and who are righteous by nature. Although you made a very great effort to set me free, Fate does not agree to it. What is it that you have not done (for me) to day? (31)

CH.—Sir, thrash this slave and turn him out.

---

स्वस्वभावेनात्मरूपतया मम कलङ्कं व्यपनयतु । [ मालिनी छन्द ] ॥ ३४ ॥
गन्तव्यम् । तत्रैव मया मर्तव्यमित्यर्थ । अर्धामति । [ दीर्घा उन्नतशरोरा गोमायव

**शकार**—निष्क्राम रे। (इति निष्क्रामयति[१]।) अरे चाण्डालौ किं विलम्बेथे मारयतमेतम्। ([२]णिक्कम ले। अलेचाण्डाल कि विलम्बेध। मालेध एदम्।)

**चाण्डालौ**—यदि त्वरयसे तदा स्वयमेव मारय। (जदि तुवलशि ता शअ ज्जव मालेहि।)

**रोहसेन**—अरे चाण्डालौ मा मारयतम्। मुञ्चत पितरम्। (अले चाण्डाला म मारेध। मुञ्चध आवुकम्।)

**शकार**—सपुत्रमेवैतं मारयतम्। (शपुत्त ज्जेव एद मालेध।)

**चारुदत्त**—सर्वमस्य मूर्खस्य सभाव्यते। तद्गच्छ पुत्र मातु समीपम्।

**रोहसेन**—किं मया गतेन कर्तव्यम्। (कि मए गदेण कादव्वम।)

**चारुदत्त**—

> आश्रम[३] वत्स गन्तव्य गृहीत्वाऽद्यैव मातरम्।
> मा पुत्र पितृदोषेण त्वमप्येव[४] गमिष्यसि॥ ३२॥

तद्वयस्य गृहीत्वैन व्रज।

**विदूषक**—भो वयस्य एव त्वया ज्ञात त्वया विनाऽह प्राणान्धारयामीति। (भो वअस्स एव्व तुए जाणिद तुए विणा अह पाणाइ धारेमि त्ति।)

**चारुदत्त**—वयस्य स्वाधीनजीवितस्य न युज्यते तव प्राणपरित्याग।

**विदूषक**—(स्वगतम्।) युक्त न्विदम्। तथाऽपि न शक्नोमि प्रियवयस्य-विरहित प्राणान्धर्तुमिति। तद्ब्राह्मण्यै दारक समर्प्य प्राणपरित्यागेनात्मन प्रिय वयस्यमनुगमिष्यामि। (प्रकाशम्।) भो वयस्य परानयाम्येत लघु। (इति सकण्ठग्रह[५] पादयो पतति।) (जुत्त णेदम्। तधा वि ण सक्कुणोमि पिअवअस्स-विरहिदो पाणाइ धारेदु त्ति। ता बम्हणीए दारअ समप्पिअ पाणपरिच्चाएण अत्तणो पिअवअस्स[६] अणुगमिस्सम्। भो वअस्स पराणेमि एद लहुम्।)

(दारकोऽपि रुदन्पतति।)

**शकार**—अरे ननु भणामि सपुत्रक चारुदत्त व्यापादयतमिति। (अले ण भणामि शपुत्ताक चालुदत्ताक वावादेध त्ति।)

(चारुदत्तो भय नाटयति)

**चाण्डालौ**—न ह्यस्माकमीदृशी राजाज्ञप्ति. यथा सपुत्र चारुदत्त व्यापादयतमिति। तन्निष्क्राम रे दारक निष्क्राम। (इति निष्क्रामयत।) इद तृतीय घोषणास्थानम्। ताडयत डिण्डिमम्। (पुनर्घोषयत।) (ण हि अम्हाण ईदिशी लाआणत्ती जधा शपुत्त चालुदत्त वावादेध त्ति। ता णिक्कम ले दालआ णिक्कम। इम तइम घोषणट्ठाणम्। ताडेध डिण्डिमम्।)

---

१ निर्वासयति. २ णिश्शल (निस्सर) ३ आश्रमो वत्स गन्तव्य ४ त्वमप्यत्र-गमिष्यसि ५ ग्रहण. ६ वअस्समग्ग.

SAK —Here, off with you! (*He drives him out*) Well, Chandalas, why do you delay? Kill him!

CH —If you are in such a hurry, then you may kill him yourself!

ROH —O Chandalas, kill me, release my father!

SAK —Kill him together with his son!

CHA'R —Everything is possible in the case of this fool, so, my son, go to your mother

ROH —What am I to do by going away?

CHAR —

Dear child, this very day you should go to (reside in) a hermitage (in a forest), along with your mother, lest you too, my son, fare similarly, through the crime of your father (32)

So, friend Maitreya, take him and go

VID —O friend, have you so known it (as to think) that I could remain alive without you?

CHAR —Friend, your life is in your own power, and it is not right for you to give it up

VID —(*To himself*) That is surely true, but still, I am unable to remain alive after being separated from my dear friend So, I will give this boy into his wife's care and myself follow my dear friend by giving up my life (*Aloud*) O friend, I shall immediately take him back (*He embraces him around the neck and falls at his feet*)

(*The* boy, *too, weeps and prostrates himself*)

SAK —Eh, do I not say that you should kill Charudatta along with his son?

(Charudatta *exhibits alarm*)

CH —The king's order (to us) is not such (to the effect) that we should kill Charudatta along with his son Here, go away, boy, off with you! (*They show him out*) Here's the third proclamation station Beat the drum! (*They proclaim once more*)

शकार —( स्वगतम् । ) कथमेते न प्रत्ययन्ते पौरा । ( प्रकाशम् । ) अरे चारुदत्त बटुक न प्रत्ययत एष पौरजन । तदात्मीयया जिह्वया भण मया वसन्त सेना मारितेति । (कध एशे ण पत्तिआअन्ति पौला । हुहो चालुदत्ता बडुका[१] ण पत्तिआअदि एशे पौलजणे । ता अत्तणकेलिकाए जीहाए भणाहि मए वशन्तशेणा मालिदेत्ति ।)

(चारुदत्तस्तूष्णीमास्ते ।)

शकार —अरे चाण्डाल मनुष्य न भणति चारुदत्तबटुक । तद्भणयतमनेन जर्जरवशखण्डेन शङ्खलेन ताडयित्वा ताडयित्वा । (अले चाण्डाल गोहे ण भणादि चालुदत्तबडुके[२] । ता भणावेध इमिणा जज्जलवशखण्डेन शङ्खलेण तालिअ तालिअ ।)

**चाण्डाल** —(प्रहारमुद्यम्य ।) भोश्चारुदत्त भण । (भो चालुदत्त भणाहि ।)

**चारुदत्त** —( सकरुणम् । )

> **प्राप्यैतद्व्यसनमहार्णवप्रपात[३]**
> **न त्रासो न च मनसोऽस्ति मे विषाद ।**
> **एको मा दहति जनापवादवह्नि-**
> **र्वक्तव्य यदिह मया हता प्रियेति ।। ३३ ।।**

( शकार पुनस्तथैव । )

**चारुदत्त** —भो भो पौरा । ('मया खलु नृशसेन' (९।३०, ३८) इत्यादि पुन पठति ।)

**शकार** —व्यापादिता । (वावादिता ।)

**चारुदत्त** —एवमस्तु ।

**प्रथमचाण्डाल** —अरे तवात्र वध्यपालिका । (अले तव अत्त [४]वज्झपालिआ ।)

**द्वितीयचाण्डाल** —अरे तव । (अले तव ।)

**प्रथम** —अरे लेख कुर्व । (इति बहुविध लेखक कृत्वा ।) अरे यदि मदीया वध्यपालिका तदा तिष्ठतु तावन्मुहूर्तकम् । ( अले लेक्खअ कलेम्ह । अले जदि ममकेलिका वज्झपालिआ ता चिठ्ठदु दाव मुहुत्तअम् । )

**द्वितीय** —किंनिमित्तम् । (किंणिमित्तम् ।)

**प्रथम** —अरे भणितोऽस्मि पित्रा स्वर्ग गच्छता यथा—पुत्र वीरक यदि तव वध्यपालिका भवति मा सहसा व्यापादयसि वध्यम् । (अले भणिदो म्हि पिदुणा शग्ग गच्छन्तेण जधा—पुत्त वीरअ जइ तुह वज्झपालिआ होदि मा शहशा[५] वावादअशि वज्झम् ।)

---

१ बडुव्वका (बटुवक।) २ बडुव्वके, बुड्ढबडुके ३ महार्णव, ..प्रयात. ४ वज्झवाली. ५ शहशत्ति ( सहसेति )

SAK —( *To himself* ) How ! These citizens do not believe it ! ( *Aloud* ) Oh, Chrudatta, you fellow ! This multitude of citizens does not believe it So speak it with your own tongue— "I killed Vasantasena"

( Charudatta *remains silent* )

SAK —Ho ! Chandala, man, this fellow, Charudatta, doesn't speak. So make him speak by repeatedly striking him with that broken piece of old bamboo, your drum-stick

CH —( *Raising his hand for a blow* ) Speak, O Charudatta !

CHAR —( *Mournfully* )

Having fallen in this fathomless big ocean of calamity, I feel neither terror nor sorrow in my mind But only one thing, *viz* the fire of popular ignominy, burns me, when now I am asked to say—"I killed my beloved" (33)

( Sakara *again says as before* )

CHAR —Oh, ye citizens ! ( *He recites again the verse beginning 'By my cruel self' &c* )

SAK —"Was killed"

CHAR —So be it !

THE FIRST CH —Oh, it is your turn to day to kill

THE SECOND CH —Oh, it is yours !

THE FIRST—Let us reckon by making a writing ( *They write or draw lines in many ways* ) Ah, if it is my turn, then let it stand over for a short while

THE SECOND—What for ?

THE FIRST—I was told by my father when about to depart to heaven, thus—"Viraka, my son, whenever it will be your turn to kill, you should never kill the condemned man at once"

---

शृगाला प्रतिवृत्त शूलादधोलम्बमानं कलेवर कर्षन्ति । अर्धमपि शूललग्नमट्टहासस्य वेशो कालाट्टहासस्य रूपमिव तद्भीषणमित्यर्थ । शूललग्न स्थितम् ] ॥ ३५ ॥ उत्तिष्ठदिति ॥ ३६ ॥ आकृष्ट इति । उद्गीति । [ सरोषमाकृष्ट मुष्टौ त्सरौ मुष्टिना गृहीतोऽपि दारुणक भीषण अशनिसन्निभ निर्घातसदृश खड्ग किमर्थं

**द्वितीय** —अरे किंनिमित्तम् । (अले किंणिमित्तम् ।)

**प्रथम** —कदाऽपि कोऽपि साधुरर्थं दत्त्वा वध्य मोचयति । कदाऽपि राज्ञ पुत्रो भवति तेन वृद्धिमहोत्मवेन सर्ववध्याना मोक्षो भवति । कदाऽपि हस्ती बन्ध खण्डयति तेन सभ्रमेण वध्यो मुक्तो भवति । कदाऽपि राजपरिवर्तो भवति तेन सर्ववध्याना मोक्षो भवति । (कदावि कोवि साहू अत्थ दइअ वज्झ मोआवेदि । कदावि लण्णो पुत्ते भोदि तेण वद्धावेण[1] शव्ववज्झाण मोक्खे होदि । कदावि हत्थी बन्ध खण्डेदि[2] तेण शभमेण वज्झे मुक्के होदि । कदावि लाअपलिवत्ते होदि तेण शव्ववज्झाण मोक्खे होदि ।)

**शकार** —कि कि गजपरिवर्तो भवति । (कि किं लाअपलिपत्ते होदि ।)

**चाण्डाल** —अरे वध्यपालिकाया लेख कुर्व ।( अले वज्झपालिआए लेक्खअ कलम्हे ।)

**शकार** —अरे शीघ्र मारयत चारदत्तम् । ( इत्युक्त्वा चेट गृहात्वैकान्ते स्थित । ) ( अले शिग्घ मालेध चालुदत्ताकम् । )

**चाण्डाल** —आर्य चारुदत्त राजनियोग खल्वपराध्यति न खल्वावा चाण्डालौ । तत्स्मर यत्स्मर्तव्यम् । (अज्ज चालुदत्त लाअणिओओ क्खु अवलज्झदि ण क्खु अम्हे चाण्डाला । ता शुमलेहि ज शुमलिदव्वम् । )

**चारुदत्त** —

> **प्रभवति यदि धर्मो दूषितस्यापि मेऽद्य**
> **प्रबलपुरुषवाक्यैर्भाग्यदोषात्कथचित् ।**
> **सुरपतिभवनस्था[3] यत्र तत्र स्थिता[4] वा**
> **व्यपनयतु कलङ्क स्वस्वभावेन[5] सैव[6] ॥ ३४ ॥**

भो क्व तावन्मया गन्तव्यम् ।

**चाण्डाल** —(अग्रतो दर्शयित्वा ।) अरे एतद्दृश्यते दक्षिणश्मशान यत्प्रेक्ष्य वध्या झटिति प्राणान्मुञ्चन्ति । पश्य पश्य ।

> **अर्धं कलेवर प्रतिवृत्त कर्षन्ति दीर्घगोमायव· ।**
> **अर्धमपि शूललग्न वेश इवाट्टहासस्य ॥ ३५ ॥**

( अले एद दीशदि दक्खिणमशाण ज पेक्खिअ वज्झा झत्ति पाणाइ मुञ्चन्ति । पेक्ख पेक्ख ।

> अद्ध कलेवल पडिवुत्त कड्ढन्ति दीहगोमाआ ।
> अद्ध पि शूललग्ग वेश विअ अट्टहाशश्श ॥)

**चारुदत्त** —हा हतोऽस्मि मन्दभाग्य । ( इति सावेगमुपविशति ।)

---

१ वद्धावएण. २ खुट्टति (छिनत्ति) ३ भुवनस्था ४ आस्थिता ५ स्वस्ति० ६ सैषा

THE SECOND—For what reason ?

THE FIRST—Perchance some kind gentleman might set the condemned man at liberty by paying a ransom Perhaps a son might be born to the king, and on account of that great joyous festival, all the condemned men may be released Perchance an elephant might break loose from his chains, and in that commotion the condemned criminal might escape Or sometimes there might be a change of kings, and then all the condemned men may be set at large

SAK —What, what's that ? A change of kings ?

CH —Eh, let us reckon by writing out our turns of killing

SAK —You there, kill Charudatta quickly ! ( *Having said so he, with the* Cheta, *moves away and remains in a corner* )

CH —Noble Charudatta, it is verily the king's command that is guilty towards you, and not we, Chandalas So please think of whatever you have to think of

CHAR —

Although through ill luck I am somehow condemned ( declared guilty ) by the words of persons in high authority, still, if my righteousness possesses power, then let that very same ( beloved of mine ), residing in Indra's heaven,—or wherever she may be,—remove this stigma on me, by virtue of ( with ) her own ( sweet ) good nature (34)

Well, where am I to go now ?

CH —( *Pointing before him* ) Well, here you observe this southern cemetery at whose very sight the condemned men at once ( take fright and ) die See, see—

Jackals with elongated bodies are pulling at the ( lower ) half of a corpse which is dangling there, while the other half still remains on the stake, like the (grinning) mask of loud laughter (35)

CHAR —Alas ! I am undone, unlucky that I am ! ( *Sits down in agony*)

---

धरण्या पतित ] ॥ ३७ ॥ सह्यवासिनीति । सह्य पर्वतविशेष । तत्रस्था दुर्गी स्वकुलदेवता सबोधयति । का पुनरिति । गाथा । का पुनस्त्वरितमसे पतता चिकुरभारेण [ कुन्तलकलापेनोपलक्षिता एषा ] व्याहरन्त्युत्थितहस्ता [ ऊर्ध्वपाणि ]

[1]शकार —न तावद्गमिष्यामि । चारुदत्तक व्यापाद्यमान तावत्पश्यामि । (परिक्रम्य दृष्ट्वा ।) कथमुपविष्ट । (ण दाव गमिश्शम् । चालुदत्ताक वावाद-अन्त दाव पेक्खामि । कध उवविश्टे ।)

**चाण्डाल** —चारुदत्त किं भीतोऽसि । (चालुदत्ता किं भीदेशि ।)

**चारुदत्त** —(सहसोत्थाय ।) मूर्ख । ('न भीतो मरणादस्मि केवल दूषित यश ' (१०।२७) इत्यादि पुन पठति ।)

**चाण्डाल** —आर्य चारुदत्त गगनतले प्रतिवसन्तौ चन्द्रसूर्यावपि विपत्ति लभेते । किं पुनर्जना मरणभीरुका मानवा वा । लोके कोऽप्युत्थित पतति कोऽपि पतितोऽप्युत्तिष्ठते ।

**उत्तिष्ठत्पततो वसनपातिका शवस्य पुनरस्ति ।**
**एतानि हृदये कृत्वा सधारयात्मानम् ॥ ३६ ॥**

(द्वितीयचाण्डाल प्रति ।) एतच्चतुर्थं घोषणास्थानम् । तदुद्घोषयाव । (पुनस्तथैवोद्घोषयत ।) (अज्ज चालुदत्त गअणदले पडिवशन्ता चन्दशुज्जा वि विपत्ति लहन्ति । किं उण जणा मलणभीलुआ माणवा वा । लोए कोवि उट्ठिदो पडदि कोवि पडिदोवि उट्ठेदि ।

उट्ठन्तपडन्ताह् वशणपाडिआ शवश्श उण अत्थि ।
एदाइ हिअए कदुअ सधालेहि अत्ताणअ ॥

एद चउट्ठ घोशणट्ठाणम् । ता उग्घोशम्ह ।)

**चारुदत्त** —हा प्रिये वसन्तसेने । ('शशिविमलमयूख'—(१०।१३) इत्यादि पुन पठति ।)

(तत प्रविशति ससभ्रमा वसन्तसेना भिक्षुश्च ।)

**भिक्षु** —आश्चर्यम् । अस्थानपरिश्रान्ता समाश्वास्य वसन्तसेनिका नयन्ननुगृहीतोऽस्मि प्रव्रज्यया । उपासिके कुत्र त्वा नेष्यामि । (हीमाणहे । अट्ठाणपलिश्शन्त शमश्शाशिअ वशन्तशेणिअ णअन्ते अणुग्गहिदम्हि पव्वज्जाए । उवाशिके कहिं तुम णइश्शम् ।)

**वसन्तसेना** —आर्यचारुदत्तस्यैव गेहम् । तस्य दर्शनेन मृगलाञ्छनस्येव कुमुदिनीमानन्दय माम् । (अज्जचारुदत्तस्स ज्जेव गेहम् । तस्स दसणेण मिअलाञ्छणस्स विअ कुमुदिणिं आणन्देहि मम् ।)

**भिक्षु** —(स्वगतम् ।) कतरेण मार्गेण प्रविशामि । (विचिन्त्य ।) राजमार्गेणैव प्रविशामि । उपासिके एहि । अय राजमार्ग । (आकर्ण्य ।) किं नु खल्वेष राजमार्गे महान्कलकल श्रूयते । (कदलेण मग्गेण पविशामि । लाअमग्गेण ज्जेव पविशामि । उवाशिके एहि । इम लाअमग्गम् । किं णु क्खु एशे लाअमग्गे महन्ते कलअले शुणीअदि ।)

---

१ नेपथ्ये श०.

SAK —I won't go just yet. Let me first see Charudatta being killed ( *Walking about and seeing* ) How ! He has sat down !

CH —Charudatta, are you afraid ?

CHAR —( *Getting up at once* ) You fool ! ( *He recites again the verse beginning 'I am not afraid of death, only my good name is soiled' &c* )

CH —Noble Charudatta, even the sun and the moon, who are denizens of heaven, are overtaken by calamity, what then of ( common ) people, men who are afraid of death ? In this world, any one who rises does fall, and one who falls does rise ( again )

The dead body, rising and again falling, exhibits the manner of the casting off of a garment So, keeping these things in your mind, you should steel yourself ( against death ) (36)

( *To the* second Chandala ) Here's the fourth proclamation-station ! Let us, therefore, proclaim it aloud. ( *They again proclaim as before* )

CHAR —Oh, my beloved Vasantasena ! ( *He again recites the verse beginning 'O you with teeth pure like the rays of the moon' &c* )

( *Then enter in a hurry Vasantasena and the Bhikshu* )

BHIKSHU —Wonderful ! I am indeed blessed by my ascetic state, since I am leading ( i e. showing the way to ) Vasantsena after having revived her who had swooned in an undesirable locality —O, worshipper of Buddha, where shall I take you ?

VAS —To the house of the worthy Charudatta, of course ! Kindly gladden me with his sight, like a night lotus with that of the moon !

BH —( *To himself* ) By what route shall I proceed ? ( *pondering* ) I will go by the high road Come, O worshipper of Buddha ! Here is the high road ( *Listening* ) What, I wonder, might be the cause of this mighty uproar that I hear on the highway ?

---

इत एति । 'उच्छिअहत्था' इति पाठे उच्छ्रितहस्तेत्यर्थः ॥ ३८ ॥ [ यज्ञवाट-गतस्य यज्ञस्थानस्थितस्य । ] केयमिति । अभ्युद्यते उद्गते । द्रोणवृष्टि द्रोणस्य मेघस्य वृष्टि ॥ ३९ ॥ बसन्तसेनेति । [ द्वितीया मृताया अन्या । उपजाति-वृत्तम् ] ॥ ४० ॥ किं न्विति । [ जीवातुकाम्यया जीवनौषधेच्छया । जीवयितु

**वसन्तसेना**—(अग्रतो निरूप्य ।) कथं पुरतो महाजनसमूहः । आर्य जानीहि तावत्किं न्विदमिति । विषमभरक्रान्तेव वसुधरा एकवासोन्नतोज्जयिनी वर्तते । (कध पुरदो महाजणसमूहो । अज्ज जाणाहि दाव किं णेदं त्ति । विसमभरक्कन्ता विअ वसुधरा एअवासोण्णदा उज्जइणी वट्टदि ।)

**चाण्डालः**—इदं च पश्चिमं घोषणास्थानम् । तत्ताडयत डिण्डिमम् । उद्घोषयत घोषणाम् । (तथा कृत्वा ।) भोश्चारुदत्त प्रतिपालय । मा भैः । शीघ्रमेव मार्यसे । (इमं अ पच्छिमं घोषणट्ठाणम् । ता तालेध डिण्डिमम् । उग्गोशेध घोशणम् । भो चालुदत्त पडिवालेहि । मा भाआहि । लहु ज्जेव मालीअशि ।)

**चारुदत्तः**—भगवत्यो देवता ।

**भिक्षुः**—(श्रुत्वा ससम्भ्रमम् ।) उपासिके त्वं किल चारुदत्तेन मारिताऽसीति चारुदत्तो मारयितुं नीयते । (उवाशिके तुमं किल चालुदत्तेण मालिदाशि त्ति चालुदत्तो मालिदुं णीअदि ।)

**वसन्तसेना**—(ससम्भ्रमम् ।) हा धिक् हा धिक् । कथं मम मन्दभागिन्याः कृत आर्यचारुदत्तो व्यापाद्यते । भो त्वरितं त्वरितमादेशय मार्गम् । (हद्धी हद्धी । कधं मम मन्दभाइणीए किदे अज्जचालुदत्तो वावादीअदि । भो तुरिदं तुरिदं आदेसेहि मग्गम् ।)

**भिक्षुः**—त्वरतां त्वरतां बुद्धोपासिकाऽऽर्यचारुदत्तं जीवन्तं समाश्वासयितुम् । आर्याः अन्तरमन्तरं दत्त । (तुवलदु तुवलदु बुद्धोवाशिका अज्जचालुदत्तं जीअन्तं शमश्शाशिदुम् । अज्जा अन्तलं अन्तलं देध ।)

**वसन्तसेना**—अन्तरमन्तरम् । (अन्तरं अन्तरम् ।)

**चाण्डालः**—आर्य चारुदत्त स्वामिनियोगोऽपराध्यति । तत्स्मर यत्स्मर्तव्यम् । (अज्ज चालुदत्त शामिणिओओ अवलज्झदि । ता शुमलेहि जं शुमलिदव्वम् ।)

**चारुदत्तः**—किं बहुना । ('प्रभवति—' (१०।३४) इत्यादि श्लोकं पठति ।)

**चाण्डालः**—(खड्गमाकृष्य ।) आर्य चारुदत्त उत्तानो भूत्वा समं तिष्ठ एकप्रहारेण मारयित्वा त्वां स्वर्गं नयावः । (अज्ज चालुदत्त उत्ताणे भविअ समं चिट्ठ । एक्कप्पहालेण मालिअ तुमं शग्गं णेम्ह ।)

(चारुदत्तस्तथा तिष्ठति ।)

**चाण्डालः**—(प्रहर्तुमीहते । खड्गपतनं हस्तादभिनयन् ।) ही कथम् ।

**आकृष्टः सरोषं मुष्टौ मुष्टिना गृहीतोऽपि ।**
**धरण्यां किमर्थं पतितो दारुणकोऽशनिसन्निभः खड्गः ॥ ३७ ॥**

**यथैतत्संवृत्तं तथा तर्कयामि न विपद्यत आर्यचारुदत्त इति । भगवति सह्यवासिनि प्रसीद प्रसीद । अपि नाम चारुदत्तस्य मोक्षो भवेत्तदाऽनुगृहीतं त्वया चाण्डालकुलं भवेत् । (ही कधम् ।**

VAS —(*Peering before her*) How! There's a big crowd of people in our front! Sir, please just find out what it may be Ujjayini seems to have raised itself in one spot, as though the earth had become burdened with an uneven load!

CH —And here is the last proclamation station So, strike the drum and repeat aloud the proclamation! (*Doing accordingly*) O Charudatta, get ready! Do not fear, you will be quickly dispatched!

CHAR —Ye gods in heaven!

BH —(*Hearing it, excitedly*) O worshipper of Buddha! Charudatta is being taken for being killed on a charge of having murdered you

VAS —(*In agitation*). Oh, alas! Oh, alas! How is it that the worthy Charudatta is being killed on account of me, the unlucky one! Sir, please show me the way very quickly

BH —Make haste, O worshipper of Buddha, make haste and comfort the worthy Charudatta while he still lives! Make way, sirs, make way!

VAS —Make room, make room!

CH —Noble Charudatta, it is our master's command that is guilty here So remember whatever you have to remember

CHAR —What more need I say? (*Recites the verse beginning "Although I am deemed a sinner" &c*)

CH —(*Drawing his sword*) Noble Charudatta, lie flat and keep straight We will despatch you with one stroke and send you to heaven

(Charudatta *lies as asked*)

CH —(*Is about to strike, gesticulating that the sword drops from his hand*) Ha! How's that?

Although I fiercely drew it by its hilt and grasped it in my fist, why has the sword, terrible like the thunderbolt, fallen on the ground? (37)

Since this has occurred, I infer that the worthy Charudatta won't be killed (after all) O divine Durga, thou that dwellest on the Sahya? Have mercy! If Charudatta happens to be saved, then forsooth the (whole) race of the Chandalas will have been blessed by you!

आअट्ठिदे[२] शलाश मुट्ठीए मुट्ठिणा गहीदे वि ।
चलणीए कीश पडिदे दालुणके अशणिशणिहे खग्गे ॥

जधा एद सवुत्त तधा तक्केमि ण विवज्जदि अज्जचालुदत्ते त्ति । भअवदि सज्झवाशिणि पशीद पशीद । अवि णाम चालुदत्तश्श मोक्खे भवे तदो अणुगहीद तुए चाण्डालउल भवे ।)

अपर —यथाज्ञप्तमनुतिष्ठाव । (जधाणत्त अणुचिट्ठम्ह ।)

प्रथम —भवतु । एव कुर्व । (भोदु[१] । एव कलेम्ह ।)

(इत्युभौ चारुदत्त शूले समारोपयितुमिच्छत ।)

( चारुदत्त 'प्रभवति—' (१०।३४) इत्यादि पुन पठति । )

भिक्षुर्वसन्तसेना च —(दृष्ट्वा ।) आर्या मा तावन्मा तावत् । आर्या एषाह मन्दभागिनी यस्या कारणादेष व्यापाद्यते । ( अज्जा मा दाव मा दाव । अज्जा एसा अह मन्दभाइणी जाए कारणादो एसो वावादीअदि ।)

चाण्डाल —(दृष्ट्वा ।)

का पुनस्त्वरितमेषाऽसपतता चिकुरभारेण ।
मा मेति व्याहरन्त्युत्थितहस्तेत एति ॥ ३८ ॥

(का उण तुलिद एशा अशपडन्तेण चिउलभालेण ।
मा मेत्ति वाहलन्ती उट्ठिदहत्था[२] इदो एदि ॥ )

वसन्तसेना—आर्य चारुदत्त किन्विदम् । ( इति पादयो पतति । ) ( अज्ज चारुदत्त किं ण्णेदम् ।)

भिक्षु —आर्य चारुदत्त किं न्विदम् । ( इति पादयो पतति । ) ( अज्ज चालुदत्त किं ण्णेदम् ।)

चाण्डाल —(सभयमपसृत्य[३] ।) कथ वसन्तसेना । ननु खल्वावाभ्या साधुर्न व्यापादित । ( कध वशन्तशेणा । ण क्खु अम्हेहिं शाहू ण वावादिदे । )

भिक्षु —(उत्थाय ।) अरे जीवति चारुदत्त । (अले जीवदि चालुदत्ते ।)

चाण्डाल —जीवति वर्षशतम् । (जीवदि वश्शशदम् ।[४])

वसन्तसेना—(सहर्षं ।) प्रत्युज्जीविताऽस्मि । (पच्चुज्जीविदम्हि ।)

चाण्डाल —तद्यावदेतद्वृत्त राज्ञो यज्ञवाटगतस्य निवेदयाव । (ता जाव एद वुत्तं राइणो जण्णवाडगदश्श णिवेदेम्ह । )

(इति निष्क्रामत ।)

---

१ भोदु भोदु २ उत्थिद ३ उपसृत्य ४ वस्सर (वत्सर), वरिस०

SECOND CH —Let us do as we were ordered

FIRST CH —Certainly Let us do so

( *Thereupon both prepare to fix* Charudatta *on the stake* )

( Charudatta *again recites the verse beginning* ' Although I am deemed a sinner ' &c )

BH & VAS —( *Observing* ) Forbear, sirs, forbear '—Gentlemen here I am, that same unlucky woman for whose sake he is being killed !

CH—( *Seeing* )

And who may this lady be, with her ample tresses fallen over her shoulders, that is quickly coming in this direction, with her hand raised, and saying ' Forbear, forbear ' ? (38)

VAS —Noble Charudatta, what does this mean ? ( *She falls on his breast* )

BH —Noble Charudatta, what may this be ? ( *He falls at his feet* )

CH —( *Moving off in alarm* ) How ! ( She is ) Vasantasena ! How very lucky that we did not kill an innocent person !

BH —( *Rising* ) Man, does Charudatta live ?

CH —He lives a hundred years !

VAS —( *Joyfully* ). I am restored to life again !

CH —So, then, let us first report this turn of events to the king who is in the sacrificial enclosure (*They start to go* )

---

मित्यर्थं । रूपानुरूपेण सदृशरूपेण ] ॥ ४१ ॥ कुत इति । [ बाष्पाम्बुधाराभि पयोघरौ स्नपयन्ती । विद्याऽमृतसजीवनी विद्या । ] विद्या इतरविविक्तात्मज्ञानम् ॥ ४२ ॥ त्वदर्थमिति । [देह देह । ' कायो देह क्लीबपुमो ' इत्यमर । उपजातिवृंत्तम् ॥ ४३ ॥ रक्तमिति । [ वरस्य जामातु वस्त्रम् । यद्वा पट्टवस्त्रम् । ] वरस्य यथा जामातुरिव । [ पर्यायालकार । वसन्ततिलक वृत्तम् ] ॥ ४४ ॥ पूर्वेति । [ प्रभविष्णुना सामर्थ्यवता । मनागीपत् ] ॥ ४५ ॥ नेनाऽपि । न एतद्व्यतिरिक्तेनान्येनेत्यर्थं । न प्रत्यभिजानाति । निर्वेद शान्ति वैषयिकेच्छानिवृत्ति । किमेतत्किमेतदिति शत्रूणा क्रूर कलकल । जयतीति । जयति सर्वोत्कर्षेण वर्तते । [ वृषभकेतु शिव । षण्मुख कार्तिकेय क्रौञ्चशत्रु क्रौञ्चाख्यस्य दैत्यस्य हन्ता । तदुक्त — ' क्रौञ्चे क्रौञ्चो हतो दैत्य क्रौञ्चाद्रौ हेमकन्दरे । स्कन्देन युद्ध्वा सुचिर चित्रमायी सुमायिना ' इति । ] तदनु जयति आत्मसात्करोति । [ शुभ्र कैलास केतुरिव यस्या

शकार — ( वसन्तसेनां दृष्ट्वा , सत्रासम । ) आश्चर्यम् । केन गर्भदासी जीवन प्रापिता । उत्क्रान्ता मे प्राणा । भवतु । पलायिष्ये । ( इति पलायते । ) ( हीमादिके । केण गब्भदाशी जीवाविदा । उक्कन्ताइ मे पाणाइ । भोदु । पलाइश्शम् । )

चाण्डाल —( उपसृत्य । ) अरे नन्वावयोरीदृशी राजाज्ञप्ति —येन सा व्यापादिता त मारयतमिति । तद्राष्ट्रियश्यालमेवान्विष्याव । ( अले ण अम्हाण ईदिशी लाआणत्ती–जेण शा वावादिदा त मालेध त्ति । ता लट्ठिअशालअ ज्जेव्व अण्णेशम्ह ।)

(इति निष्क्रान्तौ ।)

चारुदत्त —(सविस्मयम् ।)

केयमभ्युद्यते[1] शस्त्रे मृत्युवक्त्रगते मयि ।
अनावृष्टिहते सस्ये[2] द्रोणवृष्टिरिवागता[3] ॥ ३९ ॥

(अवलोक्य च ।)

वसन्तसेना किमिय द्वितीया समागता सैव दिव किमित्यम् ।
भ्रान्त मन पश्यति वा ममैना वसन्तसेना न मृताऽथ सैव ॥ ४० ॥

अथ वा ।

किं नु स्वर्गात्पुन प्राप्ता मम जीवातुकाम्यया[4] ।
तस्या रूपानुरूपेण किमुतान्येयमागता ॥ ४१ ॥

वसन्तसेना—( सास्रमुत्थाय पादयोर्निपत्य । ) आर्य चारुदत्त सैवाहं पापा यस्या. कारणादिय त्वयाऽसदृश्यवस्था प्राप्ता । (अज्ज चालुदत्त सा ज्जेव्व अहं पावा जाए कारणादो इअ तुए असरिसी अवत्था पाविदा ।)

( नेपथ्ये । )

आश्चर्यमाश्चर्यम् । जीवति वसन्तसेना । (इति सर्वे पठन्ति ।) (अच्चरिअं अच्चरिअम । जीवदि वसन्तशेणा ।)

चारुदत्त –(आकर्ण्य सहसोत्थाय [5]स्पर्शसुखमभिनीय निमीलिताक्ष एव हर्ष-गद्गदाक्षरम् ।) प्रिये वसन्तसेना त्वम् ।

वसन्तसेना—सैवाहं मन्दभाग्या । (सा ज्जेव्वाहं मन्दभाआ ।)

चारुदत्त —(निरूप्य सहर्षम् ।) कथ वसन्तसेनैव । (सानन्दम् ।)

कुतो बाष्पाम्बुधाराभि [6]स्नपयन्ती पयोधरौ ।
मयि मृत्युवश प्राप्ते विद्येव समुपागता ॥ ४२ ॥

---

१ केय समु० २ शस्ये ३ सम्यग्वृष्टि ४ जीवातु ५ स-स-स्पर्शसुखनिमी. ६स्नाप०.

SAK.—(*Seeing Vasantasena, in alarm*) Heavens! By whom was this born slave girl brought back to life? Now my life has (as good as) ended! Well, let me take to my heels (*He runs away*)

CH.—(*Approaching*) Oh, the king's order to us was to this effect—"Kill him by whom she was murdered." So let us go in pursuit of the royal brother-in-law himself

(*Exeunt*)

CHAR.—(*Full of wonder*)

While the weapon was raised and I was in the jaws of death, who is this lady that has come up, like a shower from the Drona cloud, (coming) on the crop withering owing to drought? (39)

(*Then, having observed*)

Is this a second Vasantasena? Or has that same (Vasantasena) thus come here from heaven? Or is my wandering mind seeing her (in illusion)? Or can it be that Vasantasena never died at all, and that this is the same? (40)

Or again

Has she come back again from heaven with a desire to restore me to life? Or is she some different lady, resembling her in appearance, that has come here? (41)

VAS.—(*Tearfully rising, and falling at his feet*) Noble Charudatta, it is my own sinful self, for whose sake you were reduced to this unmerited plight!

(*Behind the Scenes*)

Wonder, oh, wonder! Vasantasena is alive! (*All repeat these words*)

CHAR.—(*Hears, immediately rises, and exhibits pleasure at Vasantasena's touch Still keeping his eyes closed, and in a voice faltering in ecstasy*) Beloved mine, are you really Vasantasena?

VAS.—The very same, my own unlucky self!

CHAR.—(*Observing, joyfully*) How! She is Vasantasena and none else! (*Delightedly*)

Bathing your breasts with the streams of the water of tears, whence did you come, like the divine (re-vivifying) lore, when I was in the grasp of Death? (42)

प्रिये वसन्तसेने ।

त्वदर्थमेतद्विनिपात्यमान देह त्वयैव प्रतिमोचित मे ।
अहो प्रभाव प्रियसगमस्य मृतोऽपि को नाम पुनर्ध्रियेत ॥ ४३ ॥

अपि च । प्रिये पश्य[1] ।

रक्त तदेव वरवस्त्रमिय च माला
कान्तागमेन हि वरस्य यथा विभाति ।
एते च वध्यपटहध्वनयस्तथैव
जाता विवाहपटहध्वनिभि समाना ॥ ४४ ॥

**वसन्तसेना**—अतिदक्षिणतया किं न्विद व्यवसितमार्येण । (अदिदक्खिणदाए किं ण्णेद ववसिद अज्जेण ।)

**चारुदत्त**—प्रिये त्व किल मया हतेति—

पूर्वानुबद्धवैरेण शत्रुणा प्रभविष्णुना ।
नरके पतता[2] तेन मनागस्मि निपातित ॥ ४५ ॥

**वसन्तसेना**—( कर्णौ पिधाय । ) शान्त पापम् । तेनास्मि राजश्यालेन व्यापादिता । (सन्त पावम् । तेण म्हि राअसालेण वावादिता । )

**चारुदत्त**—(भिक्षु दृष्ट्वा ।) अयमपि क ।

**वसन्तसेना**—तेनानार्येण व्यापादिता । एतेनार्येण जीव प्रापिताऽस्मि । (तेण अणज्जेण वावादिदा । एदिणा अज्जेण जीवाविदम्हि ।)

**चारुदत्त**—कस्त्वमकारणबन्धु ।

**भिक्षु**—न प्रत्यभिजानाति मामार्य । अह स आर्यस्य चरणसवाहचिन्तक सवाहको नाम द्यूतकरैर्गृहीत एतयोपासिकयाऽऽर्यस्यात्मीय इत्यलकारपणनिष्क्रीतोऽस्मि । तेन च द्यूतनिर्वेदेन शाक्यश्रमणक सवृत्तोऽस्मि । एषाऽप्यार्या प्रवहणविपर्यासेन पुष्पकरण्डकजीर्णोद्यान गता । तेन चानार्येण न मा बहु मन्यस इति बाहुपाशबलात्कारेण मारिता मया दृष्टा । (ण पच्चभिजाणादि[3] म अज्जो । अह शे अज्जश्श चलणशवाहचिन्तए शवाहके णाम । जूदिअलेहिं गहिदे एदाए उवाशिकाए अज्जश्श केलके त्ति अलकालपणणिक्कीदे म्हि । तेण अ जूदणिव्वेदेण शक्कशमणके शवुत्ते म्हि । एशावि अज्जा पवहणविपज्जाशेण पुप्फकलण्डकजिण्णुज्जाण गदा । तेण अ अणज्जेण ण म बहु मण्णेशि त्ति बाहुपाशबलक्कालेण मालिदा मए दिट्ठा ।)

---

सा ताम् । मालिनी वृत्तम् ] ॥ ४६ ॥ हत्वेति । शेषभूता पुष्पदामायमानाम् । गुणभूतामिति केचित् । [ व्यसनगतमापद्ग्रस्तम् । पुष्पिताग्रा वृत्तम् ] ॥ ४७ ॥

---

१ पश्य पश्य. २ ताऽनेन. ३ ०आणादि.

Beloved Vasantasena!

This body of mine, which was about to be destroyed on your account, was saved by yourself (from that fate) Oh, the power of union with one's beloved person! (Else) who, being dead, could ever be brought back to life again? (43)

And, O my dear, see, moreover —

By the arrival of you, my beloved, that same red garment has become (like) a bridegroom's attire, and this garland decks me as though I were a bridegroom And similarly, these sounds of the drum of execution now resemble those of nuptial drums (44)

VAS —What is this that your noble self, in your extreme generosity, has brought on yourself?

CHAR —Beloved, under a charge that you were killed by me,

I was very nearly put to death by that powerful enemy of mine, who had from the very beginning conceived a hatred (against me) and who is to fall in hell (45)

VAS —(*Closing her ears*) Heaven forbid! It was that royal brother-in-law who killed me

CHAR —(*Seeing the* Bhikshu) And who is this, too?

VAS —I was killed by that wicked man but this gentleman restored me to life

CHAR —Who are you, that (thus) befriended her disinterestedly?

BH —Your worthy self does not recognize me I am that same person, named Samvahaka, employed as the Shampooer-of-the-feet of your noble self I was seized by gamblers, but this worshipper of Buddha bought me off giving an ornament as my ransom, simply because I belonged to your honour And through the disgust (which I then felt) for gambling, I turned a Buddhist mendicant This worthy lady had gone to the old *Pushpakarandaka* garden owing to an interchange of carriages, and she was forcibly strangled by that wicked fellow with the noose of his arms, because she didn't think highly of (i e love) him (Afterwards) I found her

---

हत्वेति। [बलेन सुसैन्येन मन्त्रेण सुनयोपदेशेन च विहीनं रिपुं हत्वा। प्रकर्षात्प्रभावातिशयात्। समग्रवसुधाया अविराज्य यस्मिन् तादृक् शत्रुराज्यं बलारेः इन्द्रस्य राज्यमिव प्राप्तम्। इन्द्रवज्रा वृत्तम्] ॥ ४८ ॥ दिष्ट्येति। [भो

( नेपथ्ये कलकल । )

जयति वृषभकेतुर्दक्षयज्ञस्य हन्ता
तदनु जयति भेत्ता षण्मुख क्रौञ्चशत्रु[1] ।
तदनु जयति कृत्स्ना शुभ्रकैलासकेतु
विनिहतवरवैरी[2] चार्यको गा विशालाम् ॥ ४६ ॥

( प्रविश्य सहसा । )

शर्विलक —

हत्वा त कुनृपमह हि पालक भो-
स्तद्राज्ये द्रुतमभिषिच्य चार्यक तम् ।
तस्याज्ञा शिरसि निधाय शेषभूता
मोक्ष्येऽह व्यसनगत च चारुदत्तम् ॥ ४७ ॥

हत्वा रिपु त बलमन्त्रहीन पौरान्समाश्वास्य पुन प्रकर्षात् ।
प्राप्त समग्र वसुधाधिराज्य राज्य[4] बलारेरिव[5] शत्रुराज्यम् ॥ ४८ ॥

(अग्रतो निरूप्य ।) भवतु । अत्र तेन भवितव्य यत्रायं जनपदसमवाय । अपि नामायमारम्भ[6] क्षितिपतेरार्यकस्यार्यचारुदत्तस्य जीवितेन सफल स्यात् । (त्वरिततरमुपसृत्य ।) अपयात जाल्मा । (दृष्ट्वा सहर्षम् ।) अपि ध्रियते चारुदत्त सह वसन्तसेनया । [7]सपूर्णा [8]खल्वस्मत्स्वामिनो मनोरथा ।

दिष्टचा भो व्यसनमहार्णवादपारा-
दुत्तीर्ण गुणधृतया सुशीलवत्या ।
नावेव प्रियतमया चिरान्निरीक्षे
ज्योत्स्नाढ्य [9]शशिनमिवोपरागमुक्तम् ॥ ४९ ॥

तत्कृतमहापातक कथमिवैनमुपसर्पामि । अथ वा सर्वत्रार्जव शोभते । ( प्रकाश मुपसृत्य बद्धाञ्जलि ।) आर्य चारुदत्त ।

चारुदत्त —ननु को भवान् ।

---

दिष्टया सुदैवेन अपारात् व्यसन महार्णव इव तस्मात् । गुण रज्जु तेन पक्षे गुणै धृतया सुशीलवत्या नावा इव प्रियतमया वसन्तसेनया उत्तीर्णमुद्धृत उपरागो राहुग्रासस्तस्मान्मुक्त ज्योत्स्नाढ्य शशिनमिव आर्यचारुदत्त चिरात् निरीक्षे । उपमारूपकयो ससृष्टि । पुष्पिताग्रा वृत्तम् ॥ ४९ ॥ येनेति । [ सोऽह कृत महापाप येन स । त्वामेवापकृतमेव ] ॥ ५० ॥ आर्यकेणेति । [ आर्यवृत्तेन

---

१ शत्रो २ ०वैरा ३ मन्त्रि, मित्र ४ आढ्य ५ सुरारे ६ नामारम्भ ७ सपूर्ण मनोरथ ८ सत्वरम० ९ इनाप०

( *A uproar is heard behind the scenes* )

Victory to the bull-bannered deity (Siva), the destroyer of Daksha's sacrifice ! After that victory to the six-faced (Kartikeya) the cleaver and the enemy of the Krauncha mountain ! And after that, victory to Aryaka, who has killed his mighty foe ( and conquered ) the whole vast expanse of the earth, having the white Kailasa mountain for its ( white ) banner ! ( 46 )

(*Entering suddenly* )

SARVILAKA —

Ye ( citizens ) ! Having killed that wicked king Palaka, and having immediately established that Aryaka as sovereign of his kingdom, I have ( reverently ) received with ( bent ) head his command as if it was the cast-off garland of worship, and will ( forthwith ) release Charudatta who is in danger ( 47 )

Having killed that enemy who lacked both strength and wise counsel, and having afterwards inspired confidence among the citizens through our ( superior ) prowess, we have acquired the whole enemy's kingdom, with sovereignty over the world, as if it were Indra's own kingdom ! ( 48 )

( *Looking before him* ) Yes He must be just there where this crowd of citizens is (to be seen) I hope that this enterprise of king Aryaka will be crowned with success by ( the saving of ) the life of the worthy Charudatta ! ( *Walking very swiftly towards them* ) Away, you rash people ! ( *Observing joyfully* ) Surely Charudatta is alive, and so is Vasantasena ! The heart's desire of my master is now fulfilled, indeed !

Aye ! By great good luck I am beholding after a long time, like the moon freed from eclipse and splendidly united with moonlight, ( Charudatta ) who has crossed the boundless and vast ocean of misery by the aid of his best beloved, possessing virtues and high moral character, as by means of a boat held fast by ropes and well steered (49)

But then, how possibly shall I approach him, as I have committed the great sin ( of theft, in his house ) ? Or why, straightforwardness is becoming on all occasions ( *Coming forward before them, folding his hands* ) Sir Charudatta !

CHAR —Ah, who are you ?

शर्विलक —

येन ते भवन भित्त्वा न्यासापहरण कृतम् ।
सोऽह कृतमहापापस्त्वामेव शरण गत ॥ ५० ॥

चारुदत्त —सख मैवम् । त्वयाऽसौ[1] प्रणय कृत । (इति कण्ठे गृह्णाति ।)

शर्विलक —अन्यच्च ।

आर्यकेणार्यवृत्तेन कुल[2] मान च रक्षता ।
पशुवद्यज्ञवाटस्थो दुरात्मा पालको हत ॥ ५१ ॥

चारुदत्त —किम् ।

शर्विलक —

त्वद्यान य समारुह्य गतस्त्वा शरण पुरा ।
पशुवद्वितते यज्ञे हतस्तेनाद्य पालक ॥ ५२ ॥

चारुदत्त —शर्विलक योऽसौ पालकेन घोषादानीय निष्कारण कूटागारे[3] बद्ध आर्यकनामा त्वया मोचित ।

शर्विलक —यथाऽऽह तत्रभवान् ।

चारुदत्त —प्रिय न प्रियम्[4] ।

शर्विलक —प्रतिष्ठितमात्रेण तव सुहृदाऽऽर्यकेणोज्जयिन्या [5]वेणातटे कुशावत्या राज्यमतिसृष्टम् । तत्प्रतिमान्यता प्रथम सुहृत्प्रणय । (परिवृत्य ।) अरे रे आनीयतामय पापो राष्ट्रियशठ ।

(नेपथ्ये ।)

यथाऽऽज्ञापयति शर्विलक ।

शर्विलक —आर्य नन्वयमार्यको राजा विज्ञापयति—इद मया युष्मद्गुणोपार्जित राज्यम् । तदुपयुज्यताम् ।

चारुदत्त —अस्मद्गुणोपार्जित राज्यम् ।

(नेपथ्ये ।)

अरे रे राष्ट्रियश्यालक एह्येहि । स्वस्याविनयस्य फलमनुभव ।

(तत प्रविशति पुरुषैरधिष्ठित पश्चाद्बाहुबद्ध शकार ।)

---

स्दातशोकेन । । यज्ञवाटो यज्ञस्थानम् । एतच्चापरिच्छिन्नजनसमर्देन प्रमादस्थानम् । तेन मर्माविकटवधं इति सूचयितुम् । [तत्र तिष्ठतीति यज्ञवाटस्थ । पशुवच्छागतुल्य हत ] ॥ ५१ ॥ त्वद्यानमिति । वितस्ते प्रमते यज्ञे पशुवत् ।

---

१ त्वया म २ कुलमान ३ गूढागारे, बन्धनेन बद्ध ४ प्रिय न ५ वेणी.

SAR —

I am that same man who broke into your house and stole that deposit, having committed that great sin, I now throw myself on your mercy ! ( 50 )

CHAR —Friend, say not so ! It was a *kindness* which you did to me ! ( *He embraces him by the neck* )

SAR —Moreover —

The wicked souled Palaka, who was staying in the sacrificial enclosure, was slaughtered like a ( sacrificial ) animal by Aryaka, of noble deeds, thus maintaining ( the greatness of ) his family and his honour ( 51 )

CHAR —What !

SAR —

He who formerly drove in your chariot and threw himself on your mercy, has to day slain Palaka like a ( sacrificial ) animal, in the course of a sacrifice that was being performed ( 52 )

CHAR —Sarvilaka ( do you mean ) that same person, named Aryaka, whom you helped to escape and who was brought by Palaka from his hamlet and imprisoned in a secret dungeon with out any cause ?

SAR —( It is ) as your honour says

CHAR — Then it is gratifying (news) to me, gratifying indeed !

SAR —Immediately on his being enthroned in Ujjayini, your friend Aryaka has bestowed on you the kingdom of Kusavati on the banks of the Vena ( river ) So please honour ( by your acceptance ) this first request of your friend ( *Turning round* ) You there ! Bring here that sinful scoundrel, the royal brother in law !

( *Behind the Scenes* )

As Sarvilaka orders !

SAR —Sir, king Aryaka has indeed requested you in these words—"This kingdom was acquired by me through your goodness It is thereefore at your disposal "

CHAR —( What !) The kingdom was acquired through *my* goodness ?

( *Behind the Scenes* )

Come, you brother-in law of the king, come along ! Taste the fruit of your own evil deeds !

( *Then enter* Sakara, *led in by the* guard *with his hands tied behind him* )

**शकार** —आश्चर्यम् ।

> **एव दूरमतिक्रान्त उद्दाम इव गर्दभ ।**
> **आनीत खत्वह बद्ध कुक्कुरोऽन्य इव दुष्कर ॥ ५३ ॥**

( दिशोऽवलोक्य । ) समन्तत उपस्थित एष राष्ट्रियबन्ध । त कमिदानीमशरण शरण व्रजामि । ( विचिन्त्य । ) भवतु । तमेवाभ्युपपन्नशरणवत्सल गच्छामि । ( इत्युपसृत्य । ) आर्य चारुदत्त परित्रायस्व परित्रायस्व । (इति पादयो पतति ।) (हीपादिके

> एव्व दूलमदिक्कन्ते उद्दामे विअ गद्दहे ।
> आणीदे क्खु हगे बद्धे हुडे अण्णे व्व दुक्कले ॥

शमन्तदो उवट्ठिदे एशे लश्टिअबन्धे । ता क दाणिं अशलणे शलण वजामि । भोदु । त ज्जेव्व अब्भुववण्णशलणवच्छल[1] गच्छामि । अज्ज चालुदत्त पलित्ताआहि पलित्ताआहि ।)

(नेपथ्ये ।)

आर्य चारुदत्त मुञ्च मुञ्च । व्यापादयावैतम् । ( अज्ज चालुदत्त मुञ्च मुञ्च । वावादेम्ह एदम् ।)

**शकार** —(चारुदत्त प्रति ।) भो अशरणशरण परित्रायस्व । (भो अशलण-शलणे पलित्ताआहि ।)

**चारुदत्त** —( सानुकम्पम् । ) अहह अभयमभय शरणागतस्य ।

**शर्विलक** —(सावेगम् ।) आ अपनीयतामय[2] चारुदत्तपार्श्वात् । (चारुदत्त प्रति ।) ननूच्यता किमस्य पापस्यानुष्ठीयतामिति ।

> **आकर्षन्तु[3] सुबद्ध्वैन श्वभि सखाद्यतामय ।**
> **शूले वा [4]तिष्ठतामेष पाट्यता क्रकचेन वा ॥ ५४ ॥**

**चारुदत्त** —किमह यद्ब्रवीमि तत्क्रियते ।

**शर्विलक** —कोऽत्र सदेह ।

**शकार** —भट्टारक चारुदत्त शरणागतोऽस्मि । तत्परित्रायस्व तत्परित्रायस्व । यत्तव सदृश तत्कुरु । पुनर्नेदृश करिष्यामि । (भश्टालआ चालुदत्त शलणागदे म्हि । ता पलित्ताआहि पलित्ताआहि । ज [illegible]तुए शलिश त कलेहि । पुणो ण ईदिश कलिश्शम् ।)

---

अद्य पालक हत ॥५२॥ एवमिति । [illegible] उद्दाम छिन्नबन्ध दूरमतिक्रान्त [illegible] अह दुष्कर । दुर्ग्रह इत्यर्थ । कुक्कुर इव आनीत ] ॥ ५३ ॥ [ [illegible]

---

१ लक्खण (रक्षण) [illegible] आनयत [illegible] तुज्ज

SAK —Wonderful !

Although I had escaped to such a long distance, like a donkey broken loose from his reins, I have indeed been brought back a captive, as if I were an untamed ( wild ) dog (53)

( *Looking in all directions* ) The king's brother in-law is now surrounded on all sides by these guards So then, being helpless, whose protection shall I now seek ? ( *Pondering* ) Yes I will approach that very same person, who is kind to those that seek his protection ( *So thinking, he goes fourth* ) Noble Charudatta, save me ! save me ! ( *He throws h mself at his feet* )

( *Behind the Scenes* )

Let him off, Sir Charudatta, let him off ! We will kill him

SAK —( *To* Charudatta ) Save me, sir, you who are the refuge of the helpless !

CHAR —( *Mercifully* ) Oh, pity ! ( I promise ) safety to you who seek my protection ! You are safe !

SAR —( *Impatiently* ) Oh ! Drag him off from Charudatta's side ! ( To Charudatta ) Well, sir, tell us what should be done with this sinful wretch

Let them ( Chandalas ) bind him tight and drag him away And then, should he be devoured by dogs, or lie on the stake, or be cut up with a saw ? (54)

CHAR —Well, will you do what I tell ?

SAR —What doubt is there about that ?

SAK —Master, Charudatta, I beseech your protection ! So save me, Oh, save me ! Do what behoves you ! I will never again behave similarly !

---

बन्ध निरोद्धा पुरुषवर्गं ]। आकर्षन्त्विति । [ एन शकार सुबद्ध्वा चाण्डाला आकर्षन्तु । अय श्वभि खाद्यता वा । क्रकचेन करपत्रेण ] ॥ ५४ ॥ शत्रुरिति । [ उपकारेण अनुग्रहेण हत कर्तव्य॰ । कृतापराधस्य शरणमागतस्य शत्रो प्राण-रक्षणमेव महान्दण्ड इत्यर्थं ] ॥ ५५ ॥ पुरुषै सह निष्क्रान्त । अत्र ल० दीक्षिता-इत पर नीलकण्ठेनापूरि। 'नेपथ्ये कलकल । पुनर्नेपथ्ये—' इत्यारभ्याग्रे (पृ ४०२) 'शर्वि०—दिष्टया जीवितसुहृद्वर्गं आर्यं । चारु०—युष्मत्प्रसादेन—' इत्यन्त ममाप्य 'यत्सूयादयभयत कविनोचितपात्रमेलन न कृतम् । सुन्दरयुक्तिभिररचयदाचन्दन-कोक्ति नीलकण्ठस्तत् ॥' इति निजनिर्मितिसूचिकामार्यां विरच्य समापितोऽयमधिको ग्रन्थ इति । ] [ महाराजप्रासादमार्यकप्रासादम् ]। न महीति । [ हे चारुचरिते

( नेपथ्ये पौरा । )

व्यापादयतम् । किंनिमित्त पातकी जीव्यते । (वावादेध । किंणिमित्त पादकी जीवावीअदि ।)

(वसन्तसेना वध्यमाला चारुदत्तस्य कण्ठादपनीय शकारस्योपरि क्षिपति । )

शकार —गर्भदासीपुत्रि प्रसीद प्रसीद। न पुनर्मारयिष्यामि। तत्परित्रायस्व (गब्भदाशीए पशीद पशीद । ण उण मालइश्शम् । ता पलित्ताआहि)

शर्विलक —अरे रे अपनयत । आर्य चारुदत्त आज्ञाप्यताम्—किमस्य पापस्यानुष्ठीयताम् ।

चारुदत्त —किमहं यद्ब्रवीमि तत्क्रियते ।

शर्विलक —कोऽत्र सदेह ।

चारुदत्त —सत्यम् ।

शर्विलक —सत्यम् ।

चारुदत्त —यद्येव शीघ्रमयम् ।

शर्विलक —किं हन्यताम् ।

चारुदत्त —न हि नहि । मुच्यताम् ।

शर्विलक —किमर्थम् ।

चारुदत्त —

शत्रु कृतापराध शरणमुपेत्य पादयो पतित ।
शस्त्रेण न हन्तव्य —

शर्विलक —एवम् । तर्हि श्वभि खाद्यताम् ।

चारुदत्त —न हि ।

उपकारहतस्तु कर्तव्य ॥ ५५ ॥

शर्विलक —अहो आश्चर्यम् । किं करोमि । वदत्वार्य [1] ।

चारुदत्त —तन्मुच्यताम् ।

शर्विलक —मुक्तो भवतु ।

शकार —(आश्चर्यम् ।) प्रत्युज्जीवितोऽस्मि । (इति पुरुषै सह निष्क्रान्त [2]।) (हीमादिके । पच्चुज्जीविदे म्हि ।)

(नेपथ्ये कलकल ।)

( पुनर्नेपथ्ये । )

एषाऽऽर्यचारुदत्तस्य वधूरार्या धूता पदे वसनाञ्चले विलगन्त दारकमाक्षिपन्ती बाष्पभरितनयनैर्जनैर्निवार्यमाणा प्रज्वलिते पावके प्रविशति । (एसा अज्जचालुदत्तस्स वहुआ अज्जा धूदा पदे वसणञ्चले विलग्गन्त दारअ आक्खिवन्ती बाप्फभरिदणअणेहिं जणेहिं णिवारिज्जमाणा पज्जलिदे पावए पविसदि ।

1 वदत्वार्य 2 अत पर ४०२ पष्ठ यावन्मच्छकटिकस्थोऽधिको ग्रन्थ

( *Behind the Scenes, the citizens speaking* )

Kill him ! Why is the sinner allowed to live ?

( Vasantasena *removes the garland, the badge of execution, from* Charudatta's *neck and throws it on* Sakara )

SAK —Daughter of a born slave-maid, have mercy ! I won't kill you again ! So please save me !

SAR —You there ! Take him away ! Noble Charudatta, please order what we should do with this sinful miscreant.

CHAR —Well, will you do as I tell ?

SAR —What doubt is there about that ?

CHAR —Really ?

SAR —Really,

CHAR —If so, then let him be quickly—

SAR —What, slain ?

CHAR —No, no,—*released* !

SAR —For what reason ?

CHAR —

If an enemy, having done evil, beseeches protection and throws himself at the feet, he should never be killed with weapons,—

SAR —Quite so, then he should be devoured by dogs ?

CHAR —No !

But he should be killed ( so to say ), by being smothered with kindness ! ( 55 )

SAR —Oh ! Wonderful ! What shall I do ? Let your honour speak ( further )

CHAR —So let him go !

SAR —( Well ), let him be set free !

SAK —Bless me, I am restored to life again ! ( *Exit with the* guards )

( *An uproar behind the Scenes* )

( *Again, behind the Scenes* )

Here this worthy dame Dhuta, wife of the noble Charudatta, s about to enter the blazing fire, ( even ) casting off her son who is clinging to her legs and to the hem of her garment, and even though she is being dissuaded by the people whose eyes are brimming with tears !

**शर्विलक**—(आकर्ण्य नेपथ्याभिमुखमवलोक्य ।) कथ चन्दनक । चन्दनक किमेतत् ।

**चन्दनक**—( प्रविश्य । ) किं न पश्यत्यार्य । महाराजप्रासाद दक्षिणेन महाञ्जनसमर्दो वर्तते । ( 'एसा . .. इत्यादि पुन पठति । ) कथित च मया तस्यै यथा—आर्ये मा साहस कुरुष्व । जीवत्यार्यचारुदत्त इति । पर तु दु खव्यापृततया क श्रृणोति क प्रत्ययते । (किं ण पेक्खदि अज्जो । महाराअप्पासाद दक्खिणेण महन्तो जणसमद्दो वट्टदि । कधिद अ मए तीए जधा—अज्जे मा साहस करेहि । जीवदि अज्जचारुदत्तो त्ति । पर तु दुक्खवावुडदाए को सुणेदि को पत्तिआएदि ।)

**चारुदत्त**—( सोद्वेगम् । ) हा प्रिये जीवत्यपि मयि किमेतद्व्यवसितम् । (ऊर्ध्वमवलोक्य दीर्घं नि श्वस्य च ।)

> **न महीतलस्थितिसहानि भवच्चरितानि चारुचरिते यदपि ।**
> **उचित तथाऽपि परलोकसुख न पतिव्रते तव विहाय पतिम् ॥ ५६ ॥**

( इति मोहमुपगत [१] । )

**शर्विलक**—अहो प्रमाद ।

> **त्वरया[२] सर्पण तत्र मोहमार्योऽत्र चागत ।**
> **हा धिक्प्रयत्नवैफल्य दृश्यते सर्वतोमुखम् ॥ ५७ ॥**

**वसन्तसेना**—समाश्वसित्वार्य । तत्र गत्वा जीवयत्वार्याम् । अन्यथाऽधीरत्वेनानर्थ सभाव्यते । (समस्ससिदु अज्जो । तत्त गदुअ जीवावेदु अज्जाम् । अण्णधा अधीरत्तणेण अणत्थो सभावीअदि ।)

**चारुदत्त**—(समाश्वस्य सहसोत्थाय ।) हा प्रिये क्वासि । देहि मे प्रतिवचनम् ।

**चन्दनक**—इत इत आर्य । (इदो इदो अज्जो ।)

(इति सर्वे परिक्रामन्ति ।)

( तत प्रविशति यथानिर्दिष्टा धूता चेलाञ्चलमाकर्षन्विदूषकेणानुगम्यमानो रोहसेनो रदनिका च ।)

**धूता**—(सास्रम् ।) जात मुञ्च माम् । मा विघ्न कुरुष्व । बिभेम्यार्यपुत्रस्यामङ्गलाकर्णनात् । ( इत्युत्थायाञ्चलमाकृष्य पावकाभिमुख परिक्रामति । ) ( जाद मुञ्चेहि मम् । मा विग्घ करेहि । भीआमि अज्जउत्तस्स अमङ्गलाकण्णणादो ।)

**रोहसेन**—मातरार्ये प्रतिपालय माम् । त्वया विना न शक्नोमि जीवित धर्तुम् । (इति त्वरितमुपसृत्य पुनरञ्चल गृह्णाति ।) (माद अज्जए पडिवालेहि मम । तुए विणा ण सक्कुणोमि[३] जीविद धारेदुम् ।)

---

१ उपागत २ त्वराया . ३ सक्कणोमि

SAR —*Listening, looking towards the curtain*) How ! Here's Chandanaka ! Well, Chandanaka, what's this ?

CHAND —(*Entering*) What ! Has not your honour noticed ? There's a big crowd of people to the south of the royal palace (*He again repeats* "*Here this worthy dame Dhuta*" *&c*) And I said to her—"Madam, please do not act (thus) rashly, for the worthy Charudatta is alive" But when one is affected by grief, who will listen and who will believe ?

CHAR —(*In distress*) Oh, my dear, what is it that you have resolved upon, while I am still alive ? (*Looking upwards and heaving a deep sigh*)

O, you of noble character ! Although your deeds are such that the earth is not a fitting residence for them, still, O faithful wife, it is not proper on your part to enjoy the happiness of the next world, leaving your husband behind. (56)

(*He falls in a swoon*)

SAR —On what a mishap !

We ought to be proceeding thither (*i e* to Dhuta) quickly, but here his honour has swooned ! Alas ! Our efforts seem to come to naught in all directions ! (57)

VAS —Your honour should calm yourself ! You should go there and induce the worthy lady to live Otherwise, by (such) weakness, a disaster will probably befall !

CHAR —(*Coming to himself, getting up at once*) O, my dear, where are you ? Give me a reply !

CHAND —Come, sir, come (this way)!

(*Thereupon all walk about*)

(*Then enter* Dhuta *as described, and* Rohasena *clinging to the skirts of her garment, and accompanied by the* Vidushaka, *and* Radanika)

DHU.—(*Tearfully*) Leave me child ! Do not hinder me ! I am afraid (to live longer) lest I hear the evil tidings concerning my husband (*She gets up, frees her skirt, and walks towards the fire*)

ROH —O Mother, O Mamma ! Please wait for me, (for) I shall not be able to remain alive without you ! (*He swiftly approaches her and again seizes her skirts*)

**विदूषक**—भवत्यास्तावद्‌ब्राह्मण्या भिन्नत्वेन चिताधिरोहण पापमुदाहरन्ति ऋषय । (भोदीए दाव बम्हणीए भिण्णत्तणेण चिदाधिरोहण पाव उदाहरन्ति रिसीओ ।)

**धूता**—वर पापाचरणम् । न पुनरार्यपुत्रस्यामङ्गलाकर्णनम् । (वर पावाचरणे[2] । ण उण अज्जउत्तस्स अमङ्‌गलाकण्णणम् ।)

**शर्विलक**—(पुरोऽवलोक्य ।) आसन्नहुतवहाऽऽर्या । तत्त्वर्यता त्वर्यताम् ।

(चारुदत्तस्त्वरित परिक्रामति ।)

**धूता**—रदनिके अवलम्बस्व दारकम् । यावदह समीहित करोमि । (रअणिए अवलम्ब दारअ । जाव अह समीहिद करेमि ।)

**चेटी**—(सकरुणम् ।) अहमपि यथोपदेशिन्यस्मि भट्टिन्या । (अह पि जधोवदेसिणिम्हि भट्टिणीए ।)

**धूता**—(विदूषकमवलोक्य ।) आर्यस्तावदवलम्बताम् । (अज्जो दाव अवलम्बेदु ।)

**विदूषक**—(सावेगम् ।) समीहितसिद्धचै प्रवृत्तेन ब्राह्मणोऽग्रे कर्तव्य । अतो भवत्या अहमग्रणीर्भवामि । (समोहिदसिद्धिए पउत्तेण बम्हणो अग्गदो कादव्वो । अदो भोदीए अह अग्गणी होमि ।)

**धूता**—कथ प्रत्यादिष्टाऽस्मि द्वाभ्याम् । (बालकमालिङ्‌ग्य ।) जात त्वमेव पर्यवस्थापयात्मानमस्माक तिलोदकदानाय । अतिक्रान्ते किं मनोरथै । (सनिःश्वासम् ।) न खल्वार्यपुत्रस्त्वा पर्यवस्थापयिष्यति । (कध पच्चादिट्ठम्हि दुवेहिं । जाद तुम ज्जेव्व पज्जवट्ठावेहि अत्ताण अम्हाण तिलोदअदाणाअ । अदिक्कन्ते किं मणोरहेहिं । । ण क्खु अज्जउत्तो तुम पज्जवट्ठाविस्सदि ।)

**चारुदत्त**—(आकर्ण्य सहसोपसृत्य ।) अहमेव पर्यवस्थापयामि बालिशम्[1] । (इति बालक बाहुभ्यामुत्थाप्य वक्षसाऽऽलिङ्‌गति ।)

**धूता**—(विलोक्य ।) आश्चर्यम् । आर्यपुत्रस्येव स्वरसयोग । (पुनर्निपुण निरूप्य सहर्षम् ।) दिष्टयाऽऽर्यपुत्र एवैष । प्रिय मे प्रियम् । (अम्महे । अज्जउत्तस्स ज्जेव्व सरसजोओ । दिट्ठिआ अज्जउत्तो ज्जेव्व एसो । पिअ मे पिअम् ।)

**बालक**—(विलोक्य सहर्षम् ।) आश्चर्यम् । तातो मा परिष्वजते । (धूता प्रति ।) आर्ये वर्धसे । तात एव मा पर्यवस्थापयति (इति प्रत्यालिङ्‌गति । (अम्मो । आवुको म परिस्सजदि । अज्जए वड्ढवीअसि । आवुको ज्जेव्व म पज्जवट्ठावेदि ।)

---

रमणीयवृत्ते यद्यपि भवत्या चरितानि सत्कृत्यानि महीतलस्थितिसहानि न । स्वर्गोचितान्येवेत्यर्थ । तथाऽपि हे पतिव्रते पतिं विहाय तव परलोकसुख न उचितम् ।

---

१ वत्स २ चरण ३ पधोव० (पथोप०)

VID —As for you, a Brahman lady, the sages have declared it a sin to mount the funeral pyre separately from ( the corpse of ) the husband

DHU —It is better to commit that sin, rather than hear the evil tidings about my husband !

SAR —( *Looking before him* ) The good lady is just near the fire, so make haste, make haste !

( Charudatta *hastily walks up* )

DHU —O Radanika, please take care of the boy, so that I may do what I wish

THE MAID —( *mournfully* ) I, too, am going to do what I have learnt from my mistress !

DHU —( *Looking at the* Vidushaka ) You, sir, please look after the child

VID —( *With a pang* ), Anybody setting about to accomplish his desire has to follow the lead of a Brahmana So I will precede your ladyship ( in this matter )

DHU —How ! they both have refused my request ! ( *Embracing the boy* ) Child, you yourself should compose ( take care of ) yourself that you may offer to both of us the ( obsequial ) sesamum-mixed water Of what avail are one's desires, when a thing is past( *i e* the person concerned is out of reach ) ? ( *Sighing* ) For your father will not indeed take care of you !

CHAR —( *Hearing it and coming up suddenly* ). I myself will take care of my boy ! ( *He lifts up the boy with his arms and clasps him to his breast* )

DHU —( *Seeing* ) Wonderful ! It seems like the voice of my husband ! ( *Again peering closely, joyfully* ). Oh, good luck ! It is my lord himself ! It is gratifying to me, gratifying indeed !

THE BOY—( *Seeing, with delight* ) Wonderful ! It is father who is embracing me ! ( *To* Dhuta ) Mamma, you are now happy ! It is father himself who is taking care of me ! ( *He embraces him in return* )

---

प्रमिताक्षरा वृत्तम् ] ॥ ५६ ॥ त्वरयेति । [ तत्र त्वरया सर्पण गमन उचितम् । अत्र च आर्यो मोहमागत । हा धिक् सर्वतोमुख प्रयत्नवैफल्य दृश्यते ] ॥ ५७ ॥ अहमेवेति । पर्यवस्थापनमाचार इति कृत्वा स्वयमेव क्षमोऽहमिति भाव

**चारुदत्त** —(धूता प्रति।)

हा प्रेयसि प्रेयसि विद्यमाने कोऽय कठोरो व्यवसाय आसीत।
अम्भोजिनी लोचनमुद्रण किं भानावनस्तगमिते करोति ॥ ५८ ॥

**धूता**—आर्यपुत्र अत एव साऽचेतनेत्युच्यते (अज्जउत्त अदो ज्जेव सा अचेतणेत्ति उच्चीअदि[१]।)

**विदूषक** —(दृष्ट्वा सहर्षम्।) आश्चर्य भो एताभ्यामेवाक्षिभ्या प्रियवयस्य प्रेक्ष्यते। अहो सत्या प्रभाव यनो ज्वलनप्रवेशव्यवसायेनैव प्रियसमागम प्रापिता। (चारुदत्त प्रति।) जयतु जयतु प्रियवयस्य। (ही ही भो एदेहि ज्जेव अच्छीहिं पिअवअस्सो पेक्खीअदि। अहो सदीए पहावो जदो जलणप्पवेशव्ववसाएण ज्जेव पिअसमागम पाविदा। जेदु जेदु पिअवअस्सो।)

**चारुदत्त** —एहि मैत्रेय। (इत्यालिङ्गति।)

**चेटी**—अहो सविधानकम्। आर्य वन्दे। (इति चारुदत्तस्य पादयो पतति।) (अहो सविधाणअम। अज्ज वन्दामि।)

**चारुदत्त** —(पृष्ठे कर दत्त्वा।) रदनिके उत्तिष्ठ। (इत्युत्थापयति।)

**धूता**—(वसन्तसेना दृष्ट्वा।) दिष्टचा कुशलिनी भगिनी। (दिठ्ठिआ कुसलिणी बहिणिआ।)

**वसन्तसेना**—अधुना कुशलिनी सवृत्ताऽस्मि। (अहुणा कुसलिणी सवुत्तम्हि।)

(इत्यन्योन्यमालिङ्गत।)

**शर्विलक** —दिष्टचा जीवितसुहृद्वर्ग आर्य।

**चारुदत्त** —युष्मत्प्रसादेन।

**शर्विलक** —आर्ये वसन्तसेने परितुष्टो राजा भवती वधूशब्देनानुगृह्णाति।

**वसन्तसेना** —आर्य कृतार्थाऽस्मि। (अज्ज कदत्थम्हि।)

**शर्विलक** —(वसन्तसेनामवगुण्ठच चारुदत्त प्रति।) आर्य किमस्य भिक्षोः क्रियताम्।*

---

**हा प्रेयसीति।** [हा कष्ट हे प्रेयसि दयते प्रेयसि प्रियतरे मयि विद्यमाने कोऽय कठोर निष्ठुर व्यवसाय अग्निप्रवेशरूप आसीत्। भानौ अनस्तगमिते कालेनास्तमप्रापिते अम्भोजिनी लोचनमुद्रण पद्मकोच करोति किम्। न करोत्येव। इन्द्रवज्रा वृत्तम् ॥ ५८ ॥ लब्धेति। [चारित्रस्य शुद्धि निष्कलङ्कता लब्धा। वसन्तसेना-मारणापवादपरिहारादिति भाव। एष शत्रु शकार। प्रोत्खातमुन्मूलितमराति-कुल येन स तथा। प्रियसुहृदार्यक राजा सन् अचला पृथ्वी शास्ति। इय प्रिया

---

१ चुम्बीअदि (चुम्ब्यते)

CHAR —( *To* Dhuta )

O my love ! What means this terrible attempt on your part while your dearest one ( husband ) still lived ? Does the sun-lotus-plant close its eyes ( *i e* its flowers ), while the sun has not set ? (58)

DHU —My lord, it is for that that it is described as inanimate,

( *Seeing, joyfully* ) Oh ! Wonder ! With these self same eyes I am beholding my dear friend ! Oh, the might of a chaste wife ! By merely resolving upon immolating herself in the fire she has been united with her beloved husband ! ( *To* Charudatta ) Victory to my dear friend !

CHAR —Come, Maitreya ! ( *Embraces him* )

THE MAID —Oh, the wonderful turn of events ! Sir, I salute you ! ( She *falls at* Charudatta's *feet* )

CHAR —( *Laying his hand on her back* ) Rise, O Radanika ! ( *He helps her to rise* )

DHU —( Seeing Vasantasena ) Good luck ! My sister is safe !

VAS —Now I am safe, indeed !

( *They both embrace each other* ).

SAR —By good luck all your honour's friends are now safe !

CHAR —It is ( rather ) by your favour ( that it is so )

SAR —Madam Vasantasena, the king is highly pleased ( with you ) and has graciously bestowed on you the title of a wedded wife !

VAS —Sir, my wishes are fulfilled !

SAR —( *Putting the veil on* Vasantasena, *to* Charudatta ) Sir, what should be done for this Bhikshu ?

---

भूय पून प्राप्ता । प्रियसुहृदि सगत. भत्रान्मम बयस्य जात । किं चातिरिक्त उक्तेभ्योऽन्यत् लम्य यदपरमधुनाऽह भवन्त प्रार्थये । स्रग्धरा वृत्तम् ] ॥ ५९ ॥ काश्चिदिति । [ विधि काश्चित् तुच्छयति । तुच्छान् रिक्तानित्यर्थ· । करोति । काश्चित्प्रपूरयति काश्चिदुन्नतिं नयति । काश्चित्पातविधौ करोति । काश्चित्पुन आकुलान् स्रस्तबन्धतयाऽर्धभरितानेवावलम्बमानान् नयति । करोतीत्यर्थं । इमा लोकस्थितिं अन्योन्य प्रतिपक्षाणामुन्नत्यवनत्यादिना सहतिर्यस्या तादृशी बोधयन् । एष कूपयन्त्र वार्युद्धरणयन्त्र तस्य या घटिकास्तासा न्याय एकस्या अधोमज्जन मेकस्या रिक्तीभाव एकस्या जलपूरणमितिरूप तत्र प्रसक्त विधि. क्रीडति । अत्र

**चारुदत्त** —भिक्षो किं तव बहुमतम् ।

**भिक्षु** —इदमीदृशमनित्यत्वं प्रेक्ष्य द्विगुणतरो मम प्रव्रज्यायां बहुमानः संवृत्तः । ( इम ईदिशं अणिच्चत्तणं पेक्खिअ दिउणतले मे पव्वज्जाए बहुमाणे संवुत्ते ।)

**चारुदत्त** —सखे दृढोऽस्य निश्चयः । तत्पृथिव्यां सर्वविहारेषु कुलपतिरयं क्रियताम् ।

**शर्विलक** —यथाऽऽहार्यः ।

**भिक्षु** —प्रियं नः प्रियम् । (पिअं णो पिअम् ।)

**वसन्तसेना**—सांप्रतं जीवापितास्मि । (संपदं जीवाबिदम्हि ।)

**शर्विलक** —स्थावरकस्य किं क्रियताम् ।

**चारुदत्त** —[1]सुवृत्तोऽदासो भवतु । ते चाण्डालाः सर्वचाण्डालानामधिपतयो भवन्तु । चन्दनकः[2] पृथिवीदण्डपालको भवतु । तस्य राष्ट्रियश्यालस्य यथैव[3] क्रिया पूर्वमासीद्वर्तमाने तथैवास्तु ।

**शर्विलक** —एवं यथाऽऽहार्यः । परमेनं मुञ्च मुञ्च । व्यापादयामि ।

**चारुदत्त** —अभयं शरणागतस्य । ( 'शत्रुः कृतापराधः—' (१०।५५) इत्यादि पठति । )

**शर्विलक** —तदुच्यतां किं ते भूयः प्रियं करोमि[4] ।

**चारुदत्त** —अतः परमपि[5] प्रियमस्ति ।

लब्धा [6]चारित्रशुद्धिश्चरणनिपतितः शत्रुरप्येष मुक्तः
प्रोत्खातारातिमूलः प्रियसुहृदचलामार्यकः शास्ति राजा ।
प्राप्ता भूयः प्रियेयं प्रियसुहृदि भवान्संगतो मे वयस्यो
लभ्यं किं चातिरिक्तं यदपरमधुना प्रार्थयेऽहं भवन्तम् ॥ ५९ ॥

---

समानार्थं पद्यं शाकुन्तले—'यात्येकतोऽस्तशिखरं पतिरोषधीनामाविष्कृतोऽरुण-पुरःसर एकतोऽर्कः । तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां लोको नियम्यत इवात्म-दशान्तरेषु ॥' इति । निदर्शनालंकारः । शार्दूल० वृत्तम् ] ॥ ६० ॥ [ भरतवाक्यं नटवाक्यम् । नाटकाभिनयसमाप्तौ गृहीतां भूमिकां विहाय भरततां प्रतिपन्नेन नटेन या आशीर्दीयते सा भरतवाक्यमित्युच्यते । यदाह भरतः—'अन्ते काव्यस्य नित्यत्वा-त्कुर्यादाशिषमुत्तमाम्' इति ] । क्षीरिण्य इति । [ गावः क्षीरिण्यः प्रचुरदुग्धवत्यः सन्तु । भूमार्थे इति । वसुमती पृथ्वी सर्वं सपन्नं सस्यं यस्याः तथा अस्तु । पर्जन्यः

---

१ सुवृत्त अ०, त्तोऽयमदा० २ चन्दनकस्य पृथ्वीदण्डपालकता. ३ यथैव क्रिया पूर्वं वर्तमाना तथैवास्तु,..वर्तमाने तथैवास्तु ४ उपकरोमि ५ परं प्रियं, परमस्ति प्रियं ६ चारित्र्य ७ बुद्धि ८ दवमी

काश्चित्तुच्छयति[1] प्रपूरयति वा काश्चिन्नयत्युन्नतिं
काश्चित्पातविधौ[2] करोति च पुनः काश्चिन्नयत्याकुलान् ।
अन्योन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधय-
न्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः ॥ ६० ॥

तथापीदमस्तु ।

(भरतवाक्यम् ।)

क्षीरिण्यः सन्तु गावो भवतु वसुमती सर्वसंपन्नसस्या[3]
पर्जन्यः कालवर्षी सकलजनमनोनन्दिनो वान्तु वाताः ।
मोदन्तां जन्मभाजः सततमभिमता ब्राह्मणाः सन्तु सन्तः
श्रीमन्तः पान्तु[4] पृथ्वीं प्रशमितरिपवो धर्मनिष्ठाश्च[5] भूपाः ॥ ६१ ॥

(इति निष्क्रान्ताः सर्वे ।)

संहारो[6] नाम दशमोऽङ्कः ।

समाप्तं[7] मृच्छकटिकम् ।

---

मृच्छकटिकविवृतिरियं गणपतिचित्तान्तपाारपर्यन्ता ।
पृथ्वीधरकृतिरुपनयतु संतोषं कृतिसमुद्रे ॥
इति दशमोऽङ्कः ॥

---

१ दूषयति २ पातं. ३ शस्या. ४ पान्तु पृथ्व्यां, पान्तु सर्वाप्रतिहत. ५ ब्रह्म ६ इति मृच्छकटिकायां संहा०, इति मृच्छकटिकप्रकरणे संहारो ७ समाप्ता चेयं मृच्छकटिका.

It empties some and fills others, some it raises up and others it causes to go down, while some it keeps in (anxious) suspense, thus bringing home to the people this course of the world which consists of opposites mutually meeting together, does Destiny play with all creatures, being bent upon following the maxim of "the water wheel and the buckets" (60)

Still, let there be this —

(*The Benediction*)

May cows yield (plenty of) milk, the earth produce all kinds of grains in abundance, the clouds shower rain in due season, and the winds blow so as to gladden the hearts of all people! May all creatures always rejoice, the Brahmanas be ever respected, and the virtuous become rich And may righteous kings subdue their foes and govern the earth (justly)! (61)

(*Exeunt Omnes*)
*Here ends Act X, styled*
"THE CONCLUSION"

---

**FINIS**

# मृच्छकटिकस्थसुभाषितसंग्रहः ।



1 Sentences [ Page

II —Slokas

# श्लोकसूची

# Index of Important Words

*( The figures refer to the pages of this Edition )*

# NOTES

## ACT I

P. 7 Sanskrit writers generally introduce their works with a benediction ( आशी ), or a salutation to their favourite deity (नमस्क्रिया). In dramas this purpose is served by the Nandi, which is enjoined by Bharata ( see com ) as necessary for the removal of obstacles and thereby for the safe completion of the work undertaken We find play-writers from Sudraka downwards, conforming to this rule of Bharata Bhasa, Sudraka's predecessor, however, often dispenses with the Nandi probably treating it as the last part of the theatrical preliminaries (पूर्वरङ्ग) which are gone through behind the curtains Thus the *Charudatta* opens at once with the stage direction 'नान्द्यन्ते तत प्रविशति सूत्रधार Sudraka was a worshipper of Siva ( see sl 4 ), and hence he has addressed both the stanzas of the Nandi to that deity In the first sl , Siva is referred to as completely lost in abstract meditation, and so his *Samadhi* is invoked for granting protection Sanskrit poets often address their prayer for protection to some act of, or some thing connected with, the deity, instead of to the deity directly *Cf* the Nandi of Mudr (शाठ्यमव्याद्विभोर्व ), Mal - Madh (वैनायक्य वदनविधुतय &c ), Ratna , Veni. &c.

पर्यङ्क &c —The principal sentence is शभो शून्येक्षण० समाधि व पातु, the genitives go with शभो पर्यङ्क—more generally known as वीरासन, is one of the five principal postures (for these see our notes on Ragh XIII 52 ) assumed in the practice of Yoga It consists in sitting down with the upper part of the body raised straight up perpendicularly, with one foot placed on the other thigh passing it through the knee-joint of that leg, and then placing the other foot on the other thigh It is thus defined by Vasishtha—एकपादमथैकस्मिन्विन्यस्योरुणि सस्थितम् । इतरस्मिंस्तथा चान्य वीरासनमुदाहृतम् ॥ (as quoted by Malli on Ragh. XIII 52)

ग्रन्थि—the placing of the feet thus crosswise being firmly held together, तस्य बन्धाय for keeping it fast य द्विगुणितस्य भुजगस्य आश्लेष तेन &c , see com आश्लेष—embrace, coiling round

Siva sat in the Virasana posture, and the serpent lay doubly coiled fast round the squatting position of the body (the base of the hips and the knees) Mr Raddisastri contends that this is not the meaning of पर्यङ्क here, he thinks it means पर्यपट्टक which means 'sitting up with the knees raised up by firmly fastening an upper garment round the back and the knees' But this meaning does not suit here at all. If the serpent was fastened like a garment round the back and the knees, then we do not get the द्विगुणितभुजगाश्लेष, and the knees also do not become संवीत (encircled) as the garment passes *round* and not *over* the knees. Again, this posture is not suited to Samadhi at all Patanjali defines an *asana* as स्थिरसुख, which Virasana is For Samadhi the body must be in a state of equipoise, such as is described by Kalidasa in his Kum see Kum III 15, and Bg VI. 11-13.

अन्त प्राणावरोध—The restraining within of the vital airs in the body so as to arrest their functions, suppression of breath. व्युपरत—ended, suspended इन्द्रिय is derived as इन्द्रस्य आत्मन लिङ्ग करणेन कर्तुरनुमानात्, the sign (for inference) of the soul, fr. इन्द्र and aff (घच), see also Pan V 2 93 There are eleven *Indriyas*, the five organs of action, and the six organs of sense, मन कर्णौ तथा नेत्रे रसना च त्वचा सह । नासिका चेति षट् तानि धीन्द्रियाणि प्रचक्षते ॥ Here the latter six are meant रुद्ध—restrained or checked from outer perception These six senses naturally look out, they must be turned inside *Cf* पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन् । &c Kathop II 1. 1, see also the quotation from योगसागर given in the com Samkara so restrained the organs of sense that there was no perception of anything external For the compound, see com

आत्मन्यात्मान०—व्यपगतकरण is an adv modifying पश्यत. For the comp see com, करण is the same as इन्द्रिय Here करण is to be understood in the secondary sense of 'its function' (व्यापार) All the 11 इन्द्रियs are meant here The Samkhyas add two more to these, *viz* बुद्धि and अहङ्कार *Cf* यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टति तामाहु परमा गतिम् ॥ ता योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् । Kathop II 3 10, 11 See also Bg VI 20, 25 व्यपगतकरण cannot be fitly taken as an adj to आत्मान as some suggest, for आत्मान refers to the Supreme Soul or Brahma, whose vision Siva was enjoying inwardly in his Samadhi, and this Brahma, pure spirit, unassociated with the gunas and undefin-

ed, has no *Karanas*, *Cf* the Sruti न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । &c Svet. Up VI 8 and अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥ Svet Up III 19 तत्त्वदृष्ट्या—with the eye of true knowledge, *viz* अहमेव ब्रह्मास्मि &c आत्मानमेव—The force of एव is that Siva himself being the Supreme Being could see his own self only *Cf* Kal स्वयं विधाता तपसः फलानां केनापि कामेन तपश्चचार । Kum I 57, and यस्मात्परं नापरमस्ति किंचित् । Svet Up III 9 पश्यतः —*Cf* तदा द्रष्टुः स्वरूपेऽवस्थानम् । Pat Yo Su I 3

शून्येक्षण &c—शून्येक्षण is the non perception of anything external, तेन घटित brought about य लय the continued resting of the mind (*cf* आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् । Bg. VI 25) तेन ब्रह्मणि लग्न concentrated on ब्रह्मन्—समाधि—Remaining lost in meditation (a sort of psychic trance) The following from Kum. III will serve as a com[illegible] the description of Siva's *samadhi* here—पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं संनमितोभयांसम् । उत्तानपाणिद्वयसंनिवेशात्प्रफुल्लराजीवमिवाङ्कमध्ये ॥ + + + नेत्रैरविस्पन्दितपक्ष्ममालैर्लक्ष्यीकृतघ्राणमधोमयूखैः ॥ अवृष्टिसंरम्भमिवाम्बुवाहमपामिवाधारमनुत्तरङ्गम् । अन्तश्चराणां मरुतां निरोधान्निवातनिष्कम्पमिव प्रदीपम् ॥ मनो नवद्वारनिषिद्धवृत्ति हृदि व्यवस्थाप्य समाधिवश्यम् । यमक्षरं क्षेत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम् ॥ 45—50

समाधिः पातु वः—The literal meaning is समाधिनिष्ठः शिवो वः पातु Siva is often described as given to meditation, probably because, as Wilson thinks, in some of the Puranas especially those of a Saiva character, the origin of Yoga is ascribed to Siva who taught it in the person of Sveta on the Himalaya mountains in the beginning of the Kali age.

"This benediction alludes to the practices and notions of योग, in which, by abstract meditation (समाधि), the fusion (लय) of individual with universal spirit (ब्रह्मन्) is to be effected even in the body Spirit is said to be detached from the *Karanas*, the thirteen products of matter, or महत् intellect, अहंकार, consciousness, and the eleven organs of sense and action The mode of effecting this union is by sitting in particular *asanas* or postures, one of which is sitting on the hams with a cloth fastened round the knees and back (पर्यङ्क-बन्ध-ग्रन्थि), also by suppression of breath (प्राणावरोध), by keeping the vision directed either on

vacuity or inwardly (शून्येक्षण), and by preventing as vigilantly as possible the wanderings of the senses " W.

P 7. नीलकण्ठ —Siva so called after the colour of his throat was changed to a dark-blue in consequence of his having drunk the deadly poison produced at the churning of the ocean for the the obtaining of Amrita. श्यामाम्बुदोपम —The throat is compared to a dark cloud because both relieve the सताप (torment—heat) of the people. The fig. is लुप्तधर्मोपमा as the common quality is not mentioned गौरीभुजलता—The word गौरी is used in preference to शिवा or so, to give prominence to her गौरत्व which bears out the comparison to विद्युल्लता The second sl is written by the poet very probably in order to suggest partly the subject-matter of the plot as required by a cannon of dramaturgy ('अर्थत शब्दतो वाऽपि मनाक्काव्यार्थसूचनम्'). Thus the casting of the arm of Gauri round Siva's neck suggests the love between Charudatta and Vasantasena, while the reference to नीलाम्बुद is meant to indicate the visit of Vasantasena to Charudatta amidst rain and flashes of lightning. The contrast between white and blue also further suggests the dark ways of the world, as exemplified by the conduct of Samsthanaka, and the joys of pure love as in the case of Vasantasena The Nandi here consists of eight *padas* (*pada* referring to the line of a sloka ) It is of the Pattravali kind, since the casting of the seed of the plot is indirectly suggested in it *Cf* यस्या बीजस्य विन्यासो ह्यभिधेयस्य वस्तुन । श्लेषेण वा समासोक्त्या नान्दी पत्रावलीति सा ॥ Sah -Dar

नान्द्यन्ते—नन्दन्ति देवता अस्यामिति नान्दी that in which the gods take delight It contains the praise of some deity, or Brahmanas or a king &c , combined with a benediction See definition given in the com , or नन्दयति इति नन्द , नन्द् cau and अ (अच्), नन्द एव नान्द by adding अण् ( अ ) स्वार्थे, and by adding ई ( fem ) we get नान्दी.

नान्द्यन्ते सूत्र०—It is the Sutradhara who recites the Nandi here Bharata says that the Sutra should repeat the Nandi employing a middle tone But the word सूत्रधार is not placed before the introductory sloka, because it contains a benediction and forms no part of the drama itself, being the last part of the पूर्वरङ्ग The Sutra was generally a Brahmana and recited the Nandi in his

